University of Mysore

Oriental Library Publications

SANSKRIT SERIES No. 62

# अलङ्कारमणिहारः

श्रीमद्भिः श्रीकृष्णब्रह्मतन्त्र परकालसंयमीन्द्रैः प्रणीतः

तृतीयो भागः

---

THE

# ALANKARA-MANIHARA

BY

Sri Krishna-Brahmatantra Parakala Swamin

PART III.

EDITED BY

DR. R. SHAMA SASTRY, B.A., PH.D., M.R.A.S.,

*Curator, Government Oriental Library, Mysore, Director of Archæological Researches in Mysore, Periodical Lecturer to the Post-Graduates Classes of the Calcutta University, and B.B.R.A.S. Campbell Memorial Medalist.*

PRINTED AT THE GOVERNMENT BRANCH PRESS

1923.

# विषयानुक्रमणिका

# शुद्धिपत्रम्.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| 2 | 7 | भवति | भजति |
| 14 | 9 | अन्य | अन्ये |
| 39 | 14 | योगन | योगेन |
| 47 | 14 | तैवि | तैर्वि |
| 50 | 10 | आम | आत्म |
| 50 | 17 | भूवा | भूत्वा |
| 50 | 18 | शौर | शौरे |
| 66 | 12 | व्यव | व्यव |
| ,, | ,, | व्यथा | व्यवथा |
| 77 | 7 | स्युर्मी | स्युर्मी |
| 79 | 11 | क्रेश्यन् | क्लश्यन |
| ,, | 15 | तानि: | तानि |
| 80 | 5 | अहिर्बु | अहिर्बु |
| ,, | ,, | त्वच | त्वच |
| ,, | 6 | मुपावं | मुपाया |
| 82 | 11 | यमुना | यामुना |
| ,, | ,, | प्स्ममहि | प्स्महि |
| 102 | 1 | भर्ग | भंग |
| 108 | 23 | म्यन्यं | म्यन्तं |
| 114 | 18 | न्यथा | अन्यथा |
| 115 | 5 | काहळी त्व | काहळीत्व |

| पुटे. | पङ्क्ती. | अशुद्धम्. | शुद्ध. |
|---|---|---|---|
| 115 | 13 | कठिनन | कठिनेन |
| 119 | 4 | मरू | मरूप |
| 126 | 13 | स्र्मयते | स्मर्यते |
| 132 | 2 | महिल | महिळे |
| 171 | 2 | क्रुतिपक्षी | कृति पक्षी |
| 188 | 7 | उको | उक्तो |
| 194 | 12 | त्वेन ष | त्वेन प्र |
| ,, | 18 | संपद | संपदम् |
| 199 | 17 | प्रष्ठ | षष्ठ |
| 200 | 5 | छोया | छोऽयं |
| ,, | ,, | न लघू | नलघू |
| 207 | 1 | युल्लस | त्युल्लस |
| 216 | 8 | क्रामिक | क्रमिक |
| 229 | 14 | कृत्तिद्ध | कृत्तद्धि |
| ,, | 20 | इत्यद | इत्याद |
| 233 | 16 | सम्रदा | संप्रदा |
| 291 | 14 | पात्येति | पाल्याति |
| 329 | 4 | स्त्रौर्या | स्त्रीयाँ |



श्रीः

# अलङ्कारमणिहारे तृतीयभागप्रारम्भः.

## अथ सारालङ्कारसरः (५१)

**सैवोत्तरोत्तरोत्कर्षे सार इत्युच्यते बुधैः ॥**

सैव शृङ्खला पूर्वपूर्वापेक्षया उत्तरोत्तरमुत्कर्षवर्णने सारालङ्कार इत्युच्यते। अयमेवोदारालङ्कार इति सर्वस्वकृता व्यवह्रियते। तथाच तदीयं लक्षणं— "उत्तरोत्तरमुत्कर्षणमुदारः" इति। इमं चालङ्कारमेकानेकविषयत्वेन द्विविधमामनन्ति। एकविषयतायामवस्थाभेदाश्रयणमावश्यकं, उत्कर्षस्य भेदनियतत्वात्। न ह्यवस्थादिकं भेदं विना किंचिदपि वस्तु स्वापेक्षया स्वयमधिकं भवितुमीष्टे। तत्राप्युत्तरोत्तरमुत्कर्षः स्वरूपेण धर्मेण वा भवतीत्यस्य चातुर्विध्यमिति विमर्शनीकारः॥

तत्र एकविषये स्वरूपेणोत्तरोत्तरोत्कर्षो यथा—

**सोऽव्यात्त्रिविक्रमोऽस्मान्यस्योडुततिः क्रमेण वृद्धिं भजतः। आदौ वज्रवतंसो मुक्ताहारस्ततोऽथ मणिकाञ्च्यासीत् ॥ ११०७॥**

अत्र एकस्यैव भगवतस्तत्तदवस्थाविशिष्टतया स्वरूपेणोत्तरोत्तरमुत्कर्षः॥

यथावा—

उदयंस्त्वत्पदरुचिभाग्विगलितबाल्योऽथ कनककटकश्रीः। प्रौढश्चूडामणिना क्रीडां द्युमणिस्तनोति तव भगवन् ॥ १४०८ ॥

यथावा—

बालस्तव पदनखरुचिमथेन्दुरर्धस्समेति फालतुलाम्। संपूर्णो मुखलक्ष्मीं भवति हि शुचिरुत्तरोत्तरोत्कर्षम् ॥ १४०९ ॥

अत्र पूर्वपूर्वावस्थाविशिष्टाभ्यां सूर्याचन्द्रमोभ्यां उत्तरोत्तरावस्थाविशिष्टयोरेवोत्कर्ष उक्त इत्येकाविषयत्वम्। अयमर्थान्तरन्यासशिरस्क इति विशेषः ॥

बलियज्ञभुवं व्रजतस्स्थलकमलमिव व्यभात्तवोपेन्द्र पदम्। उत्क्षिप्तमथ छत्रं सुत्राम्णोऽथ च महद्वितानं जगताम् ॥ १४१० ॥

अत्र भगवच्चरणस्य पूर्वावस्थायां स्थलकमलवदल्पपरिमाणस्यैव सतः छत्रादिवदुत्तरोत्तरमहत्त्वावस्थाविशिष्टतया उत्कर्ष उक्त इत्येकविषयत्वम् ॥

धर्मेण यथा—

दीप इवादौ दव इव ततोऽथ युगविगमरविरिवोज्ज्वलितः। ग्रसति स्म ते प्रतापो विराधमारीचदशमुखान्भगवन् ॥ १४११ ॥

अत्रैकस्यैव भगवत्प्रतापस्य उज्ज्वलितत्वरूपधर्मपुरस्कारेणोत्तरोत्तरोत्कर्षः ॥

यथावा—

अङ्कुरिता पल्लविता कोरकिता कुसुमिता च मम भक्तिः । क्रमतस्त्वयि मधुसूदन महती भूत्वा प्रसौति फलमनघम् ॥ १४१२ ॥

अत्रैकस्या एव भक्तेः महत्त्वधर्मपुरस्कारेणोत्तरोत्तरोत्कर्षो निबद्धः ॥

यद्यत्रैकस्मिन्नाश्रये क्रमेणानेकाधेयास्थितिरूपः पर्यायालङ्कारोऽत्र प्रतीयते, तर्हि प्रतीयतां नाम । न हि तावता पूर्वपूर्वापेक्षया उत्तरोत्तरोत्कर्षरूपस्सारो गळहस्त्यते ॥

अनेकविषयस्स्वरूपेणोत्कर्षो यथा—

रजताचलमूर्धनि यस्तन्मूर्धनि याऽस्ति साऽपि यत्पदजा । सोऽपिच यत्पदलाक्षालक्षितवक्षा जयत्यसौ लक्ष्मीः ॥ १४१३ ॥

अत्रानेकेषां स्वरूपेण पूर्वपूर्वापेक्षया उत्तरोत्तरमुत्कर्षः ॥

धर्मेण यथा—

प्राणिषु मनुजाश्श्रेष्ठा मनुजेषु ब्राह्मणा बुधास्तेषु । त्वच्चक्रलाञ्छितास्तेष्वच्युत तेषु त्वदङ्घ्रिदत्तभराः ॥ १४१४ ॥

यथावा—

अज्ञाद्ग्रन्थी श्रेयांस्तस्मात्तद्धारणे कृती तस्मात्।
ज्ञानी तस्माद्व्यवसितमतिस्ततोऽप्यच्युत स्वरूपज्ञः ॥ ११५ ॥

तद्धारणे कृती ग्रन्थधारणं कृतवानित्यर्थः । कृतशब्दात् 'इष्टादिभ्यश्च' इति कर्तरि इनिः । 'क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम्' इति कर्मणस्तद्धारणशब्दात्सप्तमी । ग्रन्थिनः ग्रन्थाध्ययनकृतः । अनयोरुदाहरणयोः मनुजप्रभृतीनां ग्रन्थिप्रभृतीनां च श्रैष्ठ्यरूपधर्ममुखेनोत्तरोत्तरोत्कर्षः । अनयोश्चाद्य उदाहरणे—

भूतानां प्राणिनश्श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराश्श्रेष्ठा नरेषु ब्राह्मणास्स्मृताः ॥

इत्यादिमनुवचनच्छाया पुरस्कृता । द्वितीये तु—

अज्ञेभ्यो ग्रन्थिनश्श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनश्श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥

इति मनुवचनक्रम उक्त इति ध्येयम् । अयं सर्वोऽपि श्लाघ्यधर्मोत्कर्षः ॥

अश्लाघ्यधर्मोत्कर्षो यथा—

मलिनो महिषस्तस्माद्बलिभुक्तस्माच्च तिमिरनिकुरुम्बम् । मम हृदयं तस्मादपि विमलयसि यदीदमीश्वरोऽसि त्वम् ॥ ११६ ॥

उभयरूपो यथा—

अवनितलं विपुलतमं गगनं तस्मात्ततोऽपि

जगदण्डम् । तस्माद्गर्ताम्बु ततोऽप्यघं मम हरे कथं हरेरेतत् ॥ १४१७ ॥

हरेः हृञो लिङ् मध्यमैकवचनम् । अत्र गर्ताम्बुपर्यन्तेषु विपुलतमत्वं श्लाघ्यो धर्मः । प्रकृतार्थे त्वघे अश्लाघ्यः ॥

अत्रेदमवधेयम्—एकविषये शृङ्खलाया अचारुतया तदनुप्राणितस्सारो न चारुतां लभते, तस्यास्स्वाभाविकभेदापेक्षित्वेनावस्थादिकृतभेदे अनुल्लासात् । अतएवास्मिन्विषये वर्धमानकनामालङ्कारोऽन्यैरभ्युपगतः । तल्लक्षणं च 'रूपधर्माभ्यामाधिक्ये वर्धमानकम्' इति कृतम् । तस्मात्कारणमालादिर्यथा शृङ्खलैकविषया, न तथा सारश्शक्यो वक्तुम्, एकविषये अलङ्कारान्तराभ्युपगमप्रसङ्गात् । 'सारो गुणस्वरूपाभ्यां वैशिष्ट्ये पूर्वपूर्वतः' इति तु लक्षणं सारस्ययुक्तम् । गुणस्वरूपाभ्यां पूर्वपूर्ववैशिष्ट्ये सार इति तदर्थः । स च कचिच्छृङ्खलानुप्राणितः, कचित्स्वतन्त्र इत्यनेकविषयत्वमेकविषयत्वं च सुस्थम् । एवं शृङ्खलाविषयाणामलङ्काराणां विच्छित्तिवैलक्षण्यस्यानुभवसिद्धत्वात्पृथगलङ्कारत्वे सिद्धे शृङ्खलाया विरोधाभेदसाधर्म्यादिवदनुप्राणयितृतैवोचिता न पृथगलंकारता । तथात्वे अभेदादीनामपि पृथगलंकारतापत्तेः । पूर्णालुप्तादौ तु न विच्छित्तिवैलक्षण्यं, अपितूपमाविच्छित्तिरेवेति संप्रदायः । ननु केयं विच्छित्तिः? उच्यते—अलंकाराणां परस्परविच्छेदस्य वैलक्षण्यस्य हेतुभूता जन्यतासंसर्गेण काव्यनिष्ठा कविप्रतिभा, तज्जन्यत्वप्रयुक्ता चमत्कारिता वा विच्छित्तिरिति गृह्यताम् ॥

इत्यलङ्कारमणिहारे सारसरः एकपञ्चाशः.

---

## अथ यथासंख्यालङ्कारसरः. (५२)

उद्देशक्रमतोऽर्थानां संबन्धो यत्र कथ्यते।
प्राञ्चस्तत्र यथासंख्यमपरे क्रममूचिरे ॥

यथासंख्यमिति पदार्थानतिवृत्तिरूपे यथार्थेऽव्ययीभावः। संख्याया अनतिवृत्तिश्च आद्यस्याद्येनैव द्वितीयस्य द्वितीयेनैवेत्यादिक्रमेण सम्बन्धो भवतीति योगार्थ एवं लक्षणम्। अन्ये एनं यथासंख्यं क्रमालङ्कार इति व्यवाहार्षुः। स च शाब्दः आर्थश्चेति द्विविधः। तत्रासमस्तानामसमस्तैः क्रमेणान्वये शाब्दः, क्रमिकसम्बन्धस्यातिरोहितत्वात्। यत्र तु समुदायद्वयस्य समासेनाभिधाने सति प्रथममेकस्य समुदायस्यापरेण समुदायेन सामान्यतस्समन्वये सति पश्चादर्थानुगमपर्यालोचनया तत्समुदायिनां क्रमेण संवन्धस्तत्रार्थः ॥

यथा—

विष्णो विनतजनानां तृष्णां हृदयं सुखं च दुःखं च। प्रुष्णासि प्लुष्णासि च पुष्णासि वृषाद्रिनाथ मुष्णासि ॥ १४१८ ॥

हे वृषाद्रिनाथ विष्णो! विनतजनानां तृष्णां प्रुष्णासि पूरयसि। हृदयं प्लुष्णासि सेवसे। तत्र वससीत्यर्थः। स्वस्मिन् स्नेहयसीति वा। 'प्रुष प्लुष स्नेहनसेवनपूरणेषु' इति क्र्यादिकाभ्यां धातुभ्यां लट्। सुखं पुष्णासि दुःखं मुष्णासि च

'पुष पुष्टौ' 'मुष स्तेये' इमावपि क्रैयादिकावेव। अत्र प्रुष्णासीत्यादिक्रियाणां क्रमेण तृष्णादिष्वन्वयः। इह शाब्दः, असमस्तानामसमस्तैःक्रमेणान्वयात्॥

यथावा—

नयनरुचा वदनरुचा कमलं विमलांशुबिम्बमपि कमले। नूनं जितं भवत्या जलं निविशते महाबिलं चापि॥ १४१९॥

महाबिलं महत्सुषिरं अन्तरिक्षंच। 'मेघद्वारं महाबिलम्' इत्यमरः। इदमपि शाब्दं उत्प्रेक्षागर्भं, पूर्वं तु शुद्धमिति विवेकः॥

यथावा—

यौ श्रीकाळीभक्तौ सुरपोऽत्राद्यः परस्सुरापो भविता। भास्वत्तमोऽथ मत्तस्स्वभास्तदाकारविप्रतीपो यदयम्॥ १४२०॥

यौ श्रीः लक्ष्मीः काळी दुर्गा तयोः भक्तौ उपासकौ, अत्र अनयोर्मध्ये, आद्यः श्रीभक्तः सुरान्पातीति सुरपः देवाधीशः तत्तुल्यो वा अत एव भास्वत्तमः अतिशयेन भास्वान् महातेजश्शाली च भविता। परः काळीभक्तस्तु सुरापः सुराणां देवानां नपातीत्यपः देवारक्षक इत्यर्थः। सुरां पिबतीति तथोक्तः मद्यप इति तत्त्वम्। काळिकोपासकानां वामाचारस्य प्रसिद्धत्वादिति भावः। क्रमेण 'पा रक्षणे, पा पाने' इति धात्वोः 'आतोऽनुपसर्गे' इति कः। अत एव मत्तः मदशाली। अवि-

द्यमाना भाः यस्य अभाः सुष्ठु अभाः स्वभाः अतिवेलतेजो- हीन इत्यर्थः। न हि सुरापस्य ब्रह्मतेजो भवेदिति भावः। मत्त- श्चासौ स्वभाश्चेति विशेषणोभयपदकर्मधारयः। कुतोऽनयोर्वैष- म्यमित्यत आह—तदाकारेति। यत् यस्मात् अयं चरमनिर्दिष्टः काळीभक्तः तदाकारविप्रतीपः तदाकारस्य प्रथमनिर्दिष्टश्रीभक्ता- कारस्य तदाचारस्येति यावत् विप्रतीपः प्रतिकूलः सदाचार- वामाचारयोरतिविप्रकर्षादिति भावः। पक्षे—अयं सुराप इति शब्दः तदाकारविप्रतीपः तस्य सुरपशब्दस्य आकारेण आव- र्णेन मध्यस्थेनेति भावः। विप्रतीपः विरुद्धरूपः। मध्ये आवर्ण- सद्भावात्सुरपशब्दविरुद्धरूप इति भावः। एवं अयं मत्तस्व- भाश्शब्दः तदाकारस्य भास्वत्तमशब्दस्वरूपस्य विप्रतीपः प्रति- लोमः। भास्वत्तम इति शब्द एव प्रातिलोम्येन दृष्टो मत्त- स्वभा इति निष्पद्यत इत्यर्थोऽपि चमत्कारातिशयं पुष्णाति। अत्रापि शाब्द एव। पूर्वस्माद्वैलक्षण्यं तु स्फुटमेव॥

यथावा—

**अम्ब त्वदाश्रितानामितरेषामपि शरीरिणां भ- वति। विपुलैश्वर्यं विरलैश्वर्यं चात्रास्ति पुरत एव भिदा॥ १४२१ ॥**

विपुलैश्वर्यं भूमीश्वरत्वं विरलैश्वर्यं अल्पविभवः। अत्र अनयोः त्वदाश्रितेतराश्रितयोः तद्विभवयोर्वा। पुरतः अग्रत एव भिदा भेदः अस्ति। स्पष्टमेव प्रकाशत इत्यर्थः। पक्षे अत्र विपुलैश्वर्यविरलैश्वर्यशब्दयोः पुरत एव पुवर्णरवर्णाभ्यामेव भिदे- त्यर्थोऽपि चमत्कारी। अत्रापि शाब्द एव॥

अर्थे यथासंख्यं यथा---

जलरुहजलनिधिवसती हृदयोज्ज्वलरत्नहारवनमालौ। हृत्सौधे सध्र्यञ्चौ प्राञ्चौ जायापती विहरतां नः॥ १४२२ ॥

अत्र जलरुहजलनिधिवसती इत्यादिसमुदायस्य प्रथमं जायापतिरूपसमुदायान्वये सति पश्चादर्थानुरोधेन जलरुहादेर्जायायां जलनिध्यादेः पत्यौ च समन्वयधीरित्यार्थो यथासंख्यालंकारः॥

यथावा—

तावकमतिविभवाभ्यां बृहस्पतिदिवस्पती समं विजितौ। बृहदिव वैलक्षण्यं प्रकाशयेते मिथस्तदप्येतौ॥ १४२३ ॥

बृहस्पतिदिवस्पती गुरुसुत्रामाणौ। तावकानां भागवतानां मतिविभवाभ्यां समं तुल्यं विजितौ। तदपि विजितत्वतौल्येऽपि एतौ बृहस्पतिदिवस्पती मिथः अन्योन्यं वैलक्षण्यं भेदं बृहदिव महदिव प्रकाशयेते विजितत्वरूपेणावैलक्षण्येऽपि तत्‌ महदिव दर्शयेते इत्यर्थः। यद्वा इवशब्दो वाक्यालंकारे। गुरुशिष्यत्वरूपं महद्वैलक्षण्यं दर्शयेते इति हृदयम्। पक्षे बृहस्पतिदिवस्पतिशब्दौ बृह दिव इति वर्णाभ्यामेव वैलक्षण्यं प्रकाशयेते। न त्वन्यवर्णैः इत्यर्थः। अत्रापि पूर्ववदेव सर्वं, शब्दपरार्थान्तरवर्णनं तु विशेषः॥

यथावा—

दशवदनविभीषणयोर्देव त्वत्प्रातिकूल्यसख्यजु-

## षोः । भवतस्स्म शोषशेषौ भगवंस्तत्प्रकृतिगुणभिदावशतः ॥ १४२४ ॥

हे देव भगवन्! त्वत्प्रातिकूल्यसख्यजुषोः दशवदनविभीषणयोः शोषशेषौ भवतः स्म अभूताम् । रावणस्य शोषः विभीषणस्य शेष इति भावः । शुषशिषोर्भावे घञ् । तत्र हेतुमाह—तदिति । तयोः दशवदनविभीषणयोः प्रकृतिगुणानां स्वभावसिद्धगुणानां 'दम्भो दर्पोऽभिमानश्च' इति, 'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः' इति च गीतानां आसुरसंपद्गुणानां दैवसंपद्गुणानां च भिदावशात् भेदवशात् भवतः स्मेति योजना । भवतेः स्मयोगेन भूते लट् । आसुरसंपदभिजाततया भगवत्प्रातिकूल्येन दशाननस्य नाशः । दैवसंपदभिजाततया तत्सख्येन विभीषणस्यायुरादिश्रेयस्वत्तया पारिशेष्यं चाभूतामित्यर्थः । पक्षे प्रकृती प्रत्ययविधावुद्देश्यभूते धातुरूपे । तयोः गुणौ तद्भिदावशतः घञ्निमित्तकतया 'पुगन्तलघूपधस्य' इति विहितगुणयोश्च भेदवशादित्यर्थः । शुष् शिष् इति प्रकृती भिन्ने तयोर्गुणौ ओकारैकारलक्षणौ च भिन्नौ तादृशभेदवशात् शोष इति शेष इति शब्दौ निष्पन्नाविति भावः । अन्यत्तुल्यं पूर्वेण ॥

अत्रेदं विवेचनीयं—इदं यथासंख्यमलंकारसरणिमाढौकितुमीष्टे वा न वेति । न ह्यस्मिन् लोकसिद्धे कविप्रतिभानिर्मितत्वस्यालंकारताजीवातोर्मात्रयाऽप्युपलम्भोऽस्ति । येनालंकारव्यपदेशो मनागपि सांप्रतं स्यात् । अतः अपक्रमत्वरूपदोषाभाव एव यथासंख्यम् । एवंचोद्भटमतानुयायिनामुक्तयः कूटकार्षापणवदमनोहारिण्य एव । एतेन यथासंख्यमेव क्रमालंकारसंज्ञया व्यवहरतो वामनस्यापि गिरो व्याख्याता इति नव्याः ॥

इत्यलंकारमणिहारे यथासंख्यसरो द्विपञ्चाशः.

# अथ पर्यायालंकारसरः (५३)

अधेयस्य क्रमादेकस्यानेकाधारसंश्रयः ।
वर्ण्यते यत्र तत्रोक्ता पर्यायोऽयमलंकृतिः ॥

यत्रैकमाधेयमनेकस्मिन्नाधारे क्रमात् स्वतो भवति कविना वा निबध्यते तत्र पर्यायालंकारः। अत्र 'अन्तर्बहिः पुरः पश्चात्सर्वदिक्ष्वपि सैव मे' इति विशेषालंकारव्यावृत्तये क्रमेणेति। तत्र ह्याधेयस्य युगपदनेकाधारसंबन्ध इति नातिप्रसङ्गः। अत एव क्रमाश्रयणात्पर्याय इत्यन्वर्था संज्ञा। अस्य च प्रयोजकाभिधानानभिधानाभ्यां द्वैधी ॥

यथा—

दुग्धोदन्वति पूर्वं मुग्धेन्दौ तदनु विदधती वासम्। अधुना तु सुधा निवसति मधुनाशन तावकीनचरितेषु ॥ १४२५ ॥

अत्रैकस्यास्सुधायाः क्रमेण दुग्धोदन्वदाद्यनेकाधारसंश्रयणं निबद्धम्। तत्र दुग्धोदन्वन्मुग्धेन्द्वोस्सुधायास्स्थितिर्वस्तुसत्येवोक्ता। वर्णनीयभगवच्चरितेषु तु कविना परं निबद्धा। यत्राधाराधेयतत्संबन्धक्रमेषु क्वचिदपि वा कविकल्पनापेक्षाऽस्ति तत्रैवायमलंकारः। यत्र तु सर्वांशे लोकसिद्धत्वं न तत्र कश्चिदलंकार इति तु तत्त्वम् ॥

यथावा—

चिन्तामणिस्सुधाब्धेस्सुधाशनाधिपपदे निधाय

पदम् । वाताशनगिरिशिखरे जातावासो रमानि-
वासात्मा ॥ १४२६ ॥

अत्र प्रयोजकानभिधानं स्पष्टम् ॥

तदभिधाने यथा—

प्रवरा मौक्तिकमणयः प्रवाळमतिरुचिरममृत-
सारश्च । वारिधिना स्वसुताया वदने वात्सल्यतो
न्यधायिषत ॥ १४२७ ॥

अत्र वारिधिना वात्सल्यत इति प्रयोजकनिर्देशः । अत्रोत्तममुक्ताफलादीनामर्णवलक्ष्मीवदनरूपानेकाधारनिवेशनम् । अर्णवस्याधारता आर्थी । पूर्वोदाहरणेषु तु सा शाब्दी । इयं रदनादीनां मुक्ताफलादिकत्वेनाध्यवसानाद्रूपकातिशयोक्त्यनुप्राणिता चेति विशेषः ॥

यथावा—

विद्रुमगतमारुण्यं विधिना तव दशनवसन-
योर्न्यस्तम् । तदनु पदनलिनयुग्मे स्वप्रौढिप्रथन-
कुतुकतोऽब्धिसुते ॥ १४२८ ॥

अत्रापि विधिना स्वप्रौढिप्रथनकुतुकत इति प्रयोजकनिर्देशः । अयं सर्वोऽपि संकोचविकासास्पृष्टतया शुद्धपर्यायः॥

संकोचपर्यायो यथा—

जगदखिलं व्याप्य पुरा जरदिभमुख्येष्वथ
क्वचिल्लग्ना । अगणितगुण तव करुणा निगळितच-
रणा किलाद्य मय्येव ॥ १४२९ ॥

इदं स्वस्मिन्नेव भगवतो भूयसी कृपेत्यभिमन्यमानस्य कवेर्वचनम्। अत्र करुणाया उत्तरोत्तरमाधारसङ्कोचात्सङ्कोचपर्यायोऽयम् ॥

यथावा—

परमेष्ठिपदान्महतो गिरिशजटाजूटकोटरे लग्ना। अरविन्दवासिनि ततो लीना मन्दस्मितेऽम्ब तव गङ्गा ॥ १४३० ॥

अत्र गङ्गाया उत्तरोत्तरमाधारसङ्कोचः। अतिशयोक्त्यनुप्राणितत्वमुभयत्र तुल्यम्। पूर्वमुदाहरणमुत्प्रेक्षाशिरस्कं, इदं तु वक्ष्यमाणमीलितशिरस्कमिति भिदा ॥

विकासपर्यायो यथा—

अम्ब यदैश्वर्यं त्वयि संबन्धात्तव तदम्बुजाक्षेऽपि। संबद्धं किं बहुना त्र्यम्बकमुखसुरकदम्बकेऽपि ततः ॥ १४३१ ॥

अम्बुजाक्षे भगवति श्रीनिवासे। अत्रैश्वर्यस्य पूर्वपूर्वाधारापरित्यागेनैवाधारान्तरसंक्रमणम्। विकासपर्यायोऽयम् ॥

यथावा—

वक्षस्यैवैक्ष्यत ते कौस्तुभसौवस्तिके कठोरत्वम्। एतर्हि पातकान्मम चेतस्यपि दैत्यशातनोदीतम् ॥ १४३२ ॥

हे दैत्यशातन दैत्यारे! इदं संसारभारनिर्विण्णस्य कवेर्भगवन्तं प्रत्युपालम्भवचनम् । अत्रापि पूर्ववदेव विकासपर्यायः । कठोरत्वशब्दप्रतिपाद्यकाठिन्यनैर्घृण्यरूपार्थद्वयश्लेषनिर्व्यूढत्वं विशेषः ॥

अत्र रसगङ्गाधरकृत् —"एकसंबन्धनाशोत्तरमपरसबन्धे सत्येव लोके पर्यायपदप्रयोगदर्शनात् 'श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः' इति प्रकाशोदाहृते तथैव दृष्टत्वाच्च ।

बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि दृश्यते ॥

इत्यत्र पर्यायकथनमयुक्तम्" इत्यभाणीत् । अन्ये तु प्रकाश एव 'बिम्बोष्ठे' इति पद्यस्योदाहरणेन पर्यायस्य समर्थनात् अलङ्कारशास्त्रपरिभाषितानां शब्दानां लोकव्यवहारविसंवादस्याकिंचित्करत्वाच्च तदुक्तमचतुरश्रमेवेति वदन्ति ॥

**क्रमादाधार एकस्मिन्नाधेयानेकताऽपि सः ।**

एकस्मिन्नाधारे क्रमादनेकाधेयवर्णनं च पर्याय इत्यर्थः । वक्ष्यमाणसमुच्चयालङ्कारवारणाय क्रमादिति । तत्र हि गुणक्रिययोर्यौगपद्येनान्वयः । विनिमयाभावात्परिवृत्तिवैलक्षण्यम् । तस्याः विनिमयो लक्षणत्वेनानुपदमेव वक्ष्यते ॥

यथा—

**भवजलनिधिचिन्तनतो भयचकितः पूर्वमथ सुनिर्विण्णः । त्वद्गुणगणगणनादथ धीरो विन्दामि माधवानन्दम् ॥ १४३३ ॥**

हे माधवेति संबुद्धिः । अत्र प्रथमं भयचकितत्वं अथ निर्वेदः ततो धैर्यं अनन्तरमानन्द इत्येकस्मिन्नेवाधारे क्रमादनेकाधेयवर्णनम् ॥

यथावा

देहात्मभ्रमवान् प्रागथ स्वतन्त्रात्मधीस्ततो भगवन्। त्वदितरशेषभ्रमवानधुना मन्ये त्वदेकशेषं माम् ॥ १४३४ ॥

स्वतन्त्रात्मधीः स्वतन्त्रात्मभ्रमवान्। त्वदन्येषां पित्रादीनां देवतान्तराणां वा शेष इति भ्रमवान्। अत्र देहात्मभ्रमस्वतन्त्रात्मभ्रमान्यशेषत्वभ्रमभगवदेकशेषत्वानामनेकेषामाधेयानां क्रमादेकस्मिन्नाधारे निबन्धनम् ॥

यथावा—

आदौ तमसा मलिनं गुरुकृपया विशदमथ च हरितत्वम्। अधिगम्य तत्र रक्तं हृदयं मम चित्रमेतदब्जाक्ष ॥ १४३५ ॥

अत्रादौ मालिन्यं अज्ञानं नैल्यं च। अथ वैशद्यं ज्ञानप्रकाशः धावल्यं च। अनन्तरं हरितत्वप्राप्तिः भगवद्याथात्म्यानुकर्षः, हरिद्वर्णत्वं च। अथ रक्तता भगवति प्रीतिः आरुण्यं चेत्येकस्मिन्नाधारे क्रमेणानेकाधेयवर्णनम्। चित्रं आश्चर्यमिदं शबलवर्णं चेत्यप्युपस्कार्यम्। पूर्वोदाहरणं शुद्धम्। इदं तु श्लेषसंकीर्णं तमसेत्यादिना उपात्तप्रयोजकं चेति विशेषः ॥

यथावा—

हन्त परस्वस्तैन्यप्रवेशधीरो भवन्नरो भगवन्। दृष्टोऽवितस्त्वया चेत्परस्वसैन्यप्रवेशधीरस्स्यात् ॥

त्वया दृष्टः कटाक्षितः। अवितः रक्षितश्च। पक्षे वित इति छेदः। विगततकार इत्यर्थः। दृष्टश्चेति योजना। परस्वस्तै-

न्यप्रवेशधीरशब्दस्तकारविगमे परस्वसैन्यप्रवेशधीर इति निष्पद्येतेत्यर्थः । पूर्वं स्तेन एव सन् भवत्कटाक्षवीक्षितश्शूरो भवेदिति भावः । 'शौर्यं नाम असहायस्यापि भीमे परबले स्वबल इव निर्भयप्रवेशसामर्थ्यम्' इति गद्यभाष्ये आचार्याः । तदेतदुक्तं परस्वस्तैन्येत्यादिना । परस्वस्य अन्यवित्तस्य स्तैन्ये चौर्ये प्रवेशः तस्मिन् धीरः विद्वान्, परेषां स्वेषां च सैन्ये प्रवेशः तस्मिन् धीरः धैर्यवानित्यर्थः । अत्रैकस्मिन्नेवाधारे चोरत्वधीरत्वयोः पर्यायेण वर्णनम् ॥

यथावा—

**त्वद्विश्लिष्टा सीता सुतरान्तरलत्वमेत्य दाशरथे । अथ शुभगुणवाराशिस्थिरान्तरासीत्त्वया विशिष्टैव ॥ १४३७ ॥**

हे दाशरथे ! शुभगुणवाराशिः सीता त्वद्विश्लिष्टा सती सुतरां तरलत्वं चञ्चलचित्ततां एत्य अथ अनन्तरं त्वया विशिष्टैव त्वत्संश्लेषं प्राप्तैव स्थिरान्तरा स्थिरं अन्तरं मनो यस्यास्सा तथोक्ता आसीत् । पक्षे विश्लिष्टेति शब्दव्यक्तिः सुतरा अतिशोभना अन्तः मध्ये अ त्वं अविद्यमानलकारतां एत्य शुभाः गुणानां वाराः समूहाः यस्यास्सा तथोक्ता । इदं सीताविशेषणमेव । अन्तः मध्ये शिस्थिरा शिः शिवर्णः स्थिरो यस्यां सा तथाविधा सती विशिष्टैवासीत् । विश्लिष्टाशब्दः लकारोत्सारणे शिवर्णस्थैर्ये च विशिष्टेति भवतीत्यर्थोऽपि चमत्कारी । अत्रैकस्मिन्नेव सीतारूपाधारे तरलत्वस्थैर्यरूपाधेययोः क्रमेण निबन्धः । उदाहरणद्वयेऽपि विशेषस्स्पष्ट एव ॥

इत्यलंकारमणिहारे पर्यायसरः सप्तपञ्चाशः.

# अथ परिवृत्त्यलंकारसरः (५४)

निमयः परिवृत्तिस्स्यादर्थानां स्यात्समासमैः ॥

निमयः विनिमयः । 'परिदानं परीवर्तो नैमेयनिमयावपि' इत्यमरः । समैः पदार्थैः समानामर्थानां असमैरसमानां वा विनिमयः उपादानं परिवृत्तिर्नामालङ्कारः । तत्र समपरिवृत्तिर्द्विधा उत्तमैरुत्तमानां न्यूनैर्न्यूनानां च । असमोऽधिको न्यूनश्च भवतीत्यधिकेन न्यूनस्योपादाने न्यूनेनाधिकस्योपादाने चासमपरिवृत्तिर्द्विधेत्येवं चतुर्धा परिवृत्तिः ॥

तत्राद्या यथा—

स्तुतिममृतमयीं भुजगक्षितिधरचूडामणे त्वयि समर्प्य । प्रतिलभते त्वत्तः पुनरतिवेलं मादृगमृतमेव कृती ॥ १४३८ ॥

अत्रामृतरूपस्तुतेरमृतस्य चोत्तमत्वेन समयोः परिवृत्तिः । इयममृतशब्दगतश्लेषमूलाभेदाध्यवसायनिर्व्यूढा ॥

यथावा—

आधाय कथमपि त्वयि मेधावी हृदयतरळमात्मानम् । प्रतिविन्दतेऽनघ त्वा श्रुतिसुदतीहृदयतरळमात्मानम् ॥ १४३९ ॥

मेधावी विद्वान् हृदयतरळं वक्षस्स्थनायकमणिं हृदयेन हृदये वा तरळं चपलमानसामिति तत्त्वम् । यद्वा—

आत्मानमस्य जगतो निर्लेपमजरामरम् ।
बिभर्ति कौस्तुभमणिस्वरूपं भगवान् हरिः ॥

इत्यस्त्रभूषणाध्यायोक्तक्रमेण कौस्तुभस्वरूपमिति । आत्मानं प्रत्यगात्मानं स्वम् । कथमपि अतिचञ्चलहृदयतया यत्नगौरवादित्यर्थः । त्वयि आधाय न्यस्य । श्रुतिसुदत्याः हृदये वक्षसि तरळं हारमध्यमणिवद्देदीप्यमानं श्रुतिप्रतिपाद्यमिति यावत् । आत्मानं परमात्मानं त्वां प्रतिविन्दते । 'तरळो हारमध्यस्थमाणौ ना चपले त्रिषु' इति रत्नमाला । अत्र हृदयतरळभूतयोरात्मनोरुत्तमसमयोः परिवृत्तिश्श्लेषानुप्राणिता ॥

यथावा—

**दत्वा लवमात्रमपां पुष्पमपि श्रीपते भवो भवते । लवमात्रमपां पुष्पं समुपादत्तेऽन्यदस्य को लाभः ॥ १४० ॥**

भवः शम्भुः अपां लवमात्रं कणमात्रं 'लवलेशकणाणवः' इत्यमरः । पुष्पमपि एकं कुसुममपि भवते दत्वा 'पत्रं पुष्पं फलं तोयम्' इत्युक्तरीत्या समर्प्य अन्यत् अपां लवमात्रं पुष्पं च लभते । तत्तीर्थं तन्निर्माल्यकुसुमं च विन्दते इत्यर्थः । अस्य समवस्तुदानेन समवस्तूपाददानस्य को लाभः न कोऽपि लाभ इति भावः । लवमात्रं कलामात्रं अपां पुष्पं 'चन्द्रमा वा अपां पुष्पम्' इति श्रुतेः । समुपादत्ते इति वस्तुस्थितिः । भगवदर्चनमहिम्नाऽस्य चन्द्रशेखरत्वमिति भावः । अत्राप्युत्तमत्वेन समयोः परिवृत्तिः श्लेषमूलाभेदाध्यवसायलब्धप्रसरा । यद्वा न्यूनतया समयोः परिवृत्तिरिति वक्ष्यमाणप्रभेदस्यैवदमुदाहरणं भविष्यति ॥

द्वितीयपरिवृत्तिर्यथा--

दत्वा नश्वरभौतिकतनुमीदृशभूतदेहमाददताम्।
वाराणसीजनानां नारायण को नु वा भवेल्लाभः॥

नश्वरीं भौतिकीं पञ्चभूतात्मिकां तनुम्। ईदृशं नश्वरं पञ्चभूतात्मकं च शरीरम्। वस्तुतस्तु 'पिशाचो गुह्यकस्सिद्धो भूतोऽमी देवयोनयः' इत्युक्तभूतयोनिविशेषशरीरमित्यर्थः। पाञ्चभौतिकत्वं तस्याप्यस्त्येवेति प्रागुपदर्शितार्थस्वीकारेऽपि यद्यपि विवक्षितसिद्धिर्भवत्येव । तथाऽपि अनन्तरोक्तार्थः श्लेषेण चमत्कारातिशयं पुष्णातीत्यवधेयम् । प्रसिध्यति हि वारणासीवासिनां शरीरन्यासानन्तरं भूतदेहप्राप्त्यवश्यंभावः । अत्र न्यूनत्वेन समयोर्भौतिकशरीरयोः परिवृत्तिः। श्लेषाद्यनुप्राणितत्वं च पूर्ववदेव । वाराणसीनिवासिनां त्वदभिव्यक्तिक्षेत्रपुरवासिनामिवावसाने दिव्याप्राकृतदेहलाभो न भविष्यतीति भावः॥

यथावा—

भस्मान्तवर्ष्मदानात्तादृशतनुमेव यद्गिरिशभक्ताः। आददते तद्भगवंस्तुषवितरणतः फलीकरणलाभः॥ १४२ ॥

भस्म अन्तः अन्ते वा यस्य तत् भस्मान्तं वर्ष्म गात्रं तस्य दानात्। 'अथेदं भस्मान्तꣳ शरीरम्' इति श्रुतेः 'कळेबरं विट्कृमिभस्मसंज्ञितम्' इति पुराणवचनाच्च दाहे भस्मसंज्ञितत्वं कळेबरस्येति बोध्यम् । भस्मस्वरूपमिति वा। तादृशतनुमेव भस्मान्तशरीरमेवेति न्यूनतया समयोः परिवृत्तिः भस्मना अन्तं रम्यं भस्म अन्ते अन्तिके यस्येति वेति तु तत्वम्।

'अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽपि मनोहरे' इति विश्वः। सर्वथा भस्मोद्धूळितमिति भावः। भगवद्भक्तास्तु दिव्याप्राकृतं 'शतं माल्यहस्ताः' इत्याद्युक्तप्रकारेण दिव्यमाल्यानुलेपनाभरणवसनादिब्रह्मालंकारालंकृतं रूपमेव दधते। न तु गिरिशभक्ता इव भस्मोद्धूलितां पैशाचिकीं तनुमिति भावः॥

यथावा—

**अचलदरं प्रचुरगदं विसृज्य वपुरहिमहीभृति ततोऽन्यत्। तादृग्वपुराददतो जनस्य मौग्ध्येन को न विस्मयते॥ १४४३॥**

अचलः दरः भयं शङ्खश्च यस्य तत्। प्रचुरः प्रचुरा च गदः रोगः गदा कौमोदकी च यस्य तत्तथोक्तम्। अत्रापि पूर्ववदेव न्यूनसमपरिवृत्तिः। शेषाद्रौ वपुर्विसृजतो जनस्य भगवत्सारूप्यं भवतीति भावः॥

यथावा—

**आददति साधुकृत्यां ब्रह्मविदस्तत्र दत्तसौहार्दाः। विन्दन्ति पापकृत्यां न्यस्तद्वेषास्तु तस्य ननु मनुजाः॥ १४४४॥**

साधुश्चासौ कृत्या क्रिया 'कृत्या क्रियादेवतयोः' इत्यमरः। सुकृतमित्यर्थः। एवं पापकृत्यां दुष्कृतमित्यर्थः। तत्रेत्युत्तरार्धेऽप्यन्वेति। तत्र ब्रह्मविदि। न्यस्तद्वेषाः। तस्य ब्रह्मविदः। अत्र पूर्वार्धे उत्तमसमपरिवृत्तिः। उत्तरार्धे न्यूनसमपरिवृत्तिः। इयं शुद्धा 'तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्यां द्विषन्तः

पापकृत्याम्' इति श्रुत्यर्थानुवादिनीति च पूर्वोदाहरणेभ्यो वैलक्षण्यम् ॥

दीक्षितास्तु—इमं समपरिवृत्तिं नाद्रियन्ते, किंत्वसमपरिवृत्तिमेव। तथाच तदीयं परिवृत्तिलक्षणं—'परिवृत्तिर्विनिमयो न्यूनाभ्याधकयोर्मिथः' इति ॥

तृतीयपरिवृत्तिर्यथा—

अष्टाङ्गयोगभूम्ना नाथ षडङ्गेन वा प्रपदनेन।
त्वत्तोऽपवर्गदातुः केचित्क्रीणन्ति हन्त कैवल्यम् ॥

अत्राष्टाङ्गयोगषडङ्गप्रपदनाभ्यामाधिकाभ्यां न्यूनस्य कैवल्यस्य परिवृत्तिः। कैवल्यं केवलात्मानुभवः ॥

यथावा—

दारागारापत्यश्रीराज्यादिं समर्प्य विभवं ते।
वेंकटगिरिपरिबृढ तव कैंकर्यं केऽपि हन्त विन्दन्ति ॥ १४४६ ॥

अत्राप्यधिकेन राज्यादिविभवेन न्यूनस्य कैंकर्यस्य परिवृत्तिः। इदं 'सर्वं परवशं दुःखम्' इति लोकदृष्ट्या कैंकर्यस्य न्यूनतामभिसंधायोदाहृतम्। वस्तुतस्तु दारागारादिविभवापेक्षया भगवत्कैंकर्यस्य ज्यायस्तया न्यूनेनाधिकपरिवृत्तेर्वक्ष्यमाणाया एवेदमुदाहरणं संमन्येरन् ब्रह्मवेदिनः ॥

अणुतरमात्मानं त्वयि फणिगिरिनाथार्पयन्त इह सन्तः। महतोऽपि महान्तं त्वां विहितोपाया वितन्वते क्रीतम् ॥ १४४७ ॥

'एषोऽणुरात्मा । महतो महीयान्' इति श्रुतिरत्रानुसंधेया । विहितः अनुष्ठितः उपायः भक्तिप्रपत्त्यन्यतरसाधनं यैस्ते तथोक्ताः । क्रीतं चिन्त्यते । 'भावक्रीतो जनार्दनः । भक्तिक्रीतो जनार्दनः' इत्युक्तेरिति भावः ॥

यथावा—

धानापूर्णप्रसृतेर्दानात्त्वत्तो रमापतेऽक्रीणात् ।
दीनावन मानातिगनानाविधसंपदं कुचेलमुनिः ॥

धानापूर्णप्रसृतेर्दानादित्यत्र विशेष्यभूतायाः प्रसृतेर्दानायोगात्प्रसृतिपूर्णधानादानादिति विशेषणभूतधानासु दानस्यान्वयः । स्वर्णी घस्रा इत्यादिवत् । वदन्ति हि 'सविशेषणे हि विधिनिषेधौ विशेष्ये बाधे विशेषणमुपसंक्रामतः' इति न्यायविदः । हे दीनावनेति संबुद्ध्यन्तं पदं रमापते इत्यस्य विशेषणम् ॥

यथावा—

पदसलिलमर्थी कामपि दत्वा स्रोतस्विनीं पयोनिधये । तेजस्विनीमुपादास्तस्मात्कन्यामणिं मणिं च विभो ॥ १४४९ ॥

विभो भगवन्! पयोनिधये स्रोतस्विनीं दत्वेत्यनेन अनपेक्षितदानमुक्तम् । स्रोतस्विनी नदी । अत्रोदाहरणत्रयेऽपि न्यूनेनाधिकपरिवृत्तिस्स्पष्टा । इमानि अष्टाङ्गयोगेत्यादीनि पञ्चोदाहरणानि शुद्धानि ॥

यथावा—

वसुधातनयास्तनयोस्समर्पयन् पञ्चशाखमतिकुतुकात् । ताभ्यां सहस्रशाखं प्रमोदमनुविन्दतेऽरविन्दाक्षः ॥ १४५० ॥

वसुधायाः धरणीदेव्याः तनया पद्मावती तस्याः । पञ्च शाखाः यस्य तं कञ्चिद्वस्तुविशेषं, पाणिमिति तु तत्त्वम् । सहस्रशाखं अनन्तशाखान्वितं अतिविपुलमिति तत्त्वम् ॥

यथावा—

यत्किंचिच्छदमच्युत भुवनलवं चापि तव पदे दत्वा । अधिपत्वं भुवनानामाददिरे बहुपरिच्छदं कृतिनः ॥ १४५१ ॥

यत्किंचिच्छदं तुलस्यादिदलं भुवनलवं जलकणं च तव पदे दत्वा 'पत्रं पुष्पम्' इत्युक्तरीत्या बहवः परितः छदाः दलानि यस्मिन्, पक्षे बहवः परिच्छदाः सचिवादिपरिवाराः यस्य तत्तथोक्तं भुवनानां उदकानां लोकानां च अधिपत्वं वरुणत्वमिन्द्रत्वं धातृत्वं वा आददिरे स्वीचक्रिरे । कृतिन इति विशेष्यं यत्किंचिदन्यूनवस्तुदानेनातिमात्राभ्यधिकवस्तूपादानचातुर्याभिप्रायगर्भम् । अत एवेयं श्लेषपरिकराङ्कुरोत्तेजितेति पूर्वस्माद्विशेषः पूर्वं तु श्लेषमात्रोपस्कृतम् ॥

यथावा—

श्रुतियुवतीसीमन्तप्रतिपन्नमनर्घमासितरुचिरत्नम् । श्लक्ष्णप्रवाळदानाच्छशिवदना काऽपि गोपिकाऽक्रीणात् ॥ १४५२ ॥

श्लक्ष्णः अल्पः 'श्लक्ष्णं दभ्रं कृशं तनु' इत्यमरः । यः प्रवाळः विद्रुमः तस्य, पक्षे श्लक्ष्णः स्निग्धः 'मसृणे श्लक्ष्णसोमालचिक्कणाः' इति वैजयन्ती । यः प्रवाळः तत्त्वेनाध्यवसितोऽधरः तस्य प्रदानात् । स्पष्टमन्यत् ॥

यथावा—

आकाशराजतनया राकाशशिदास्यदास्यरुचिनिचया। जगदीश्वरमक्षैषत्प्रगुणतमं कनककलशकोशाभ्याम् ॥ १४५३ ॥

प्रगुणतमं अतिशयेन ऋजुस्वभावं "ऋजावजिह्मप्रगुणौ" इत्यमरः। अनेन परकृतातिसन्धानानभिज्ञत्वं व्यञ्जितम्। कनककलशकोशाभ्यामित्यनेन हेमकुम्भन्यस्तार्थनिवहाभ्यामिति च गम्यते। अत्र श्रुतियुवतीत्युदाहरणे असितरत्नत्वेन भगवतः श्लक्ष्णप्रवाळत्वेनाधरस्य चाध्यवसानाद्रूपकातिशयोक्तिः। तदुत्तम्भिता न्यूनाधिकपरिवृत्तिः। आकाशराजेत्युदाहरणे कनककलशकोशाभ्यामिति रूपकातिशयोक्त्या उत्तम्भिता प्रगुणतममिति साभिप्रायविशेषणरूपपरिकरालंकारेण चोपस्कृता सेति विशेषः॥

एषूदाहरणेषु दानादानव्यवहारः कविकल्पित एव। न तु वास्तवः। यत्र वास्तवस्तत्र नांलकारः॥

यथावा—

अधिविपणिसरणि फणिगिरिरमणमनःप्रीणनाय सुमणिगणान्। क्रीणन्ति द्युमणिघृणीन्कतिचन कृतिनस्सुतुल्यमूल्येन ॥ १४५४ ॥

द्युमणेः घृणयो रश्मय इव घृणयो येषां तान्। अतितेजस्विन इत्यर्थः। नात्र दानादाने कविप्रतिभाकल्पिते॥

शम्बधरमणिकदम्बैः क्रीणन्त्यखिलाम्ब जाम्बवफलानि। कुरुविन्दकनिकुरुम्बैर्बिम्बानि च तावकीनगृहबालाः ॥ १४५५ ॥

बिम्बानि बिम्बीफलानि तावकीनानां त्वद्भक्तानां गृहेषु स्थिताः बालाः मुग्धललनाः माणवका वा। यद्यप्यत्र समृद्धिमद्वस्तुवर्णनात्मकोदात्तालंकारदत्तहस्ते दानादाने। अथापि न ते कविप्रतिभोन्मीलिते। क्रयस्य वास्तवत्वादिति नेदृशान्युदाहरणतामर्हन्ति॥

यदीदृशदानादानयोरपि कविप्रतिभोन्मीलितत्वमभ्युपगम्यते तदा इदमप्युदाहरणमेव, न तु अधिविपणीति पद्यवत्प्रत्युदाहरणम्॥

इत्यलंकारमणिहारे परिवृत्तिसरश्चतुःपञ्चाशः.

---

# अथ परिसंख्यालंकारसरः. (५५)

---

## एकस्यानेकसंप्राप्तौ यदेकत्र नियन्त्रणम्। परिसंख्येति तत्प्राहुरलंकाराध्वयायिनः॥

एकानेकप्रस्तावादिहास्योक्तिः। एकं वस्तु यदाऽनेकत्र युगपत्संभाव्यते तदा तस्यासंभाव्यतया द्वितीयपरिहारेणैकत्र नियमनं परिसंख्या। कस्यचित्परिवर्जनेन क्वचित्संख्यानं वर्णनीयत्वेन गणनं परिसंख्या। सा चैषा प्रथमं द्विधा शुद्धा प्रश्नपूर्विका चेति। द्विविधा चैषा आर्थी शाब्दीति पुनर्द्विविधेत्यस्याश्चत्वारः प्रभेदाः। यद्यपि पाक्षिकप्राप्तार्थनिवर्तको नियमः। युगपत्प्राप्तविषयकान्यव्यावृत्तिफलकस्तु परिसंख्येति पूर्वतन्त्रमर्यादा। तथाऽप्यस्मिन् दर्शने पाक्षिकप्रसिनित्यप्राप्तिरूपोऽवान्तरविशेषो न विवक्ष्यते, प्रयोजनाभावात्। अतएव 'पञ्च पञ्च-

नखा भक्ष्याः' इत्यत्र परिसंख्याया नियमपदेनोक्तिर्महाभाष्येऽपि दृश्यते। क्रमेणोदाहरणानि—

यद्यस्ति तव दिदृक्षा साक्षाल्लक्ष्मीविलासिनं पश्येः। इष्टा चेत्परिचर्या पर्याप्तं तं त्वमङ्ग परिचर्याः॥ १४५६॥

अत्र यदिचेच्छब्दाभ्यां निवेदितस्य रागप्राप्तस्य दर्शनादेः कर्मतायाः भगवति श्रीनिवासे विषयान्तरे च प्राप्तत्वेन लिङर्थघटितवाक्यार्थवैयर्थ्यप्रसंगाद्विषयान्तरं न पश्येरित्यादिरूपा विषयान्तरे तत्तत्क्रियाकर्मत्वव्यावृत्तिस्तात्पर्यविषयतया कल्प्यमानत्वादार्थी शुद्धा चेयम्॥

को रोगो भवयोगः को वैद्यस्स खलु यः पुमानाद्यः। किं भैषज्यं प्राज्यं यत्तन्नामानुवादसाम्राज्यम्॥ १४५७॥

अत्र भवयोगादिकमेव रोगादिकं नान्यदित्यर्थस्तात्पर्यमर्यादया प्रतीयत इत्यार्थीयं प्रश्नपूर्विका च॥

क्षेत्रं फणिवरगोत्रं स्थाने जानेऽन्यदूषरक्षेत्रम्।
देवस्स वासुदेवस्सुतरामितरस्सविग्रहमृदेव॥

अत्र ऊषरक्षेत्रसविग्रहमृत्पदाभ्यां दिव्यक्षेत्रत्वादिव्यदेवत्वव्यावृत्तिः प्रतीयत इतीयं शाब्दी शुद्धा॥

यथावा—

स्वान्तं मम मधुमथनेऽत्यन्तं विलगतु कदाचिदपि न धने। रतिरस्तु तस्य चरणेऽप्रतिमा न तु मे वृथा तपश्चरणे॥ १४५९॥

तपः कृच्छ्रचान्द्रायणादिः । अत्रापि शाब्दी व्यावृत्तिः पूर्ववदेव शुद्धा ॥

**साफल्यं क्व नु वचसां सारसनयनस्य वर्णने यशसाम् । न तु वितथनृपतिपाशप्रततिस्तोत्रेऽतिमात्रचित्रेऽपि ॥ १४६० ॥**

अत्र शाब्दी व्यावृत्तिः, प्रश्नपूर्विका च ॥

इदं प्राचां मतम् । अन्ये तु व्यावृत्तेरार्थत्व एव परिसंख्यालंकारः । अन्यथा तु शुद्धा परिसंख्यैव । यथा हेतुत्वस्यार्थत्व एव हेत्वलंकारः । अन्यथा हेतुमात्रम् । अतो भेदद्वयमेवास्या इत्याहुः ॥

अपरे तु—व्यावृत्तेरार्थत्वेऽपि नालंकारत्वं, 'पञ्च पञ्चनखा भक्ष्याः, समे यजेत, रात्रसस्य, इत्यादावपि तदापत्तेः । किंतु कविप्रतिभानिर्मिता या तादृशव्यावृत्तिरेवालंकारत्वम् ॥

सा यथा—

**आसर्गमविरतानां दुरितानां शान्तये दुरन्तानाम् । भगवन्मम शेषतया भवतो निर्वेश एव निर्वेषः ॥ १४६१ ॥**

हे भगवन्! आसर्गं आसृष्टेः अविरतानां दुरन्तानां दुरितानां शान्तये मम शेषतया शेषत्वेन भवतो निर्वेश एव त्वदेकशेषस्य मम शेषिणो भवतोऽनुसंधानमेव निर्वेषः प्रायश्चित्तम् । न तु कृच्छ्रचान्द्रायणादिरिति भावः ।

स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेस्स्वाम्यस्वभावं च सदा स्मर ॥

यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्योगिनामखिलाशुभम् ॥
अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्वयाजहार विवशो नाम स्वस्त्ययनं हरेः ॥

इत्यादिप्रमाणान्यत्रानुसंधेयानि। शेषतयेत्यत्र शे षतयेति पदद्वयम् । शे शकारे षतया षकारतया शकारस्थाने षकारन्यासादिति यावत् । निर्वेशः निर्वेशशब्दः निर्वेषशब्दो भवतीति विच्छित्तिविशेषोऽप्यनुसंधेयः ॥

यथावा—

**श्रीरजनिविधौ भगवति नीरजनयने विदोषमवति भुवम् । रजनिमुख एव नितरामजनि जनानां प्रदोषताख्यातिः ॥ १४६२ ॥**

श्रीः लक्ष्मीरेव रजनिः रात्रिः तस्याः विधौ चन्द्रमसीत्यर्थः

यथावा—

**अवति हरे त्वयि भुवनं विपत्तिशब्दोऽपदातिसैन्येऽभूत् । अश्रावि कृच्छ्रशब्दः प्रायश्चित्तप्रसङ्ग एव जनैः ॥ १४६३ ॥**

इत्यादौ। विपत्तिशब्दः विपद्वार्ता । विगताः पत्तयो यस्मिंस्तत् विपत्ति विपत्तितिशब्दः। कृच्छ्रं कष्टं पराकादिकृच्छ्रं चेत्यर्थः । 'यस्मिन् शासति वसुमतीपाकशासने महानसेषु सन्तापः' इत्यादिपरकीयप्रबन्धेषु च ॥

अत्र हि प्रथमान्तार्थः कविप्रतिभया एकीकृत इति तद्वारा तत्प्रतियोगिव्यावृत्तिर्निर्मिता । एवञ्च 'यद्यस्ति तव दिदृक्षा'

इत्यत्र नान्यो द्रष्टव्य इत्यर्थस्य प्रतीतेः परिसङ्ख्याऽस्तु, न तु परिसङ्ख्यालंकारः, व्यावृत्तेर्वास्तवत्वेन कविप्रतिभाया अनपेक्षणात्। व्यावृत्तिर्व्यवच्छेदः। 'को रोगो भवयोगः' इत्यत्र तु प्रश्नपूर्वकं दृढारोपरूपकम्। अन्यथा 'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते' इत्यत्रापि परिसङ्ख्यापत्तेः। 'साफल्यं क नु वचसां' क्षेत्रं फणिवरगोत्रं' इत्यत्रापि परिसंख्यैव शुद्धा, प्रागुक्ताद्धेतोरनार्थत्वात्' तस्मात् 'महानसेषु सन्तापः' इत्यादिकमेवास्या उदाहरणमिति वदन्ति॥

वस्तुतस्तु व्यावृत्तेरशाब्दत्वेऽपि कविप्रतिभोन्मीलितश्लेषादिना चमत्कारातिशयश्चेत्तत्रापि न निवार्यते परिसंख्यालंकृतिः॥

यथा—

**क्वचिदप्यनूनमम्ब स्वामित्वं ते त्वमेव तत्सेव्या। किं तेन शौरिणा नस्स यदूनां स्वामितां क्वचिदूहे॥ १४६४॥**

सः शौरिः यत् यस्मात् कचित् समये ऊनां न्यूनां स्वामितां ईश्वरतां उदूहे, क्वचिदवसरे यदूनामिति समस्तं पदं, यदुवंश्यानां स्वामितामिति तु वस्तुस्थितिः। यदुशब्दस्तदपत्ये लाक्षणिकः। अत्र किं तेन शौरिणेति व्यावृत्तेरशाब्दत्वेऽपि तस्याः श्लेषभित्तिकाभेदाध्यवसायमूलकातिशयोक्तिदत्तहेतूपन्याससमर्थितत्वेन चमत्कारातिशयस्य सहृदयैर्दुरपह्नवत्वाद्भवत्येव परिसंख्यालंकृतिः। एवञ्च ईदृशस्थले व्यावृत्तेरशाब्दत्वेऽपि परिसंख्यालंकृतेरवश्याश्रयणीयतया अन्यत्रापि तस्या आत्मलाभो नापलपनीयः। तथाच उदाहरिष्यमाणेषु पद्येष्वपि परिसंख्यालंकारस्सुप्रसर एव। अतएव कुवलयानन्दकाराः 'स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम्' इत्युदाजह्रुः॥

यथावा—

वित्तं वृत्तमिति हे भवदीयैर्वृत्तमेव रक्ष्यमिह । न तु वित्तमैति याति च तदेतयोर्विवृत एव ननु भेदः ॥ १४६५ ॥

नन्विति भगवत आमन्त्रणे । तत् वित्तं पैति आयाति । याति गच्छति च । एतयोः वित्तवृत्तयोः भेदः विवृत एव ।

वृत्तमेव सदा रक्षेद्वित्तमायाति याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥

इति स्मरद्भिर्मुनिभिर्वैलक्षण्यं व्याख्यातमेवेत्यर्थः । तयोः वित्तवृत्तशब्दयोः विवृत एव वि वृ इति वर्णाभ्यामेव, सार्वविभक्तिकस्तसिः । भेदः तावदेव वैलक्षण्यं अन्यवर्णतौल्यादित्यर्थोऽपि चमत्कारी । अत्र न तु वित्तमिति व्यावृत्तेश्शाब्दत्वेऽपि उपपादितचमत्कारातिशयपोषिततया भवत्येव परिसंख्यालङ्कारः अत्रोदाहरणे स्मृतिवचनगृहीतवृत्तवित्तशब्दयोः वैपरीत्येन ग्रहणं विवृत एव भेद इत्युपपादितचमत्कारानुरोधेनेति ध्येयम् ॥

यथावा—

शरणागतमेनं मां यदि गमयसि नायकं स्वमथ मधुमथनः । नायकमयमपि परमभिगमयेदव्यास्त्वमेव तत्किं तेन ॥ १४६६ ॥

हे श्रीः ! शरणागतं एनं मां स्वं निजं नायकं वल्लभं भगवन्तं गमयसि प्रापयसि यदि अथ अयं मधुमथनोऽपि परं स्वस्मादन्यं नायकं नाथं अभिगमयेत् स्वयं न रक्षेत् किंतु विष्टिभारमिवान्यं प्रापयेदिति भावः । संभावनायां लिङ् । तत् तस्मात्

त्वमेव अव्याः रक्षेः । तेन एवं नायकान्तरं प्रापयता भगवता किं न किमपि साध्यमस्तीति भावः । 'गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका' इति तृतीया । परमार्थतस्तु—शरणागतमेनं मां त्वद्वल्लभं प्रापयसि चेत् अथ अविलम्बेनैवेति भावः । मधुमथनः अयं नायकमिति योजना । अयं अपगतयकारं नायकं नाकमित्यर्थः । परं नाकं परमं व्योम दिव्यं स्थानमित्यर्थः । अभिगमयेत् त्वयि वाल्लभ्यभूम्ना पुरुषकारभूतया त्वया स्वसंनिधिं प्रापितमविलम्बेनैव निश्श्रेयसेन योजयतीति भावः । तत् तस्मात् त्वमेव ईदृशविशेषलाभनिदानभूतेति भावः । अव्याः । किं तेनेत्येतत् लक्ष्मयां गौरवातिभूम्ना । न तु भगवत्युदासीनतयेति रहस्यम् । अत्रापि पूर्ववदेव व्यावृत्तेश्शाब्दत्वादिकमनुसंधेयम् ॥

यथावा—

**निर्यातय भर्त्रे मामिति त्वयाऽभ्यर्थितोपि धरणिसुते । लङ्कामेव दशास्यो निर्यातयति स्म न तु जननि भवतीम् ॥ १४६७ ॥**

भर्त्रे भगवते दाशरथये । निर्यातय समर्पय 'निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च' इत्यमरः । अनेन 'मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि' इति भगवत्यास्सीताया वाक्यं प्रत्यभिज्ञापितम् । लङ्कामेव निर्यातयति स्म दत्तवान् न तु भवतीम् । वस्तुतस्तु निस्सारितानि निश्शेषितानि वा यातूनि रक्षांसि यस्यास्सा निर्यातुः तथोक्तां करोति स्म निर्यातुशब्दात् णाविष्ठवद्भावे टिलोपः । अन्विष्यराक्षसां कृतवानित्यर्थः ॥

यथावा—

स्थालीबिलीयतण्डुलराशेरेवास्ति निष्फलीक-
रणम् । न तु सकलफलद भगवंस्त्वदीयपदविन-
तकाङ्क्षितार्थानाम् ॥ १४६८ ॥

स्थालीबिलमर्हन्ति स्थालीबिलीयाः । पाकयोग्या इत्यर्थः । स्थालीबिलात्' इत्यर्हार्थे छः । ये तण्डुलाः तेषां राशावेव निष्फलीकरणं फलीकरणस्याभावो निष्फलीकरणम् । निर्मक्षिकमितिवदर्थाभावेऽव्ययीभावः । फलीकरणं नाम व्रीह्यादिधान्यस्य सूक्ष्मतुषः । अन्यत्र व्यर्थीकरणं नेत्यर्थः ॥

यथावा—

अखिलाघहृतिनिदाने मम हृदि नारायणे
समिन्धाने । दुरितमरितां भजेद्यदि भजतु दुतं
स्यात्तदेव न मनो मे ॥ १४६९ ॥

दुरितं मयि अरितां विद्वेषं भजेद्यदि भजतु मां कदर्थयितुमुद्युञ्जीत चेदुद्युङ्क्तामिति भावः । तदेव दुरितमेव दुतं स्यात् परितप्तं स्यात् 'टु दु उपतापे' इति सौवादिकाद्धातोः क्तः । मे मनस्तु न दुतं स्यात् । भगवतो हरेस्तत्रैव निवासादिति भावः । पक्षे दुरितं दुरितमिति पदं अरितां अविद्यमानरिवर्णतां भजेचेत् दुतमित्येव निष्पद्येतेत्यर्थश्च चमत्कुरुते ॥

यथावा—

संसाराकूपारेऽपारे घोरेऽत्र विलुठतश्शौरे ।
मम नासि पारदस्त्वं चपलतया पारदोऽहमेवा-
सम् ॥ १४७० ॥

त्वं—

संसारसागरं घोरमनन्तक्लेशभाजनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥

इत्युक्तमहाप्रभावोऽपीति भावः । अपारे घोरे संसाराकूपारे लुठतः मम पारदः परतीरप्रापकः नास्ति । औदास्याद्वा अशक्तत्वाद्वा न जाने इत्युपालम्भो द्योत्यते । किंतु चपलतया तावकपरतीरप्रापकताप्रतीक्षणाक्षमतयेत्यर्थः । अहमेव पारदः तव मम वा परतीरप्रापकः आसम् । परमार्थतस्तु—चपलतया चञ्चलस्वभावतया पारदः रसः 'रसस्सूतश्च पारदः' इत्यमरः । आसं तत्तुल्योऽभूवम् । इयन्तं समयं प्रतीक्ष्यमाणोऽपि भवजलनिधिपारमप्रापयिता त्वं कदा मां तारयेरित्यवतमे नकुलस्थितमाश्रयामीति भावः ॥

यथावा—

दुर्मतिता क्रोधनता दुर्मुखिता वाऽपि भर्मशिखरीन्दो । वत्सरविशेष एव त्वत्संश्रितसमुदये तु न कदाऽपि ॥ १४७१ ॥

प्रादिगण एव भगवन् दुर्गतिवार्ता च दुरुपसर्गकथा । त्वच्चरणनलिनशरणे विप्रादिगणे तु नोन्मिषति जातु ॥ १४७२ ॥

दुर्गतिवार्ता दारिद्र्यनरकादिवार्ता 'दुर्गतिर्नरके नैस्स्वये' इति मेदिनी । दुरुपसर्गाणां दुष्टोत्पातानां 'अजन्यं क्लीबमुत्पात उपसर्गस्समं त्रयम्' इत्यमरः । पक्षे दुरित्यस्याव्ययस्य गतिवार्ता गतिसंज्ञेति यावत् । दुरित्यस्य उपसर्गस्य कथा कथनं

च प्रादिगण एव 'प्रादयः। गतिश्च' इति सूत्राभ्यां प्रादिगणपठितानां शब्दानामुपसर्गगतिसंज्ञयोरुभयोर्विधानाद्दुरित्यस्य तत्र पठितत्वादिति भावः। विप्रादिगणे प्रादिगणविरुद्धे इत्यप्यर्थ उपस्कार्यः॥

एषूदाहरणेषु व्यवच्छेदस्य शाब्दत्वेऽपि श्लेषमूलकाभेदाध्यवसायसंभिन्नतया चामत्कारातिशयाद्भवत्येव परिसंख्यालंकारः। एवंच परिसंख्यालंकृतेरार्थीत्वशाब्दीत्वाभ्यां द्वैधी द्रष्टव्या। अस्याः प्रश्नपूर्वकत्वतदभावाभ्यां द्वैविध्यं प्राक्तनैरुदाहृतमपि विच्छित्तिविशेषविरहात्कुवलयानन्दकारैरुपेक्षितम्। अस्याश्च श्लेषानुप्राणितत्वे अतिमात्रचमत्कारिता यथा अनुपदमेवोदाहृतेषु पद्येषु पारदनिष्फलीकरणादिशब्दश्लेषेणात्यन्तचारुता प्रतीयत इत्यवधेयम्॥

अस्यां च परिसंख्यालंकृतौ व्यवच्छेदनियमनयोर्न पौर्वापर्यनियमः। यथा शुद्धापह्नुतौ निह्नवारोपयोः। तथाच व्यवच्छेदपूर्वकतायामपि नियमनपूर्वकतायामिव परिसंख्यालंकृतिरक्षतैव॥

**न प्रकृतिवैपरीत्यादनर्थदो नन्दनन्दन भवेस्त्वम्। त्वत्तोऽन्यस्तु तथा स्याद्ब्रह्मा रुद्रोऽथवा न संदेहः॥ १४७३॥**

हे नन्दनन्दन त्वं प्रकृतिवैपरीत्यात् 'यत्सत्त्वं स हरिर्देवः, महान्प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः' इत्याद्युक्तसत्त्वस्वभावविपरीतत्वात् अनर्थदः रजस्तमःप्राचुर्यप्रयुक्तं पुरुषार्थं दाता न भवेः।

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः।
सात्त्विकस्स हि विज्ञेयस्स वै मोक्षार्थचिन्तकः॥

इत्युक्तरीत्या सत्वोन्मेषणपूर्वकं निश्श्रेयसरूपपरमपुरुषार्थप्रदाता त्वं कथं हेयपुरुषार्थं दद्या इति भावः। त्वत्तोऽन्यस्तु ब्रह्मा चतुर्मुखः रुद्रो वा तथा स्यात् प्रकृतिवैपरीत्यादनर्थदस्स्यात् नात्र संदेहः।

पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः।
रजसा तमसा चास्य मानसं समभिप्लुतम्॥

इत्युक्तरीत्या रजस्तमःप्रवर्तकतया हेयपुरुषार्थप्रदावेव स्यातां, न तु त्वामिव परमपुरुषार्थप्रदाविति भावः। पक्षे नन्दनन्दनेति शब्दः प्रकृतेः उक्तविधप्रकृतेः वैपरीत्यात् प्रातिलोम्येन पाठात् अनर्थदः यथोक्तार्थाप्रकाशकः न भवेः। नन्दनन्दनेति प्रकृतेर्वैलोम्येन पाठेऽपि स्वार्थाप्रहाणादिति भावः। त्वदन्यः ब्रह्मा ब्रह्मेतिशब्दः रुद्रः रुद्र इति शब्दो वा तथा स्यात् प्रकृतिवैलोम्ये पूर्वानुपूर्विव्यत्ययात्कस्याप्यर्थस्य प्रकाशको न भवेदिति भावः। अत्र व्यवच्छेदपूर्वकता, पूर्वोदाहरणेषु नियमपूर्वकतेति विभावनीयम्॥

एषूदाहरणेषु स्वभावतो वा श्लेषभित्तिकाभेदाध्यवसायेन वा उभयत्र प्रसिद्धसंबन्धस्य वस्तुन एकत्र विधानेनान्यत्र निषेधः प्रतिपादितः। केचितु एकत्र प्रसिद्धसंबन्धस्यापि वस्तुनोऽन्यस्मिन् धर्मविधानेन तत्प्रसिद्धिशालिनि धर्म्यन्तरे तत्प्रतिषेधः प्रतिपाद्यते॥ यथा—

**यस्तुभ्यमभ्यसूयति तेन विगीतेन दुर्विनीतेन।**
**भूरतिभारवतीयं शैलैस्सालैश्च नाथ न विशालैः॥**

शैलादीनामेवातिमात्रभूभारता प्रसिद्धा, न तु भगवदभ्यसूयकस्य जनस्य। अत्रच पद्ये तादृशजने अतिमात्रभारत्वविधानं

शैलादौ तन्निषेधश्चेत्युक्तपरिसंख्याभेदो व्यक्त एव । अयं च तादृशजनस्य तादृशभारत्वासंबन्धेऽपि तत्संबन्धकथनरूपातिशयोक्तिशबलितेति ध्येयम् ॥

इत्यलंकारमणिहारे परिसंख्यालंकारसरः पञ्चपञ्चाशः.

---

## अथ विकल्पालंकारसरः (५६)

---

### विकल्पः पाक्षिकप्राप्तिर्वर्ण्यते चेद्विरुद्धयोः ॥

एकस्मिन् धर्मिणि स्वस्वप्रापकप्रमाणप्राप्तयोः अत एव तुल्यबलयोर्विरुद्धयोर्विरुद्धत्वादेव युगपत्प्राप्तेरसंभवात्पाक्षिक्येव प्राप्तिः पर्यवस्यति 'अयं च वक्ष्यमाणसमुच्चयप्रतिद्वंद्वी व्यतिरेक इवोपमायाः' इत्यलंकारसर्वस्वकृदनुयायी रत्नगङ्गाधरकृत् 'समुच्चये हि द्वयोरपि युगपदवस्थानं, इह त्वन्यथेति तत्प्रतिद्वंद्वित्वम्' इति विमर्शिनीकारः । दीक्षितास्तु—वक्ष्यमाणकारकदीपकमलंकारान्तरं वर्णयन्तस्तस्य प्रथमसमुच्चयप्रतिद्वंद्वितां तदनन्तरभाविनस्समाधेर्द्वितीयसमुच्चयप्रतिद्वंद्वितां चाहुः ॥

मरणं तरणं वा स्तान्महाम्बुधेरित्यशायि मतभेदात् । जलधितटे बत भवता रघुवर भवजलधितारकेणापि ॥ १४७५ ॥

'अद्य मे मरणं वाऽस्तु तरणं सागरस्य वा'

इति श्रीरामायणश्लोकोऽत्रानुसंहितः । मतभेदात् विकल्पादिति यावत् । ल्यब्लोपे पञ्चमी । विकल्पमभिसंधायेत्यर्थः । मर-

णतरणशब्दयोर्मकारतकारमात्रवैषम्यादन्यतरमुपादायेत्यप्यर्थश्चमत्कृतिविशेषायोपस्कार्यः ॥

प्रतियन्नखिलांहस्ततिमोचनवचनं व्रजामि शरणं त्वाम् । प्राप्तस्तस्यावसरः प्रतारणं वाऽस्तु तारणं वा तत् ॥ १४७६ ॥

अखिलांहस्ततिमोचनवचनं 'सर्वपापेभ्यो मोक्षयिष्यामि' इति तव वचः प्रतियन् विश्वसन् त्वां शरणं व्रजामीति चरमश्लोकार्थानुवादः । तस्य प्रतिज्ञातसर्वपापविमोचनस्य अवसरः प्राप्तः । सर्वपापशेवधिरूपमादृशविषयलाभादिति भावः । तत् तव वचनं प्रतारणं अतिसंध्रायकं वाऽस्तु तारणं संसृतिनिस्तारकं वा अस्तु ॥

भक्त्याऽथवा प्रपत्त्या कृतापराधोऽपि नाथ विन्दे त्वाम् । मामेवं कृतयतनं गृहाण निगृहाण वा किमयशो मे ॥ १४७७ ॥

एवं कृतयतनं अनुष्ठितोपायं मां गृहाण रक्ष्यतया स्वीकुरु । निगृहाण वा निगृह्णीष्व वा मे मम किमयशः का वाऽकीर्तिः, प्रत्युत प्रपन्ननिग्रहे तवैवाकीर्तिरिति भावः । अत्र मरणतरणयोः, प्रतारणतारणयोः ग्रहणनिग्रहयोश्च औपम्यप्रतीत्यभावात्केवलं विकल्पः । यथा—जीवनं मरणं वाऽस्तु नैव धर्मं त्यजाम्यहम् इत्यादौ । अत्र जीवनमरणयोरौपम्यप्रतीतिरिति रसगङ्गाधरकारादयः ॥

उदाहरणं—

निश्शङ्कं शरणंगतमेष द्वेधाऽप्यरिं न बाधेत ।
राघवमाहवमथवा रजनिचरेश द्रुतं प्रपद्येथाः ॥

इदं रावणं प्रत्यङ्गदवचनं । एषः राघवः द्वेधाऽपि निश्शङ्कं शरणंगतं अरिं न बाधेत निश्शङ्कं अयं मां बाधेताते संशयरहितं यथास्यात्तथा शरणं गतं अरिं न बाधेत, शरणागतपरित्राणधर्मधुरीणमूर्धन्यत्वात् । पक्षे निश्शं निर्गतश्शकारो यस्मात्तं तथोक्तं शरणं रणमित्यर्थः । गतं युद्धार्थमभिमुखागतं कं अरिं न बाधेत सर्वमप्यभियातिनं बाधत एवेत्यर्थः । तस्मात् राघवं द्रुतं प्रपद्येथाः शरणं व्रज । प्रपूर्वस्य पद्यतेस्तादृशार्थकत्वात् । अथवा आहवं युद्धं प्रपद्येथाः प्राप्नुहि । अत्र प्रपदने संधिविग्रहकर्तव्यताबोधकप्रमाणाभ्यां कर्मतया राघवाहवयोर्यौगपद्यासंभवात्पर्यायेण प्राप्तिः । कर्मणोः क्रियाफलेन प्रपदनेनैव समानधर्मेणौपम्यम् ॥

नन्वत्र यथा प्रपूर्वकपदिधात्वर्थफलभूतप्रपदनरूपधर्मैक्यात्कर्मणोरौपम्यं गम्यते तथा 'जीवनं मरणं वाऽस्तु' इत्यादौ सत्तारूपधर्मैक्याज्जीवनमरणयोः कर्त्रोरपि औपम्यं गन्तुं युज्यत इति चेत् युज्यते न तु गम्यते । अथ तत्कुतो हेतोरिति चेत् कवितात्पर्यविरहादिति गृहाण । न ह्यत्र मरणं जीवनं च समानमिति कवेस्तात्पर्यं, किंतु विषं भुङ्क्ष्व मा चास्य गेहे भुङ्क्था इतिवत् धर्माद्धेतोर्मरणमपि ज्यायः न तु धर्मत्याग इति निषिद्धगतद्वेषाधिक्ये । तदर्थं च मरणस्योपात्तत्वादविवक्षिताधिकरणतया औपम्यस्यानिष्पत्तिरेवेत्याहुः । एवं मरणं वा तरणं वेति श्लोके गम्यमानप्रतिज्ञाहानरूपनिषिद्धमादाय तद्गतद्वेषाधिक्ये प्रतियाम्नीति श्लोके तु शरणव्रजनरूपविहितगतादराधिक्ये कवे-

स्तात्पर्यं, न तु मरणे वा प्रतारणे वा । एवं भक्त्येति श्लोकेऽपि बोध्यम् ॥

यथावा—

**शङ्कातङ्कविदूरैर्लङ्काद्वारं न्यरोधि हरिवीरैः । सीतां वितर स्फीतां युधमथवा कोसलाधिनाथाय ॥ १४७९ ॥**

अत्र 'सीतां वाऽस्मै प्रयच्छ त्वं सुयुद्धं वा प्रदीयताम्' इति श्रीरामायणश्लोकानुसारिणि रावणं प्रति सारणवाक्ये रावणविषये संधिविग्रहप्रमाणप्राप्तयोरत एव तुल्यबलयोर्युगपदसंभवतोस्सीतायुद्धवितरणयोः पाक्षिकान्यतरप्राप्त्यनुपमर्देनान्यतरप्रतिक्षेपलक्षणस्य विकल्पस्य वर्णनं कर्मणोस्सीतायुद्धयोः क्रियाफलेन वितरणेनैव समानधर्मेणौपम्यम् ॥

यथावा—

**नागेशगिरिमणे भययोगेन त्वां प्रपन्न एष जनः । भोगं वा योगं वा देहि कियान् स्यात्तवैष भयभेदः ॥ १४८० ॥**

नागेशगिरिमणे शेषाद्रिशिरोमणे एष जनः भययोगेन भीतिसंबन्धेन त्वां प्रपन्नः । भोगं सांसारिकसुखं वा योगं भोगनिवृत्तिकारणभूतं भक्तियोगं वा त्वदनुभवं वा देहि निरङ्कुशस्वतन्त्रतया यथेष्टं वितर । तव एष भयभेदः प्रपन्नभीतिनिराकरणं कियान् स्यात् न दुष्कर इत्यर्थः । भोगयोगशब्दयोर्भकारयकाराभ्यां भेदः कियान् अकिंचित्करः वर्णान्तरैकरूप्यादिति चाभि-

प्रायः । अत्र भोगयोगयोरन्योन्यविरुद्धयोर्योगपद्यायोगाद्विकल्पः । अत्रापि कर्मणोर्भोगयोगयोः क्रियाफलेन दानेनैव समानधर्मेणौपम्यम् ॥

यथावा—

नतरक्षणकृतदीक्षस्त्वमिति त्वां नाथ शरणमभिनाथे । आर्तिर्वा मम शाम्यतु कीर्तिर्वा तव नतावनैकान्ता ॥ १४८१ ॥

त्वं रक्षसि चेन्ममार्तिश्शाम्यति ।

तावदार्तिस्तथा वाञ्छा तावन्मोहस्तथाऽसुखम् ।
यावन्न याति शरणं त्वामशेषाघनाशनम् ॥

इत्युक्तेः। नचेत् तव शरणागतपरित्राणपरायणत्वनिबन्धनकीर्तिश्शाम्यति ।

विनष्टः पश्यतस्तस्य रक्षिणश्शरणागतः ।
आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः ।
अस्वगर्व्यं चायशस्यं च बलवीर्यविनाशनम् ॥

इत्युक्तेः। अत्रोदाहृततुल्यबलप्रमाणाभ्यामार्तिशान्तिकीर्तिशान्त्योर्युगपत्प्राप्तयोरितरेतरविरुद्धतया युगपद्भावासंभवाद्विकल्पः । आर्तिकीर्त्योश्शमनरूपसमानधर्मेणौपम्यं ज्ञेयम् ॥

क्वचिल्लुप्तं समानधर्ममादायाप्यौपम्यस्य गम्यत्वेऽयमलंकारः ॥

यथावा—

किंचिद्वा भूयो वा पश्चायुधमश्च मुश्च जाड्यमये । धात्रीमेतां भोक्ष्यसि वैधात्रीं प्राप्स्यसि श्रियं वाऽपि ॥ १४८२ ॥

अत्र धात्रीभोगवैधात्रसंपत्प्राप्तयोः श्लाघ्यत्वेनौपम्यं विवक्षितम् । धात्वर्थयोरयं विकल्पः न तु धात्रीवैधात्रसंपदोः, तयोः कारकत्वेनैव क्रियान्वयं विना विकल्पासंगतेः । न च धात्वर्थयोरेकस्य कर्तृरूपसाधारणधर्मस्योक्तत्वात्कथं लुप्तेति वाच्यं, कर्तृरूपसाधारणधर्ममादाय औपम्यस्यात्र सुन्दरस्यानिष्पत्तेः । अन्यथा 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इत्यत्रेव 'हतो वा नरकं गन्ता जित्वा वा भोक्ष्यसे महीम्' इत्यत्राप्यौपम्यप्रत्ययापत्तेरित्याहुः । एवंचास्मिन्नलंकारे विकल्प्यमानयोस्सुन्दरमौपम्यमलंकारताबीजं, तदादायैव चमत्कारोल्लासात् । अन्यथा तु विकल्पमात्रमिति रहस्यम् ॥

इत्यलंकारमणिहारे विकल्पसरष्षट्पञ्चाशः

---

# अथ समुच्चयालंकारसरः (५७)

---

## यौगपद्यात्पदार्थानामन्वयस्स्यात्समुच्चयः ॥

यौगपद्यादिति यथासंख्यव्यावृत्त्यर्थं, न त्वेकक्षणप्रतिपत्त्यर्थम् । तेन शतपत्रपत्रशतभेदन्यायेन काचित्किंचित्कालभेदेऽपि न समुच्चयभ्रंशः । स तावाद्द्विविधः धर्मिभेदधर्मैक्याभ्याम् । धर्मैक्येऽपि द्वैविध्यं कारणत्यातिरिक्तसंबन्धेनैकधर्म्यन्वये कारणतया एकधर्म्यन्वयं चेति । एवं त्रिविधेऽस्मिन् प्राथमिकयोर्भेदयोः गुणानां क्रियाणां गुणक्रियाणां च । तृतीयप्रभेदे शोभनानाम-

शोभनानां शोभनाशोभनानां तथाविधैस्समन्वयः । अयं तृतीयप्रभेद एव । 'अहंप्रथमिकाभाजामेककार्यान्वयोऽपि सः' इति द्वितीयसमुच्चयत्वेन लक्षितो दीक्षितैः । अस्यैव तत्कर इति नामाहुः प्राञ्चः । तदुक्तं 'तत्सिद्धिहेतोरेकस्मिन् यत्रान्यस्तत्करं भवेत्' इति । विकल्पप्रतिक्षेपेणास्या स्थितिः । न चास्मिन्तृतीयप्रभेदे वक्ष्यमाणसमाध्यलंकारत्वमाशङ्कनीयं, यत्र ह्येकेन कार्ये निर्वर्त्यमानेऽप्यन्येनाकस्मादापतता कारणेन सौकर्यादिरूपोऽतिशयस्संपाद्यते स तस्य विषयः। अस्मिंस्तु तृतीयसमुच्चये यत्रैककार्यं निर्वर्तयितुं युगपदनेके खले कपोता इवाहंप्रथमिकया समापतन्ति कार्यस्य च न कोऽप्यातिशयः सोऽस्य विषयः ॥

तत्र भिन्नधर्म्यन्वयो यथा—

शरदिन्दुकरैर्विशदं गगनं यमुनावनं तु हरिधाम्ना । आनीलं स्मररागादाताम्रं चापि गोपिकानयनम् ॥ १४८३ ॥

स्निह्यति नयनयुगं त्वयि मुह्यति संमोदपरवशं चेतः । स्रवति प्रमोदबाष्पं द्रवति च तव सेवनाद्धृदयं भूमन् ॥ १४८४ ॥

अत्राद्ये गुणानां द्वितीय क्रियाणां च यौगपद्येन भिन्नधर्म्यन्वयः ॥

एकधर्म्यन्वयो यथा—

मणिवरभासाऽरुणितं हाररुचा स्मेरमसितमा-

त्मरुचा । श्रीविहृतिकृते रचितं स्थलमिव चित्रं हरेरुरो भाति ॥ १४८५ ॥

अत्र आरुण्यादिगुणानां यौगपद्येनैकस्मिन् धर्मिण्युरोरूपे आधेयतासंबन्धेनान्वयः । एवमुत्तरत्रापि यथायथं द्रष्टव्यः ॥

कल्याणगुणगणौघस्मरणात्तव नाथ भाग्यवान्मनुजः । विन्दति हर्षं तर्षं निन्दति नन्दति च तावकोत्कर्षम् ॥ १४८६ ॥

तर्षं विषयतृष्णां निन्दति । तावकोत्कर्षं नन्दति अभिनन्दतीत्यर्थः ॥

ननु वासुदेव यं क्षणमचिन्त्यवैभव न चिन्त्यते स भवान् । भ्राम्यति सुजनश्श्राम्यति ताम्यति नितरां तदा न शाम्यति च ॥ १४८७ ॥

अत्र 'यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते' इत्यादिप्रमाणार्थोऽनुक्रान्तः ॥

रुष्यति सद्भ्यो दुष्यति हृष्यति दुस्सङ्गतस्त्वदनभिज्ञः । तुष्यति विषयैश्शुष्यति पुष्यति दुरितं विशिष्य मुरवैरिन् ॥ १४८८ ॥

अत्रोदाहरणत्रयेऽपि क्रियाणां युगपदेकधर्मिण्यन्वयः ॥ तत्राद्ययोश्श्लाघ्ये धर्मिणि तृतीये त्वश्लाघ्ये ॥

गुणक्रियाणां यौगपद्येनान्वयो यथा—

चलितभ्रु ललितमधुरं लुलितालकचारु विवलितापाङ्गम् । जगदीश्वरीमुखं फणिनगनाथमनो धिनोति सततमपि ॥ १४८९ ॥

अत्र ललितमधुरमिति गुणयोः चलितभ्रु इत्यादिक्रियाणां च सामस्त्येन युगपदेकधर्मिण्यन्वयः ॥

एवं धर्मैक्यरूपे द्वितीयप्रभेदे कारणत्वातिरिक्तसंबन्धेनैकधर्म्यन्वयरूपः प्राथमिको भेदः प्रदर्शितः । कारणतया एकधर्म्यन्वयरूपे प्रभेदे शोभनानां शोभनैस्समुच्चयो यथा—

ज्ञानबलैश्वर्याद्या गाम्भीर्यस्थैर्यधैर्यमुख्याश्च । कल्याणगुणाः प्रथयन्त्यनितरसाधारणास्तवौन्नत्यम् ॥ १४९० ॥

अत्र ज्ञानादिष्वेकेनाप्युत्कर्षसंभवे बलादयोऽप्युत्कर्षप्रकाशनार्थं स्पर्धया वा पतन्तः शोभनाः ॥

यथावा—

कमलाभं नयनयुगं कमलादयितानिलाशनाद्रिमणे । रूपं च नीलजलदसरूपं प्रथयति तवाखिलेशत्वम् ॥ १४९१ ॥

अत्र 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी । ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । नीलतोयदमध्यस्था' इत्यादिश्रुतिप्रसिद्धपुण्ड-

टीकाक्षत्वादिषु त्रिषु एकेनापि जगदीश्वरत्वप्रख्यापनसंभवे संघर्षादिव त्रयोऽपि तदर्थमापतन्तश्शोभनास्समुच्चिताः ॥

यथावा—

**प्रेमोदयः कुतूहलमामोदव्यतिकरश्च रोमाञ्चः। त्वामालोकयतो मम सीमां चित्तस्य लोलयति भूमन् ॥ १४१२ ॥**

अत्रापि प्रेमोदयादेस्समुच्चयः पूर्ववद्द्रष्टव्यः ॥

इदं सर्वं शोभनैश्शोभनानां समुच्चये उदाहरणम् । अशोभनैरशोभनानां समुच्चयो यथा—

**दुर्वाराः खलु विषया दुर्दान्तानीन्द्रियाणि मम नाथ। दुष्कर्म च निरवधिकं मर्म निकृन्तन्ति चिन्त्यमानानि ॥ १४१३ ॥**

अत्र दुर्वारत्वादिनाऽशोभनानां विषयाणां दुर्दान्तत्वादिभिरशोभनैरिन्द्रियादिभिस्समुच्चयः। अत्र विषयदुर्वारत्वेनैकेनैव चिन्त्यमानेन मर्मनिकृन्तनसिद्धौ इन्द्रियदुर्दान्तत्वादिकमपि तदर्थमापतितं समुच्चीयते ॥

शोभनाशोभनसमुच्चयो यथा—

**तव निर्वर्णनहीनं नयनं वर्णनविहीनमपि रसनम् । आकर्णनहीनं च श्रवणं प्रवणं मनः कथं त्वयि मे ॥ १४१४ ॥**

अत्र नयनादीनि स्वाभाव्याच्छोभनानीति न निन्दनीयानि विशेषणमाहात्म्याच्चाशोभनानि निन्दागोचरतां प्रपद्यन्त इति

शोभनाशोभनसमुच्चयः। शोभनाशोभनानामित्यत्र कर्मधारय आश्रितः। न द्वन्द्वः। सहचरभिन्नत्वदोषापत्तेः॥

एवमशोभनशोभनानामप्येककार्यजननार्थमापततां समुच्चयस्संभवति॥

यथावा—

**काव्यं त्वच्चरितमयं भव्यभवन्नामकोमलं गीतम्। तिर्यक्त्वमपि गिरौ तव पर्याप्तं श्रेयसे श्रियःकान्त॥ १४९५॥**

अत्र 'काव्यालापांश्च वर्जयेत्। न च रक्तो विरावयेत्' इत्यादिप्रमाणैः काव्यगीतादीनि स्वभावतोऽशोभनान्यपि विशेषणबलाच्छोभनानि समुच्चितानि। तव गिरौ तिर्यक्त्वं त्वद्गिरिविषयरणकं तिर्यक्त्वमित्यर्थः॥

यथावा—

**त्वन्निध्यानजमश्रु त्वद्ध्यानजमहिगिरीश यज्जाड्यम्। त्वन्नामकथनजन्यं सगद्गदत्वं च सद्गतेस्सरणिः॥ १४९६॥**

अत्राश्रुप्रभृतयो निसर्गतोऽशोभना अपि भेदकमहिम्ना शोभनाः॥

केचित्तु द्रव्यजात्योरपि समुच्चयं मेनिरे। स च विच्छित्तिविशेषविरहादस्माभिरुपेक्ष्यते॥

इत्यलंकारमणिहारे समुच्चयसरस्सप्तपञ्चाशः.

# अथ कारकदीपकसरः (५८)

---

**क्रमिकाणां क्रियाणां चेदेककारकगामिनाम् ।**
**गुम्भनं क्रियते तत्तु भवेत्कारकदीपकम् ॥**

एककारकगतानां क्रमिकाणां क्रियाणां गुम्भनं कारकदीपकमित्यलङ्कारः। यद्यपि निबध्यमानानां क्रियाणां प्रस्तुतत्वेन सर्वोद्देशेनैव धर्मिणः कारकस्य प्रवृत्तिः। अतः किंचिदुद्देशेन प्रवृत्तस्यान्यत्र प्रासङ्गिकत्वलक्षणदीपकसादृश्यविरहान्न दीपकव्यपदेशो युक्तः। तथाऽपि एकस्यानेकान्वयमात्रेण दीपकसादृश्यमाश्रित्य तथा व्यपदेशः। दण्डिना तु कारकदीपकं दीपक एवान्तर्भाव्य तुल्ययोगिताऽपि तद्भेदत्वेनैव प्रतिपादितेत्यवोचाम दीपकालंकारनिरूपणावसर एव। वस्तुतस्तु मालादीपकवत्पृथगेवायमलंकारतामर्हति न दीपकेऽन्तर्भावं, तज्जीवातोरुपमागर्भताया इहाभावात्। समुच्चयप्रतिद्वंद्वितया विच्छित्तिविशेषसद्भावाच्चेत्ययं पूर्वैरकृतविवेकोऽपि प्रदर्शितो दीक्षितैर्विकल्पालंकार इवालंकारसर्वस्वकृता ॥

उदाहरणं—

**अधिरोहति वृषशिखरिणमभिमज्जति नाथ तत्र सरसि कृती। त्वामभ्रत्यथ मुञ्चति मुदाऽश्रु तत्रैव वाञ्छति निवस्तुम् ॥ १४९७ ॥**

यथावा—

पश्यति हरिरुपसर्पति तिष्ठत्यालपति हसति परिहसति । सल्लपति स्पृशति समालिङ्गति गोपीमुपैति तदभेदम् ॥ १४९८ ॥

आलापः आभाषणं, सल्लापः मिथोभाषणम् । अत्राद्ये कृतिरूपकर्तृकारकस्य एकस्यैव अधिरोहणादिक्रियास्वन्वयः क्रमिको निबद्धः । द्वितीये हरिरूपकर्तृकारकस्य एकस्यैव दर्शनादिक्रियास्वन्वयः क्रमिक इति प्रथमसमुच्चयप्रतिद्वंद्वोदम् ॥

इत्यलंकारमणिहारे कारकदीपकसरोऽष्टापञ्चाशः

---

## अथ समाध्यलंकारसरः (५९)

---

कारणान्तरसांनिध्यवशात्कार्यस्य कस्यचित् ।
सौकर्यं वर्ण्यते यत्र समाधिस्तत्र गीयते ॥

एककारणजन्यस्य कार्यस्याकस्मिककारणान्तरसमवधानाहितं यत्सौकर्यं तस्य सम्यगाधानात्समाधिरलंकारः । तच्च कार्यस्यानायासेन सिद्ध्या साङ्गसिद्ध्या च । समुच्चयविशेषापेक्षयाऽस्य वैलक्षण्यं त्वभिहितमेव प्राक् ॥

यथावा—

यादृच्छिकसुकृतवशान्मादृक्षं त्वं समुद्दिधीर्षुरसि । तादृशसाधुसमागम ईदृशसमये हठादुपनतो मे ॥ १४९९ ॥

अत्र यादृच्छिकसुकृतादेव सिद्ध्यन्त्या भगवत्कर्तृकोद्दिधीर्षायास्साधुसमागमादनायासेन सिद्धिः ॥

यथावा —

काङ्क्षन्त्या व्रजसुदृशश्शौरेर्दातुं स्वयंग्रहाश्लेषम् । आननसौरभलोभादापतदळिबृन्दमकृत साहाय्यम् ॥ १५०० ॥

अत्रोत्कण्ठितायाः गोपललनायाः आकस्मिकामळिन्दबृन्दापतनरूपकारणान्तरसमवधानेन शौरिकर्मकस्वयंग्रहाश्लेषस्यानायासेन सिद्धिः ॥

शौरिनवचाटुभङ्गीमङ्गीचक्रे यदा व्रजलताङ्गी । श्लथमपि तदोपगूहनमकार्यकस्मात्पिकारवैस्सान्द्रम् ॥ १५०१ ॥

अत्र पिकनिनादैरुपगूहनस्य साद्रत्वसिद्धिः ॥

इत्यलंकारमणिहारे समाधिसर एकोनषष्टितमः.

---

## अथ प्रत्यनीकालंकारसरः (६०)

---

बलिनि प्रतिपक्षे वा तत्पक्षे वा तिरस्कृतिः ।
तत्प्रतिद्वंद्विसाह्यं वा प्रत्यनीकमितीर्यते ॥

यत्र बलिनि प्रतिपक्षे दुर्बलेन साक्षात्तिरस्कारः तत्र प्रतिकर्तुमनीशानेन दुर्बलेन तदीयस्य तिरस्कारः स्वयमसमर्थस्य स्वविरोधिप्रतिद्वन्द्विनि साहायकं वा प्रत्यनीकम्। अनीकस्य सदृशं प्रत्यनीकम्। सादृश्यस्य यथार्थत्वेनैव सिद्धे 'अव्ययं विभक्ति' इत्यादिसूत्रे पुनस्सादृश्यग्रहणाद्गुणीभूतेऽपि सादृश्येऽव्ययीभावः। लोके प्रतिपक्षस्य तिरस्कारायानीकं प्रयुज्यते। तदसामर्थ्ये तत्संबन्धिनः कस्यचित्तिरस्कारः क्रियते। तदभावे च प्रबलस्वविरोधिप्रतिकर्तुस्साहाय्यं क्रियते। स चानीकसदृशतया प्रयुज्यमानत्वात्प्रत्यनीकमित्याख्यायते। अत्र च प्रतिपक्षगतं प्राबल्यं आत्मगतं दौर्बल्यं च गम्यते॥ तत्राद्या यथा—

महसा तव सादितभास्सहसा दिवसाधिपस्य किल बिम्बम्। अविलम्बं कौस्तुभतामवलम्ब्याक्रामति स्म तव हृदयम्॥ १५०२॥

अत्र साक्षात्प्रतिपक्षतिरस्कारः प्रतिपादितः॥

यथावा—

त्वद्रुचिकृतपरिभवतस्तापिञ्छं भ्रंशितात्ममुखवर्णम्। पिञ्छं भूत्वाऽमर्षात्पदं न्यधात्तव शिरस्पदे शौरे॥ १५०३॥

तापिञ्छस्य तमालस्य विकारः पुष्पं तापिञ्छं "क्लिहीनं प्रसवे सर्वम्" इति क्लीबता। त्वद्रुचिकृतात् परिभवतः पराभवात् भ्रंशितः भ्रंशं प्रापितः आत्मनो मुखवर्णः वदनतेजः यस्य तथोक्तं प्राप्तमुखवैवर्ण्यमित्यर्थः। पिञ्छं बर्हं भूत्वा तत्त्वेनाविर्भूयेत्यर्थः।

पक्षे तापिञ्छमिति पदं भ्रंशोऽस्यास्तीति भ्रंशि। ता इति आत्मा स्वरूपं यस्य सः तात्मा मुखवर्णः प्रथमाक्षरं यस्य तत्तथाभूतं सत् पिञ्छं भूत्वा तापिञ्छमितिपदं अद्यताकारोत्सारणेन पिञ्छमिति निष्पद्येत्यर्थः ॥ सुगममन्यत् ॥

यथावा—

**उरसापास्तं शौरेः कपाटमथ कटतया मदोन्नद्धम् । ऊर्ध्वं कमश्रयन्ननु तदुरश्छादयति कङ्कटात्माऽहो ॥ १५०४ ॥**

कपाटं कवाटं 'कवाटमररं तुल्ये' इत्यत्र कपाटमिति पाठमेव मुख्यतयाऽभ्युपेत्य कं शिरः पाटयतीति विग्रहः प्रदर्शितस्सुधायाम् । पक्षे कपाटमिति पदं च । अनयोस्तादात्म्यम् । शौरेः उरसा अपास्तं निरस्तं सत् 'कवाटवक्षाः परिणद्धकंधरः' इति कवाटस्योरस्सादृश्योक्तेस्तस्य तदपास्तत्वोक्तिः। पक्षे पास्तमिति भेदः। पाः पाकारः अस्तः निरस्तो यस्मिंस्तत्तथोक्तं सदित्यर्थः। कटतया गजगण्डतया "गण्डः कट' इत्यमरः। मदोन्नद्धं मदेन गर्वेण दानोदकेन च उन्नद्धं उद्धृत्तं सत्। अतएव कं शिरः ऊर्ध्वं अश्रयत् उन्नमयदित्यर्थः। पक्षे ऊर्ध्वं अग्रभागे इति यावत्। कमश्र यत् इति च्छेदः। कमश्र कमित्याकारकं मान्तशब्दं च यत् प्राप्नुवत्सत् इणश्शतारे 'इणो यण्' इति यण। कङ्कट इत्यात्मा स्वरूपं यस्य तत् कङ्कटात्म कवचरूपं सत् 'उरश्छदः कङ्कटकः' इत्यमरः। तदुरः भगवद्वक्षः छादयति। पक्षे कङ्कटात्मा कङ्कट इति निष्पन्नस्वरूपमित्यर्थः। कटशब्दस्यादौ कम् इत्यस्य न्यासे अनुस्वारे परसवर्णे च कङ्कटत्वेन निष्पन्नमित्यर्थः॥

यथावा—

जेतुं त्वामपटीयान्मल्लस्त्रीभूयमेत्य मल्ली सन्।
जयति शिरोऽधिवसंस्तव ललनाः किल नन्दत-
नय तव जैत्र्यः ॥ १५०५ ॥

हे नन्दतनय! इदं विवक्षितमल्लजयाद्युपस्काराय । मल्लः चाणूरादिः त्वां मल्लयुद्धविशारदं त्वं जेतुं अपटीयान् सन् । स्त्रीभूयं स्त्रीत्वं 'भुवो भावे' इति क्यप् । एत्य मल्ली सन् मल्लशब्दाज्जातिलक्षणे ङीषि मल्लीति निष्पत्तेरिति हृदयम् । पक्षे मल्लीकुसुमतामाश्रित इत्यर्थः । मल्लीशब्दाद्वैकारिकेऽणि 'पुष्प-मूलेषु बहुळम्' इति तस्य लुप् 'लुपि युक्तवद्व्यक्तिवचने' इति युक्तवद्भावः । तव शिरः अधिवसन् सन् जयति त्वां पराभव-तीत्यर्थः । पक्षे शिरोमाल्यतया उत्कर्षं प्राप्नोतीत्यर्थः । तथाहि— ललनाः स्त्रियः तव जैत्र्यः किल । तव गोपवधूवशंवदत्वादिति भावः । यथोक्तमाचार्यैः 'तदपि परमं तत्त्वं गोपजिनस्य वशं-वदम्' इति । किलेत्युपालम्भे । अतः पुंस्त्वेन दुस्साध्यं त्वज्जयं स्त्रीत्वेन साधितवानिति भावः । एषु त्रिषूदाहरणेष्वपि साक्षा-त्प्रतिपक्षतिरस्कारः शब्दार्थतादात्म्यमूलकश्लेषभित्तिकाभेदाध्य-वसायानुप्राणित इति विशेषो द्रष्टव्यः ॥

यथावा—

निजरुचिमपहृत्य पयोधरलीनोल्लसति या कृ-
तार्थेव । तां चपलां हारमिषां सपयोधरमम्ब
नह्यसे कण्ठे ॥ १५०६ ॥

या चपला विद्युत् निजरुचिं तव श्रियं अपहृत्य। चपलेत्यनेनानवस्थिताचित्ततया असमीक्ष्यकारिता द्योतिता। पयोधरे जलदे लीना सती कृतार्थेव नेतःपरं मम भयं किंचिदपि संभवेदिति कृतकृत्येव। उल्लसति हृष्यतीत्यर्थः। प्रकाशत इति तत्त्वम्। हारमिषां वज्रमणिहारच्छलां तां चपलां सपयोधरं स्वरुचिप्रतिभटतटिल्लताश्रयभूतजलधरसहितं यथास्यात्तथा। पक्षे स्तनसहितं यथास्यात्तथा कण्ठे नह्यसे 'कण्ठे बध्वा दशग्रीवम्' इत्यादिवद्ग्रीवायां बध्नासीत्यर्थः। पक्षे कन्धरायां परिष्कारहेतोः प्रतिमुञ्चसीत्यर्थः। अत्र साक्षात्प्रतिभटभूतायास्तटिल्लतायास्त्साश्रयायास्तिरस्कारः कैतवापह्नुतिश्लेषमूलाभेदाध्यवसायाभ्यामुज्जीवित इति पूर्वोदाहरणेभ्यो वैलक्षण्यम्॥

द्वितीयं यथा—

**तनुरुचिजितस्तवाच्युत मुखं विजेतुं विधुर्भवन्नेव। मकरो भूत्वा मधुकर इभमग्रसत त्वदेकशरणमहो॥ १५०७॥**

हे अच्युत! मधुकरः भ्रमरः मधुकरशब्दश्च। तयोस्तादात्म्यम्। तव तनुरुच्या शरीरश्रिया अल्पयैव त्विषेत्यपि गम्यते। जितस्सन् तव मुखं विजेतुं विधुर्भवन्नेव चन्द्रमा भवन्नेव विगतधुवर्णो भवन्नेव च विधूभवनसमसमयमेवेति भावः। मकरः ग्राहः भूत्वा पक्षे मधुकरशब्दः धुकारलोपे मकरो भूत्वेत्यर्थः। त्वदेकशरणं इभं गजं अग्रसत ग्रस्तवान्। अत्र भगवत्तनुरुचिविजितस्य तत्प्रतीकारानीशस्य मधुकरस्य रूपान्तरपरिग्रहेण तदेकशरणे वारणे पराक्रमः प्रकटितः॥ इदमुपदर्शित-

शब्दार्थतादात्म्यमूलकाविच्छित्तिविशेषशालि । एवमग्रिमोदाहारणयोरपि द्रष्टव्यम् ॥

यथावा—

**जेत्रीं तव गां भेत्तुं प्रथमं कोपाश्रितः किलोपगतोऽम्ब । लोपगतोऽन्ते कोकिल इह कोलस्सन् भिनत्ति गां तदभिख्याम् ॥ १५०८ ॥**

हे अम्ब कोकिलः जेत्रीं स्वावमन्त्रीं तव गां भेत्तुं विदारयितुं प्रथमं आदौ कोपाश्रितः क्रोधान्वितस्सन् उपगतः किल त्वद्वचनसमीपं गतो ननु । अन्ते पर्यवसाने लोपगतः स्वयमेव छेदनं प्राप्तस्सन् कोलस्सन् वराहो भवन् तदभिख्यां गोनामधारिणीं गां भुवं भिनत्ति भूदारत्वप्रसिद्धेस्तस्येति भावः ॥ पक्षे कोकिलः कोकिलशब्दः प्रथमं को इति वर्णेन अपाश्रितः आश्रितः किलोपं किवर्णभ्रंशं गतः 'द्वितीया श्रित' इति समासः । अन्ते अवसाने लोपगतः लवर्णेन युक्तः । लुप्तकिवर्णमात्रः कोकिलशब्दः कोल इति निष्पन्न इत्यर्थः ॥

यथावा—

**इक्षुर्गवा तव जितो द्रुतमानितरद्दश्यमासमुख एव । अवलम्ब्य तरक्षुत्वं हिनस्ति गास्तदभिधाः क्रुधा भगवन् ॥ १५०९ ॥**

हे भगवन्! इक्षुः तव गवा वाचा जितः तिरस्कृतः अत एव द्रुतं अनितरद्दश्यमानमुखः पराजितत्वप्रयुक्तावमानेनान्येषामदर्शितमुख इति भावः । पक्षे अविद्यमानः इः इत्याकारकवर्णः

यस्मिन् कर्मणि तद्यथास्यात्तथा अत्ति। तराभ्यां तकाररेफाभ्यां दृश्यमानं मुखं आदिः यस्य स तथोक्तः। तरक्षुत्वं मृगादनत्वं 'तरक्षुस्तु मृगादनः' इत्यमरः। पक्षे इक्षुशब्दः इकारोत्सारणे तत्रैव तकाररेफयोर्न्यसने तरक्षुरिति निष्पन्न इत्यर्थः। तद्भिधाः गोशब्दाभिलप्यवागभिधानाः गाः हिनस्तीत्यर्थः॥

यथावा—

**फणिशिखरिविधो भवता तिरोहितं तत्प्रतिक्रियानीशम्। पर्वणि कदाचन विधुं त्वन्नामानं तमस्तिरस्कुरुते॥ १५१०॥**

तम आश्रितनामज्ञानं राहुश्च। इदं कर्तृ, फणिशिखरिणि विद्यमाना विधुर्विष्णुः। तस्य संबुद्धिः. भवता तिरोहितं नाशितं सत्॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥

इति गानात्। स्पष्टमन्यत्। अत्र भगवता तिरोहितेन तमसा तस्मिन् प्रतिविधातुमक्षमेण तन्नामधरितया तदीयत्वेन कल्पितस्य विधोस्तिरस्कृतिः॥

यथावा—

**तव तनुभासाऽधरितो नवजलदस्त्वन्निवासमहिशैलम्। अधरीकृत्योद्गर्जति न घनो न्यक्कारमात्मनस्सहते॥ १५११॥**

अत्र भगवत्तनुरुचा अधरीकृतस्य नवजलदस्य तत्प्रतिकरणापटुतया तदीयशैलाधरीकरणम् । उदाहरणद्वयेऽपि अधरविधुप्रभृतिशब्दगतश्लेषोत्तम्भितस्साक्षात्प्रतिपक्षतिरस्काराक्षमस्य तदीयतिरस्कारस्तुल्य एव। अन्तिमे त्वर्थान्तरन्यासशेखरितत्वं विशेष इति ध्येयम् ॥

क्वचित्प्रतिपक्षसंबन्धिसंबन्धितिरस्कारेऽपीदं दृश्यते। यथा—

**नूनमयं स्वर्भानुर्लूनशिराश्श्रीनिकेतनेन पुरा।**
**तद्भासमनुविभातो विभावसोर्मण्डलं क्वचिद्ग्रसते॥**

अनुविभात इति भाच्छब्दस्य षष्ठ्येकवचनं विभावसोरित्यस्य विशेषणं 'तमेव भान्तमनुभाति सर्वम्' इति श्रुतिच्छायाऽत्रानुसंहिता । मण्डलं बिम्बं, राष्ट्रमित्यपि गम्यते । शिष्टं स्पष्टम्। अत्र भगवल्लूनशीर्षेण तत्प्रतिकारानीश्वरेण स्वर्भानुना तदीयभासमनुविभासमानस्य भानोर्यन्मण्डलं तस्य तिरस्कृतिरिति प्रतिपक्षसंबन्धिसंबन्धितिरस्कृतिः ॥

यथावा—

**अवधीरितो मुखरुचा तव धवलांशुर्मदम्ब**
**नयनसखम् । परिभूय नलिनमलिनस्तदाश्रितांस्तत्र निगळयति रात्रौ ॥ १५१३ ॥**

तवेत्येतत् मुखरुचा नयनसखं इत्युभयत्रापि संबध्यते । अत्र साक्षात्प्रतिपक्षभूतजगज्जननीवदनसंबन्धि नयनं, तत्सखतया तत्संबन्धि नलिनं, तत्संबन्धिनोऽळिनः, तत्तिरस्कृतिरभिहितेति पूर्वस्माद्विच्छित्तिविशेषः ॥

तृतीयं यथा—

हरिरुचिभरपरिभूतं कुवलयमखिलाम्ब तावकाक्षिवपुः। तद्रूपजितस्यागाच्छरतां मदनस्य तत्प्रतिचिकीर्षोः ॥ १५१४ ॥

अत्र स्वविरोधिहरिपरिभवानीशेन कुवलयेन लक्ष्मीनयनात्मनाऽवतीर्य तद्रूपविजिततया तत्प्रतिचिकीर्षोर्मदनस्य शरतया साहाय्यं विहितमिति तत्प्रतिद्वन्द्विसाह्यरूपं तृतीयः प्रत्यनीकप्रकारः॥

अत्र विचार्यते—हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलंकारान्तरं भवितुमर्हति। तत्र 'त्वद्रुचिकृतपरिभवतः' इत्युदाहरणे तावद्धेत्वंशश्शाब्दः। उत्प्रेक्षांशमात्रमार्थं, अन्येषु तूदाहरणेषु द्वयमप्यार्थम्। अस्मिन्नलंकारे हेतुत्वं निश्चीयमानं हेतूत्प्रेक्षायां तु संभावनमित्यस्ति विशेष इतिचेत् प्रतीयमानहेतूत्प्रेक्षाया अनुत्प्रेक्षात्वापत्तेः। वाचकस्य इवादेरभावाद्धेतुत्वस्य निश्चीयमानतायास्तत्रापि वक्तुं शक्यत्वात्।

यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते॥

इत्यलंकारसर्वस्वोदाहृते प्राचीनपद्येऽपि भगवद्वैरानुबन्धादिव भगवद्वक्त्रसदृशमिन्दुं राहुर्बाधत इति प्रतीतेरुत्प्रेक्षैव गम्यमाना। 'मम रूपकीर्तिमहरद्भुवि यः' इति कुवलयानन्दोदाहरणे तु हेत्वंश उत्प्रेक्षांशश्चेत्युभयमपि शाब्दम्। यद्यपि प्रतिपक्षगतबलवत्त्वस्वात्मगतदुर्बलत्वयोः प्रतीतेर्हेतूत्प्रेक्षान्तरादस्य वैलक्षण्यम्। नैतावता हेतूत्प्रेक्षाया बहिर्भवितुमिदमीष्टे, तदविनाभावित्वात्।

किंतु तदवान्तरविशेषो भवितुम्। न हि पृथिव्यवान्तरभेदाद्घटात्पटो विलक्षण इति पृथिव्या बहिर्भवतीत्यपि वदन्ति ॥

इत्यलंकारमणिहारे प्रत्यनीकसरः षष्टितमः.

## अथ काव्यार्थापत्तिसरः. (६१)

दण्डापूपिकया यत्रार्थान्तरापतनं भवेत् ।
काव्यार्थापत्तिरेषा स्यादलंकारविदां मता ॥

दण्डापूपौ विद्येते यस्यां नीतौ सा दण्डापूपिका नीतिः अहं शक्तोऽ, शक्तोऽस्यां क्रियायामित्यहमहमिकेतिवन्मत्वर्थीयष्ठन्। दण्डापूपाविव दण्डापूपिका 'इवे प्रतिकृतौ' इति कन्वा। अत्र हि मूषककर्तृकेण दण्डभक्षणेन तत्सहभाव्यपूपभक्षणमप्यर्थसिद्धम्। एवंविधो न्यायो दण्डापूपिकाशब्देनोच्यते । यथा दण्डभक्षणादपूपभक्षणमर्थायातं तद्वत्कस्यचिदर्थस्य निष्पत्तौ सामर्थ्यात्समानन्यायलक्षणादर्थान्तरमापतति साऽर्थापत्तिः। तान्त्रिकाभिमतार्थापत्तिव्यावर्तनाय काव्यपदम् । अयमेव कैमुतिकन्याय इत्यप्युच्यते। अत एव 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति लक्षणं प्रणीतं कुवलयानन्दे । नन्वेवमर्थादर्थान्तरप्रतीतेरनुमानमेवेदमिति चेन्न । समानन्यायस्य संबन्धरूपत्वाभात् । दण्डभक्षणे ह्यपूपभक्षणं समानन्यायत्वादुचितमपि न निश्चितमेव। दण्डभक्षणेऽपि पृथक्प्रदेशावस्थानादिना केनापि निमित्तेन अपूपानामभक्षणस्यापि भावात् । अनुमानं पुनर्नियतमेवार्थादर्थान्तरस्यापतनमित्यस्यास्ततः पृथग्भावः ॥

तथाहि—

तव तेजसि भाति विभो न रविर्न विधुर्न भानि न च तडितः। भान्ति कुतोऽग्नेर्वार्ता भान्तं त्वामनुविभाति सर्वमिदम् ॥ १५१५ ॥

अत्र 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वम्' इति श्रुतिप्रतिपादितप्रभावे भगवत्तेजसि सहस्रभानुप्रभृतीनामेव भानदौर्लभ्ये ततोऽप्यतिमात्रन्यूनस्य सलिलासेचनमात्रेणापि शाम्यतोऽग्नेर्भानदौर्लभ्ये कैमुतिकन्यायेन प्रतिपाद्यते ॥

यथावा—

हारलता याकाचिन्नाथ तवोरसि पदं यदि निदध्यात्। त्वद्दयिता जलधिसुता कृतास्पदाऽत्रेति नैतदाश्चर्यम् ॥ १५१६ ॥

अत्र हारलताकर्तृकभगवद्वक्षोऽधिकरणकपदन्यासेन अप्रकृतेन भगवद्वक्षोऽधिकरणकश्रीपदन्यसनरूपस्य प्रकृतस्य सौकर्यं दण्डापूपिकया प्रतिपाद्यते। इयं च हारलतेति स्त्रीलिङ्गशब्देन नायिकात्वप्रतीतेस्समासोक्त्या संकीर्णा। एवमुत्तरत्रापि यथासंभवमूह्यम् ॥

यथावा—

दिनकरवितीर्णपूर्णद्युतिभरमब्जं जयेद्यदि पदं ते। वदनं तथेति सुधियो वदितुं के नाम नाथ संदिहताम् ॥ १५१७ ॥

पदं वदनं च कर्तृ । अब्जं कर्म । कमलं चन्द्रमसं चेत्यर्थः । दिनकरेत्यादिविशेषणमुभयोस्तुल्यम् । वदनं तथेति दिनकरवि-तीर्णपूर्णद्युतिभरमब्जं जयतीति वदितुं के नाम सुधियस्संदिह-तामिति योजना ॥

यथावा—

**अर्थिजनार्दनचकितो भजसेऽच्युत चेत्त्वमेव गिरिदुर्गम् । किं चित्रं श्रयते श्रीस्त्वदुरोदुर्गं निसर्गतो भीरुः ॥ १५१८ ॥**

अर्थिजनानां अर्दनं पीडनं याचनं च । तस्मात् चकितः वेग चकित इति वा । भीत इत्यर्थः ।

यथावा—

**देवस्य लोकबन्धोः प्रसादतः कमलमपि मुखे कविताम् । समुपेत्य यदि च विमलं भवति कविकुलं तथेति किं चित्रम् ॥ १५१९ ॥**

कमलं लोकबन्धोर्देवस्य भानोः 'स नो बन्धुर्जनिता' इत्यु-क्तरीत्या निर्व्याजलोकबान्धवस्य भगवतश्च । प्रसादात् प्रकाशात् अनुग्रहाच्च । मुखे वदने अग्रभागे च । कवितां कवनं कस्य कवर्णस्य वितां विवर्णत्वं समुपेत्य विमलं भवत्येव शुचि भवत्येव 'विप्रश्शुचिः कविः' इति श्रुतेः । विमलमिति शब्दरूपं निष्पद्यत इति तत्त्वम् ॥

यथावा—

समतायां चेद्यतते सुधा भवति नाथ तव-
वाचा । अन्यत्तां तुलयेदिति वार्ता वार्तैव भुजग-
शिखरीन्दो ॥ १५२० ॥

हे नाथ! सुधा तव वाचा समतायां तुल्यतायां यततेचेत् मुधा भवति व्यर्थोद्यमा संपद्यते । निस्सारत्वान्न तत्तुल्या स्यादिति भावः । सुधा सुधेति शब्दव्यक्तिः समतायां सस्य सकारस्य मतायां मवर्णतायां यततेचेत् मुधा भवति मुधेति निष्पद्यत इति चमत्कारातिशयः। अन्यत् वस्त्वन्तरं तां तुलयेदिति वार्ता संभावनाऽपि वार्तैव फल्गुरेव 'वार्तं फल्गुन्यरोगे त्रिषु' इत्यमरः ॥

यथावा—

पटुरुचिना येन जितः कल्याब्जव्यूह एव तस्यास्य । तव वदनस्य कियानिह भविता जड-
राजमण्डलस्य जयः ॥ १५२१ ॥

अत्र वदनस्येति शेषे षष्ठी । राजमण्डलस्येत्यत्र तु कर्मणि । तेन 'उभयप्राप्तौ कर्मणि' इति नियमस्य नायं विषय इति ध्येयम् । कर्तृकर्मणोर्युगपत्कृतिप्राप्त्यावेव तन्नियमप्रवृत्तेः । यद्वा 'शेषे विभाषा' इति वार्तिके विभाषाङ्गीकारात् शब्दानामनुशासनमाचार्येणाचार्यस्य वेत्यादाविव उक्तनियमाप्रवृत्तेः । कर्तृकर्मणोरुभयोरपि षष्ठी निष्प्रत्यूहैव । कल्यः नीरोगः दक्षो वा

सज्जो वा 'कल्यमहर्मुखे। कल्यः कल्याणवाचि स्यात्रिषु नीरोगदक्षयोः' इति रत्नमाला। 'कल्यौ सज्जनिरामयौ, इत्यमरः। तस्य तादृशस्य कस्यचिद्राज्ञ इति गम्यते। यः अब्जव्यूहः पद्माकारस्सेनाविन्यासविशेषः तस्यो वीरजन इति यावत्। वस्तुतस्तु कल्यं प्रभातं तस्मिन् यः अब्जव्यूहः पद्मसमूह इत्यर्थः। जडः स्तब्धः बुद्धिहीनो वा। 'जडस्स्तब्धे बुद्धिहीने हिमग्रस्तेऽपि वाच्यवत्' इति रत्नमाला। तथाविधो यो राजा नृपतिः तस्य यत् मण्डलं राष्ट्रं तस्य। परमार्थतस्तु जडः शिशिरः यः राजा चन्द्रः तस्य मण्डलं बिम्बं तस्येत्यर्थः। अन्यत्सुगमम्। अत्र कल्याब्जव्यूहनिर्जेतुर्वदनस्य जडराजमण्डलजयः कैमुतिकन्यायसिद्धः। श्लेषसमासोक्त्युत्तम्भितेयम्॥

यथावा—

**सर्वज्ञश्लाघ्ये तव वदनेन सता कलानिधौ विजिते। स्वत एव भङ्गभाजो जडजातस्य तु जयेऽत्र को विशयः॥ १५२२॥**

सता विदुषा प्रशस्तेन च तव वदनेन सर्वज्ञश्लाघ्ये विद्वन्मणिश्लाघनीये धूर्जटिशिरोविधृते च। कलानिधौ सर्वविद्यानिवासभूते विदुषि चन्द्रमसि च। विजिते सति। स्वत एव भङ्गं पराभवं तरङ्गं च भजतीति तथोक्तस्य जडजातस्य स्तब्धजन्मनः। निसर्गत एव जडजन्मनः सर्वत्र पराभवमुपयातीति भावः। ईदृशस्य जये अभिभवे को विशयः कस्संदेहः न कोऽपीति भावः। अत्रापि महाविद्वज्जायिनो वदनस्य निसर्गभङ्गशालिजडजातविजयरूपार्थो दण्डापूपिकया निबद्धः॥

यथावा—

करिकुम्भविजयिनस्तव हरिमहिळे परमुरोज-
युगळस्य । अचलविजयः कियान् स्याद्यदसाव-
विरेव विश्रुतो जगति ॥ १५२३ ॥

अविरेव श्रुतः मेष इत्येव ख्यातः । अविशब्दो गिरिमेषोभयवाची । 'अवयशैलमेषार्काः' इत्यनुशासनात् । करिकुम्भविजयिनो मेषजयः कियानिति भावः । अत्र यद्यपि न गिरिः करिकुम्भतो न्यूनः । येन तज्जयः कैमुतिकन्यायेन न्यूनस्स्यात् । तथाऽपि अविशब्दप्रतिपाद्यमेषशैलरूपार्थद्वयस्य श्लेषभित्तिकाभेदाध्यवसायेनैकीकरणान्नन्यूनत्वमिति ध्येयम् । एवं 'पटुरूचिना येन जितः कल्यब्जव्यूह एव' इति प्रागुदाहृते पद्येऽपि द्रष्टव्यम् ॥

यथावा—

नाकोऽपि त्वद्धाम्नो नारक एवान्ततो भवेदि-
तरः । मध्ये लोपगतोऽच्युत नरलाको नरक
इति किमाश्चर्यम् ॥ १५२४ ॥

हे अच्युत! नाकः स्वर्गोऽपि अन्ततः सम्यग्विमर्शे सति तव धाम्नः दिव्यस्य स्थानस्य इतरः प्रसिद्धनरकेभ्यो विलक्षणः नारकः नरक एव भवेत् ।

रम्याणि कामचारीणि विमानानि सभास्तथा ।
आक्रीडा विविधा राजन् पद्मिन्यश्चामलोदकाः ॥
एते वै निरयस्तात स्थानस्य परमात्मनः ।

इति भारतोक्तेरिति भावः। 'स्यान्नारकस्तु नरकः' इत्यमरः। मध्येलोपगतः। मध्या स्वर्गपातालयोर्मध्यवर्तिनी या इला भूरिति उपगतः अवगतः ज्ञात इत्यर्थः। नरलोकः मर्त्यलोकः नरको भवतीति किमाश्चर्यम्। महासुखत्वेन पुराणादिप्रतीतस्य स्वर्लोकस्यैव नरकप्रायत्वे दुःखसहस्रनिरन्तरकवळितो मर्त्यलोको नरकप्रायो भवतीति किमु वक्तव्यमिति भावः॥

पक्षे—नाकोऽपि नाक इति शब्दोपि अन्ततः मध्ये इतरः आसरेफः इतः रः येन स इति विग्रहः। नारक एव नारकशब्द एव भवेत्। नरलोकः नरलोक इति शब्दः मध्ये अन्तराळे लोपगतः लो इति वर्णः अपगतो यस्मात्स तथोक्तः। आहिताग्न्यादेराकृतिगणत्वान्निष्ठायाः परनिपातः। अपगतलोवर्णः नरक इति निष्पद्यत इति किमाश्चर्यम्॥

यथावा—

**शरवर्षैस्तव शमितो मुरोऽग्निनिभ इति किमद्भुतं शौरे। स पुरस्कुरुतामन्यं मुरमयमपि मुर्मुरो भवञ् शाम्येत्॥ १५२५॥**

हे शौरे! तव शरवर्षैः बाणवर्षैः सलिलवर्षैश्च। अग्निनिभः मुरः तन्नामा दैत्यः शमित इति किमद्भुतम्। सः मुरः अन्यं मुरं मुरासुरं पुरस्कुरुतां त्वद्विजयाय स्वापेक्षया प्रबलं मुरान्तरमेवाग्रे कुरुतां 'प्रैषातिसर्ग' इत्यादिना अतिसर्गार्थे लोट्। अतिसर्गः कामचारानुज्ञा। सोऽपि अन्यो मुरोऽपि मुर्मुरः तुषाग्निः भवन् शाम्येत्। 'मुर्मुरस्तु तुषानलः' इति विश्वः। पक्षे मुर इति शब्दः अन्यं स्वापेक्षया भिन्नं मुरं मुर

इत्याकारकं शब्दं पुरस्कुरुतां स्वमुखभागे कुरुताम्। अयमपि मुरशब्दोऽपि मुर्मुरः मुर्मुर इति निष्पद्यमान इत्यर्थः। अत्र प्रबलतरमुरान्तरस्यैव तुषाग्नितुल्यतया शान्तौ मुरासुरस्याग्निनिभस्य शान्तिः कैमुतिकन्यायेन सिद्धा ॥

यथावा—

सकृदीक्षसेऽम्ब यं त्वं स एव कल्याणगुणगणनिधिश्चेत्। तव नित्यनिवासोऽयं तादृग्भवतीति विस्मयः कोऽत्र ॥ १५२६ ॥

अत्र—

स श्लाघ्यस्स गुणी धन्यस्स कुलीनस्स बुद्धिमान्।
स शूरस्स च विक्रान्तो यं त्वं देवि निरीक्षसे ॥

इत्यस्यार्थोऽनुसंहितः ॥

यथावा—

इन्दीवरमेव हरे विन्देच्छ्रुतिशिखरशेखरत्वं चेत्। त्वं तद्व्रजसीत्येतत्कस्य पुनर्विस्मयाय कल्पेत ॥ १५२७ ॥

इन्दीवरमेव भगवत्सवर्णमेवेत्यभिप्रायः। श्रुतिशिखरशेखरत्वं कर्णावतंसत्वं वेदान्तवेद्यत्वं च ॥

व्यवधायकोऽप्ययश्चेद्व्यधायकस्स्यात् क्षमो हिरण्यस्य। प्रह्लादस्य विपत्तौ वराहिततां प्रध्य धायकश्च भवेत् ॥ १५२८ ॥

अव्ययः भगवान्। नाशरहितोऽपीति भावः 'अव्ययोऽस्त्री शब्दभेदे ना विष्णौ निर्व्यये त्रिषु' इति मेदिनी। प्रह्लादस्य विपत्तौ आपदवसरे हिरण्यस्य हिरण्यकशिपोः वधाय वधं कर्तुं व्यवधायकश्चेत् व्यवधानं चासंसक्ततयाऽवस्थानं, औदासीन्यभाक्चेदिति यावत्। व्यवपूर्वकाद्धातेः कर्तरि ण्वुल्। कः क्षमः। कोऽन्यस्तद्वधसमर्थ इत्यर्थः। किंच वरहिततां प्राप्य। प्रह्लादस्येति क इति चानुषज्यते। प्रह्लादस्य वरहिततां वरदानेनानुकूल्यं प्राप्य। धायकश्च पोषकोऽपि को भवेत् 'यत्रामृतः पुरुषस्सोऽव्ययात्मा। अव्ययः पुरुषस्साक्षी' इत्यव्ययतया प्रथितः परमपुरुष एव हिरण्यकशिपुवधतन्नन्दनपोषणयोरुदासीनश्चेत्कस्तत्संहार्योऽन्यः प्रभवेदिति भावः॥

पक्षे व्यवधायकः व्यधायकशब्दः अव्ययः व्यं व्य इत्याकारकवर्णसमुदयं यातीति व्ययः स न भवतीत्यव्ययः। व्यशब्दोपपदकाद्याते: 'आतोनुपसर्गे कः' इति कप्रत्यये 'आतो लोप इटि च' इत्यालोपः। व्यकाररहितश्चेदित्यर्थः। वधायकस्स्यात् वधायक इति निष्पद्येत। अवपूर्वकाद्धातेर्ण्वुलि 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति अवेत्युपसर्गावयवाकारलोपः। ततः वरहिततां वकारविधुरतां प्राप्य धायकश्च धायक इति शब्दोऽपि भवेत्॥

यथावा—

**गोपायापायान्मां पापमपि द्विप इतीममपि भगवन्। पयसिजनयन कियदिदं द्विपावनं लोकपावनस्य तव॥ १५२१॥**

हे भगवन्! पापस्यापि दुष्कृतिनमपि अत्रापिर्विरोधे। इममपि मामपीति भावः। अत्रापिस्समुच्चये। द्विप इति। द्विरद इति पापशब्दस्य पकारद्वयघटितत्वाच्छब्दार्थयोस्तादात्म्यात्तदर्थस्यापि द्विपत्वमिति हार्दोऽभिप्रायः। अपायात् विपदः। गोपाय रक्ष। लोकपावनस्य सकललोकपालानां रक्षकस्य द्विपावनं गजरक्षणं कियत्। द्वौ पातीति द्विपः तस्य वस्तुद्वयपालयितुः गोपनं कियादित्यप्यर्थो गम्यते। द्विपावनमित्यत्र शेषषष्ठ्या कर्मणि षष्ठ्या वा समासः। लोकपावनस्य सकलभुवनपावयितुः द्विपावनं द्वयोः गजस्य मम चेत्युभयोः पवित्रीकरणं इदं कियदित्यप्यर्थः प्रतीयते। तदा पूर्वार्धे गोपनं पवित्रीकरणरूपमित्यनुसंधेयम्। इमानि सर्वाण्युदाहरणानि प्राचामनुरोधेन॥

रसगङ्गाधररीत्या त्विदं लक्षणम्—

**अर्थेन केनचित्तुल्यन्यायादर्थान्तरस्य चेत्।**
**अपत्तिः कथ्यते सैषा काव्यार्थापत्तिरुच्यते॥**

केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिः काव्यार्थापत्तिः। न्यायश्च कारणम्। सा च प्रकृतेन प्रकृतस्य, अप्रकृतेनाप्रकृतस्य, प्रकृतेनाप्रकृतस्य, अप्रकृतेन प्रकृतस्येति तावच्चतुर्भेदा। प्रत्येकमर्थान्तरस्य साम्याधिक्यन्यूनत्वैर्द्वादशधा। ततो भावत्वाभावत्वाभ्यां चतुर्विंशतिभेदा॥

प्रकृतेन प्रकृतस्यापादनं यथा—

**सहजश्रीत्वाद्यदि ते हृद्यत्वं कौस्तुभः प्रपद्येय। सहजश्रीको न कुतः प्रपद्यतां हृद्यतां मणिकिरीटः॥ १५३०॥**

हृद्यत्वं च हृदयस्थितत्वं हृदयप्रियत्वं च। अत्र आपादका-त्प्रकृतादापाद्यमानस्य प्रकृतस्य साम्यम्॥ श्लेषोत्तम्भितमिदम्॥

**नाथ सुमहाच्छविद्युत्पुष्करपुष्कलविकासि तव भासा। असिताभ्रं यदि विजितं जितमसिताब्जमिति तत्समं स्थाने॥ १५३१॥**

हे नाथ! सुमहाच्छा अतिमात्रनिर्मला विद्युत् तटित् यस्मिन्-स्तत्। अन्यत्र सुमहती च्छविः दीप्तिः तया विद्योतत इति सुमहाच्छविद्युत्। द्योततेः क्विप्। पुष्करे व्योम्नि सलिले च। पुष्कलं अतिशोभनं यथातथा विकासि विजृम्भमाणं उत्फुल्लं च। असिताभ्रं नीलजलदः तत्समं। असिताब्जं इन्दीवरं च। स्थाने युक्तम्। सुगममितरत्। अत्र द्वयोरपि प्रकृतत्वं साम्यं च॥

**मद्रक्षणोन्मुखा यदि रक्षोक्त्या सा रमैव तव दयिता। तर्हि हरे तदधीना क्षमाऽपि भविता तथेति नाश्चर्यम्॥ १५३२॥**

हे हरे! रक्षोक्त्या रक्ष त्रायस्व इत्युक्तिमात्रेणैव सा जग-दीश्वरत्वेन दिव्यमहिषीत्वेन च प्रथिता तव दयिता रमैव मद्र-क्षणोन्मुखा यदि तर्हि तदधीना रमाया वशंवदा क्षमा भूदेव्यपि। यद्वा तदधीना उक्त एवार्थः। क्षमा भगवतः क्षान्तिरपि भग-वत्कर्तृकाश्रितापराधक्षमायाः लक्ष्मीपुरुषकारत्वनिष्पाद्यत्वादिति भावः। तथा मद्रक्षणोन्मुखा भवितेति नाश्चर्यम्। 'नित्योन्नतो नृपतिरेव वशीकृतश्चेत्किं कुर्वते परिजना इति कः प्रयत्नः' इति न्यायादिति भावः। पक्षे रमा रमेति शब्दद्वयाकेः रक्षोक्त्या

रेफस्य क्षकारोक्त्या तदधीना क्षकारवश्या सती क्षमा भवितेति क्षमेति निष्पत्स्यत इति नाश्चर्यमित्यप्यर्थश्चमत्कारमतिशाययति । अत्र त्वद्दयितरमारूपप्रकृतार्थापेक्षया प्रकृतायाः क्षमायाः तदधीनत्वेन न्यूनत्वम् ॥

यथावा—

करुणामयि कृतमन्तुं त्वमेव मां यदि रमे परित्यजसि । क्रोधोष्मलोऽपराधिषु नाथोऽपि सुदूरमेव संत्यजति ॥ १५३३ ॥

अत्रापि प्रस्तुतेनापाद्यमानस्य प्रस्तुतस्य न्यूनत्वम् । तच्च करुणामयि क्रोधोष्मल इति विशेषणाभ्यामवगम्यते । अत एवेयं परिकरोक्तोजिता । पूर्वा तु श्लेषसंकीर्णेति विशेषः ॥

पुरुषोत्तम पाप्मानं मम यदि हन्तुं त्वमेव नाशक्नोः । किमिदं नु विस्मयपदं क्षमाऽपि तव नैव शक्ष्यति निहन्तुम् ॥ १५३४ ॥

तव क्षमा क्षान्तिः । अत्र पापस्य अतिमहत्तरत्वेन भगवताऽपि दुरूच्छेदत्वं सिद्धवत्कृतुः कस्यचिदुक्तिः परमपुरुषापेक्षया क्षमायाः स्त्रीत्वेन न्यूनत्वम् । अत एव किं विस्मयपदमिदमित्युक्तम् । अत्रापाद्यापादकयोर्द्वयोरपि प्रकृतत्वम् ॥

अप्रकृतेन अप्रकृतस्यापादनं यथा—

यदि कश्चित्तव तुलनां हृदि वाञ्छति जन्तुरच्युत तदानीम् । भूमेर्धौरन्धर्यं सौमेरवमेव वहति परमाणुः ॥ १५३५ ॥

अत्राप्यप्रकृतात् अपादकात् अप्रकृतस्यापाद्यमानस्याधिक्यम् ॥

प्रकृतेन अप्रकृतस्यापादनं यथा—

सर्वज्ञ यदि तवाग्रे वर्वर्ति मदीयमेतदपि कवनम् । सुरवैणिकवरसंसदि निरजीयत तर्हि मशकगानेन ॥ १५३६ ॥

निरजीयत निर्जितम् । निः पूर्वकाज्जयतेर्भावे लङ् । अत्र वर्वर्तीति विद्यमानतारूपात्प्रकृतार्थात् निरजीयतेत्यापाद्यमानस्याप्रकृतार्थस्य सर्वोत्कृष्टतयाऽवस्थानरूपस्याधिक्यम् ॥

जाग्रति रमापते त्वयि जगदवनार्थे यतेत चेदन्यः । सुलभं विलसति तार्क्ष्ये शलभस्य तदा शकुन्तसाम्राज्यम् ॥ १५३७ ॥

अत्र यतत इति यतनरूपात्प्रकृतार्थात् आपाद्यमानस्य साम्राज्यलाभरूपस्याप्रकृतस्याधिक्यम् ॥

भूमिभिक्षावसरे भगवानेवातिखर्वमूर्तिश्चेत् । सर्वोऽप्यन्यः कृपणः खर्वीभवतीति किं नु वक्तव्यम् ॥ १५३८ ॥

भूमिभिक्षावसरे इत्येतदुत्तरार्धेऽप्यन्वेति ॥

अर्थिनिवहेप्सितार्थास्त्वमेव चेन्नन्नु रमेश न ददीथाः । इतरो भिक्षाकः किं सक्तुकिो मृत्तिकामपि ददीत ॥ १५३९ ॥

अत्राभावेनाभावापादनम् । प्रकृतादप्रकृतस्यापाद्यमानस्य न्यूनत्वं च ॥

यथावा—

क्षमयाऽप्यसमधिगम्ये रमया हरिहृदयसदनया साम्ये । इतरासां महिषीणां सुतरां वार्ताऽपि तस्य दूरतरा ॥ १५४० ॥

अत्राप्यभावेनाभावापादनम् । प्रकृतादप्रकृतस्य न्यूनता च ॥

अप्रकृतेन प्रकृतस्यापादनं यथा—

अधिजलधि निमज्जन्तं मधुसूदन मन्दरं तमुदधार्षीः । भवजलधौ प्लवमानं मामुद्धर्तुं कियान्प्रयासस्ते ॥ १५४१ ॥

अत्राप्रकृतात्तथाविधमज्जन्मन्दरोद्धरणवृत्तान्तात् प्रकृतस्यापततो भवजलधिप्लवमानोद्धरणस्य न्यूनता । किंच आपततः पुनरर्थान्तरस्योपादानानुपादानाभ्यां संभवत्यस्य वैचित्र्यम् । तत्रापततोऽर्थस्योपादाने उदाहरणानि दर्शितानि ॥

अनुपादाने यथा—

वरुणालयधरणीगतमणयोऽपि क्वचन गणयितुं शक्याः । फणिगिरिमणेस्तु सुगुणा गणयितुममुनैव नैव शक्यास्स्युः ॥ १५४२ ॥

अमुनैव श्रीनिवासेनैव । अत्र श्रीनिवासादन्येषां का कथेत्यापतदर्थान्तरमनुपात्तम् ॥

यथावा—

त्वन्महिमपरिज्ञाने सर्वज्ञोऽप्यज्ञ एव देव भवेत्। पूर्णं तं वर्णयितुं चतुरास्योऽप्यचतुरास्य एव हरे ॥ १५४३ ॥

अत्राप्यन्येषां का वार्तेत्यापतदर्थान्तरमनुपात्तम्। विरोधाभाससंकीर्णत्वं तु विशेषः ॥

यथावा—

जाग्रति नाकीशे त्वयि भवेदकाधीनगो हि यो जन्तुः। स भवेद्बालिश एव स्यादपि नगबालिकाधीशः ॥ १५४४ ॥

हे भगवन्! अकं दुःखं पापं वा एषामस्तीत्यकिनः। ते न भवन्तीति नाकिनः तेषां देवानामिति तु हृदयम्। अधीशे अधीश्वरे त्वयि जाग्रत्यपि। 'षष्ठी चानादरे' इति सप्तमी। त्वामनादृत्येत्यर्थः। यो जन्तुः प्राणी अकाधीनगः अकस्य सांसारिकदुःखस्य अधीनान् गच्छतीति तथोक्तः।

आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥

इत्याद्युक्तरीत्या भवदुःखभाजो ब्रह्मादयः तान् श्रित इत्यर्थः। सः नगबालिकाधीशस्स्यादपि सर्वज्ञश्शम्भुरेव भवन्नपीति भावः। बालिश एव वैधेय एव भवेत्। निरतिशयानन्ददायिनमानन्दमयं भगवन्तमुपेक्ष्य कर्मवशगचतुराननाद्याश्रयकारी सर्वज्ञोऽपि मूर्ख एव स्यात्। किमुतान्ये इति भावः। पक्षे नगबालिकाधीशशब्दः

अविद्यमानाः का धी न गा इति चत्वारो वर्णाः यस्य सः अकाधीनगश्चेत् बालिश इति निष्पद्यत इत्यर्थः। अत्र लुप्यमानानां वर्णानां क्रमो न विवक्षितः। अत्र किमुतान्ये इत्यापतदर्थान्तरमनुपात्तम् ॥

सावरणान्ब्रह्माण्डान् कबळयतो युगपदमिततरशक्तेः। नाकादयोऽत्र लोकास्स्तोकाः केऽमी तवाच्युत पुलाकाः ॥ १५४५ ॥

अत्र भगवतो युगपदनेकब्रह्माण्डकबळनेन तदन्तर्गतानां नाकादिलोकानां कबळनस्यार्थिकत्वं कैमुतिकन्यायेन प्रतिपाद्यते ॥

यथावा—

अखिलजगद्दुरितमुषो मद्दुरितमिदं जनार्दन कियत्ते। प्रलयाब्धिशोषणपटोः प्रचण्डकिरणस्य को नु वेशन्तः ॥ १५४६ ॥

को नु कः पदार्थ इत्यर्थः। अत्र प्रतिवस्तूपमा महावाक्यार्थः। दलद्वयमुपमेयवाक्यार्थ उपमानवाक्यार्थश्च। तत्रोपमेयवाक्यार्थगतायामर्थापत्तौ आपाद्यमानस्तन्निमित्तभूतश्चेत्युभावप्यर्थौ प्रकृतौ। उपमानवाक्यार्थगतायां त्वप्रकृतावितीदमेव पूर्वोदाहरणेभ्यो वैलक्षण्यम्। अनया दिशा अन्यदप्यूह्यम् ॥

अत्र विचार्यते—नेयं वाक्यवित्संमतायामर्थापत्तौ निविशते, आपादकस्यार्थस्यापतितमर्थं विना अनुपपत्तेरत्राभावात्। नापि यद्यर्थातिशयोक्तौ, तस्या विपरीतार्थ एव द्वयोर्विश्रान्तेः, न चेह तथा, आपादकस्य सिद्धत्वादापततश्च संभाव्यमानत्वा-

यथाश्रुत एव द्वयोर्विश्रान्तेः। तस्माद्येन न्यायेनैकोर्थस्सिद्धस्ते-नैव न्यायेनापरोप्यर्थस्सेद्धुमर्हतीत्येवंरूपेयमर्थापत्तिः। अस्यां चा-र्थान्तरं लोके अविद्यमानमपि कविना स्वप्रतिभया कल्पयित्वा यद्यापाद्यते तद् ऽलंकारत्वं, यथा 'सुरवैणिकवरसंसदि' इत्यादौ। अन्यथा तु कैमुतिकन्यायतामात्रं यथा 'सावरणान् ब्रह्माण्डान्' इत्यादौ। प्राचीनरीत्या तदुदाहृतमस्माभिः। अत एव तत्र कैमु-तिकन्यायेनेत्युक्तम्। यत्तु 'कैमुत्येनार्थसंसिद्धिः' इति कुवलया-नन्दकृद्भिर्लक्षणमुक्तं तन्नातीवहृदयङ्गमं, कैमुतिकन्यायस्य न्यूना-र्थविषयत्वेनाधिकाद्यर्थापत्तावव्याप्तेः। यथा—

**त्वच्चरणशरणगतमप्यभिभवति श्रीश यदि च भवतापः। पीयूषकिरणमप्यभिभविता शनकैर्नि-दाघभवतापः॥ १५४७॥**

अत्र शनकैश्शब्दमहिम्ना भगवत्प्रपन्नेषु भवतापाभिभवापे-क्षया पीयूषकिरणे ग्रीष्मतापकर्तृकाभिभवो दुष्कर एवेति विदित-मपि न्यायसाम्यादापाद्यते। न तु कैमुतिकन्यायेन॥

अत्र वैद्यनाथः—"केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्या-पत्तिरर्थापत्तिः। न्यायश्चात्र कारणम्। इति रसगङ्गाधरोक्तल-क्षणमयुक्तं, का वार्ता सरसीरुहामिति कैमुत्यन्यायविषयार्था-पत्तावव्याप्तेः। कैमुतिकन्यायस्य न्यूनार्थविषयत्वेन तुल्यन्याय-त्वाभावादापादनाप्रतीतेश्च। न चात्र कैमुत्यन्यायतामात्रं न त्वलं-कारत्वमिति युक्तं, अलंकारतत्वविदामभियुक्तानां प्राक्तनानां शून्यहृदयतायां अपामरेण संभावयितुमशक्यत्वात्। लोकव्य-वहारेऽपि कैमुत्यन्यायस्य चमत्कारित्वानुभवेन तेनैव न्यायेन

तस्या अलंकारतासिद्धेश्च । इत्थं च त्वदुक्तार्थापत्त्युदाहरणे वक्ष्यमाणस्संभावनालंकारः 'योऽन्यैर्यैर्यद्यर्थोक्तौ च कल्पनम्' इति यद्यर्थातिशयत्वेनोक्तः यद्यर्थातिशयोक्तौ आपाद्यापादकयोर्विपरीतार्थविश्रान्तत्वम् । इह तु आपादकस्य सिद्धत्वं आपाद्यस्य संभाव्यमानत्वमिति वैचित्र्यं तु तदवान्तरभेदतायांस्साधकम् । न तु तद्बहिर्भूततायाः इति न तत्राव्याप्तिशङ्काऽपीत्यलम्" इति ॥

इत्यलंकारमणिहारे काव्यार्थापत्तिसरः एकषष्टितमः.

## अथ काव्यलिङ्गसरः. (६२).

यत्सामान्यविशेषत्वानालीढं स्यात्समर्थनम् ।
समर्थनीयस्यार्थस्य काव्यलिङ्गं तदुच्यते ॥

अर्थान्तरन्यासवारणायानालीढान्तम् ॥

यथावा—

भो दोषा युष्माभिर्वस्तुं स्थानान्तराणि मृग्यन्ताम् । लभ्योऽत्र नावकाशो मघ्यघकूलंकषो वसति कश्चित् ॥ १५४८ ॥

अत्र दोषाणामवकाशालाभरूपः पूर्ववाक्यार्थः । तस्य च सकलदोषनिश्शेषहरणचणश्रीहरिसांनिध्यप्रदर्शनरूपोत्तरवाक्यार्थेन समर्थनं काव्यलिङ्गम् ॥

यथावा—

त्वामाश्रितवत्सल इति वदतां नाच्युत विवेकलेशोऽपि । येन कृता रिपुसुहृदोर्विश्वाश्वगजावनीप्राप्तिः ॥ १५४१ ॥

येन त्वया रिपुसुहृदोः विश्वाश्वगजावनीप्राप्तिः कृता । रिपुपक्षे—विश्वा विगतः श्व इत्याकारकवर्णः यस्यास्सा । अश्वगजावनीप्राप्तिः श्ववर्णापाये अगजावनीप्राप्तिरिति निष्पद्यते । शैलप्रदेशगतभूम्यवाप्तिः तेषां सर्वस्वभ्रंशनाद्वनान्तरप्रापणं कृतमिति भावः । सुहृत्पक्षे—विश्वं समस्तं यत् अश्वगजं तस्य अवनी पालयित्री प्राप्तिः अभ्युदयः ऐश्वर्यमित्यर्थः । 'उदयेऽधिगमे प्राप्तिः' इत्यमरः । कृता । यद्वा विश्वाश्वगजं च अवनी च तासां प्राप्तिः लाभ इति । अत्रोत्तरवाक्यार्थेन पूर्ववाक्यार्थसमर्थनं श्लेषोत्तम्भिततुल्ययोगिताविशेषपरिष्कृतमिति पूर्वापेक्षया विशेषः ॥

ननु विश्वाश्वगजावनीशब्देन शैलप्रदेशगतभूम्यवाप्तिरूपार्थस्य कथं प्रतीतिः? वाचकशब्दप्रयोगमन्तराऽर्थप्रतीतेरयोगात् । विश्वाश्वगजावनीशब्दस्य तदर्थवाचकशब्दत्वाभावादिति चेत्सत्यम् । विगतश्ववर्णस्याश्वगजावनीशब्दस्येत्यर्थान्तरस्य श्लेषमहिम्ना उपस्थितौ तादृशशब्दस्यैवात्र विवक्षितत्वात् । तादृशशब्दस्य प्रकृतोपयोगित्वं न स्वतः । किंतूक्तार्थेनाभेदाध्यवसायसहकारात् । अभेदाध्यवसायनिमित्तं च योऽर्थस्स शब्दः इति तादात्म्यव्यवहारः । तादात्म्यं च मञ्जूषादौ व्यक्तमित्युत्प्रेक्षालंकारप्रकरणे 'विद्युन्मुखे विकारम्' इत्यत्र स्फुटं न्यरूपयाम । यद्वा श्लेषमहिम्ना अगजावनीशब्दस्योपस्थितौ तदर्थस्याप्युपस्थितिरित्यालंकारिकसमयः । अतो नार्थप्रतीत्यनुपपत्तिरिति ॥

पदवाक्यरत्नाकरे तु एकशब्दोपात्तयोर्वाच्यार्थयोरिव शब्द-रूपव्यङ्ग्यार्थस्यार्थरूपवाच्यार्थस्य चाभेदाध्यवसाय इत्युक्तम्। अयं हि तद्ग्रन्थः "आलंकारिकास्तु व्यञ्जनया वृत्त्या उपस्थितानां पदानामन्वयबुद्धौ कचित्तादात्म्येन कचिद्वाच्यवाचकभावेन पदार्थानुप्रवेशः। तथाहि—

"दया तितिक्षां सत्यं च युक्तं व्यक्तं ननु त्वया।
अपवर्गव्यञ्जनानि कथं स्युर्भीमभूमिप॥

इत्यत्र भीमाभिधाने राजनि प्रकृते भीमभूमिपपदस्य व्यञ्जनालभ्यस्य तादात्म्यमारोप्य तस्मिन्नपवर्गव्यञ्जनानामासन्नसिद्धिसूचकानां दयातितिक्षादीनां प्रस्तुतानां ध्वनिप्रतीतपवर्गेतरस्वरान्यवर्णाभेदेनासंभवः कथं स्युरित्यनेन प्रतिपाद्यते" इत्यादि। अधिकं तु तत्रैवानुसंधेयम्। एवंच तादात्म्यं शाब्दिकानामिवालंकारिकाणामप्यभिमतमित्यत्र न कोऽपि संदेहः। अनया दिशा 'मूकीभावो विशिष्यते' इत्याद्युदाहरणेष्वपि निर्वाहो द्रष्टव्यः॥

यथावा—

**स्याज्जातु नापयातो भवदाधारो हरे पयोनिधिराट्। अपराजिततां प्राप्तो निरहिततां चापि योधिराड्भवति॥ १५५०॥**

हे हरे! भवदाधारः भवान् आधारः आश्रयः यस्य स तथाभूतः, तत्त्वं तु भवतः अधारः अधिकरणमिति। भवतस्समुद्रशायित्वादिति भावः। पयोनिधिराट् जलधिराजः जात्वपि अपयात रणे अपयानं प्राप्तः पराभूतः न स्यात्। भवदाश्रितस्यापयानं न भवेदिति भावः। वस्तुतस्तु न आपयात इति

छेदः । अपां समूहः आपं आपं यातं गतं यस्मात्स तथोक्तः विगतसलिलनिवह इत्यर्थः । न स्यात् सदाऽपि सलिलपूर्णत्वादिति भावः । पक्षे न अपयातः पेन पकारेण यातः पयातः न पयातः अपयातः न स्यात् । पयोनिधिराट्छब्दस्य पकारघटितत्वादित्यर्थः । शब्दार्थयोस्तादात्म्यम् । यः पयोनिधिराट् अपराजिततां अपराभूततां, निर्गताः अहिताः यस्य सः निरहितः तस्य भावः निरहितता । तां निस्सपत्नतां च प्राप्तस्सन् अधिराट् राजाधिराजो भवति । स कथमिव अपयातः स्यादिति योजना । पक्षे पयोनिधिराट्छब्दः अपराजिततां पवर्णभासुरत्वाभावं निरहिततां निवर्णराहित्यं च प्राप्तः योधिराट् भवति योधिराडिति निष्पद्यत इत्यर्थः । अत्राप्युत्तरार्धवाक्यार्थेन पूर्वार्धवाक्यार्थस्य समर्थनम् । वक्ष्यमाणपदार्थहेतुकस्यापीदमुदाहरणं भविष्यति ॥

यथावा—

**इन्द्राधिकस्त्वदीयस्तन्द्राधिक एव भवति परकीयः । कथमनयोरैक्यं स्यादभिदधति तयोरितस्ततो भेदम् ॥ १५५१ ॥**

इन्द्राधिकः इन्द्रादप्यतिशयितश्रीः । तन्द्राधिकः अधिकतन्द्रः अलस इत्यर्थः । तयोः त्वदीयपरकीययोः इतस्ततः तत्रतत्र भेदं, पक्षे तयोः इन्द्रधिकतन्द्राधिकशब्दयोः इतः इकारेण ततः तकारेण च भेदं वैलक्षण्यं अभिदधति । जना इति शेषः । तयोस्तावानेव भेदो नान्य इति भावः । अत्र अभिदधतीत्यादिवाक्यार्थेन उत्तरेण पूर्ववाक्यार्थसमर्थनम् । भगवदीयान्यदी-

ययोस्साम्यं गदितारं प्रत्युक्तिरूपतामभिप्रेत्येति ज्ञेयम् । अन्यथा तु पदार्थेन वाक्यार्थस्य समर्थनम् ॥

यथावा—

**सङ्गस्य सतां महिमा निरवधिकोऽब्जाक्षसेविनां येन । द्युसदग्रणीर्ययातिर्द्युच्युतिमानपि सदग्रणीरासीत् ॥ १५५२ ॥**

अब्जाक्षसेविनां सतां सङ्गस्य महिमा निरवधिकः । येन सत्सङ्गमहिम्ना द्युसदां दिवौकसां अग्रणीः ययातिः द्युच्युतिमानपि त्रिदिवात्केनचिन्निमित्तेन भ्रष्टोऽपि सदग्रणीः सन्तः स्वदौहित्राः प्रतर्दनशिबिप्रभृतयः अग्रं नयन्तीयग्रण्यः उत्तारकाः यस्य स तथोक्त एवासीत् । त्रिदिवाद्भ्रंश्यन् ययातिस्सद्भिस्स्वदौहित्रैस्तारित इत्यैतिहासीकी कथा ॥

यथा ययातिस्सन्मध्ये पतितः पुनराप्तवान् ।
स्वःपदं तत्तथा सत्सु पतितो न विमुह्यति ॥

इत्यादिप्रमाणान्यत्रानुसंहितानिः । पक्षे द्युसदग्रणीरितिशब्दः द्यु इति वर्णसमुदयच्युतौ सदग्रणीरिति निष्पन्न इत्यर्थान्तरमप्यत्र चमत्कारि । अत्राप्युत्तरवाक्यार्थेन पूर्ववाक्यार्थसमर्थनम् ॥

यथावा—

**त्वच्चरणमेव शरणं त्वत्तोऽपि वरिष्ठमिति वृणे शरणम् । सुगतिं ददाति यदिदं जगतां सुगतिप्रदस्य भवतोऽपि ॥ १५५३ ॥**

हे भगवन्! त्वच्चरणमेव त्वत्तोऽपि वरिष्ठं शरणं रक्षकं इति मत्वा शरणं वृणे उपायतया वृणोमि।

उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम्।
वर्तते सांप्रतं चैष उपायार्थैकवाचकः॥

इत्यहिर्बुध्न्यसंहितोक्तेः। यदिदं त्वच्चरणं जगतां सुगतिं शोभनमुपायं गम्यं स्थानं उत्तमदशां वा प्रददातीति तथोक्तः। तथाविधस्य भवतोऽपि सुगतिं ददाति, उक्त एवार्थः। रमणीयं गमनमिति तु वस्तुस्थितिः। 'गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः' इति मेदिनी॥ अत्राप्युत्तरवाक्यार्थेन पूर्ववाक्यार्थस्य समर्थनम्॥

यथावा—

मा गास्तामससमतां माधवसक्तं कदाऽपि मानस भोः। सा न निवर्तेत ततस्सहस्रकृत्वोऽप्यधश्शिरःपतने॥ १५५४॥

भो मानस! त्वं माधवविमुखं सत् कदाऽपि तामससमतां तामसप्रकृतिभिस्तुल्यतां मा गाः। वैपरीत्ये अनिष्टमापद्येतेत्याह—सेत्यादिना। ततः तामससमतावाप्त्यनन्तरं सा तामससमता सहस्रकृत्वः अधश्शिरःपतनेऽपि न निवर्तेत इति लोकोक्तिः। अतो मा तामसं भूरिति भावः। पक्षे सा तामससमतेति शब्दव्यक्तिः। अर्थगतं स्त्रीत्वं शब्दे आरोप्यत इत्यसकृदवोचाम। सहस्रकृत्वः अधश्शिरःपतनेऽपि वैपरीत्यप्राप्तावपीति यावत्। न निवर्तेत निवृत्तिप्रयुक्तवैलक्षण्यं नाप्नुयादिति यावत्। पूर्वानुपूर्वीविशिष्टैव भवतीति भावः। अत्राप्युत्तरार्धवाक्यार्थेन पूर्वा-

र्धवाक्यार्थसमर्थनम्। अत्र तामससमतावाप्तिप्रतिषेधस्य माधवसङ्गरूपपदार्थेन समर्थनं वा॥

यथावा—

**कुरु दीर्घाकारां श्रीः कृपां विहितसंप्रसारणां सदये। न तव ख्यायेत कृपा सुतरामयि संप्रसारणाकरणे॥ १५५५॥**

हे सदये श्रीः! दीर्घः आकारः स्वरूपं यस्यास्तां तथोक्तां कृपां करुणां विहितं कृतं संप्रसाराणं सुदूरव्यापनं यया तां तथोक्तां कुरु। मय्यविच्छिन्नां कृपां प्रसारयेत्यर्थः। मयि त्वत्कृपावलम्बैकार्थिनीति भावः। संप्रसरणाकरणे तव सुतरा शोभनतरा कृपा न प्रख्यायेत न प्रथेत। त्वत्कृपैकशरणे दीने मयि त्वं कृपां न प्रसारयसि चेत्तव कृपायाः ख्यातिरेव नोन्मिषेदिति भावः॥

पक्षे दीर्घः अकारः अवर्णोऽन्ते यस्यास्तां आकारान्तामित्यर्थः। कृपां कृपेति शब्दव्यक्तिं विहितं वक्ष्यमाणसूत्रेणानुशिष्टं संप्रसारणं रेफरूपयण्स्थानिकसंप्रसारणसंज्ञकऋवर्णं यस्यास्तां तथोक्तां कुरु। सुतरां अयि इति छेदः। अयि श्रीरिति योजना। संप्रसारणाकरणे 'कृपेस्संप्रसारणं च' इति बिदाद्यङ्संनियोगशिष्टसंप्रसारणस्य अकरणे कृपा कृपेति शब्दव्यक्तिरेव तव सुतरां न ख्यायेत। न सिध्येदिति यावत्। अत्र पूर्वार्धवाक्यार्थस्य कृपासंप्रसारणावश्यकतारूपस्य तदकरणे तदख्यात्यापादनरूपो-

त्तरार्धवाक्यार्थेन समर्थनम् । अत्रापि पूर्ववदेव सदयत्वरूपपदार्थो वा हेतुः ॥

यथावा—

**त्वच्चरणशरणवरणादकुतोभयतामलप्स्महीदानीम् । कीनाशमनादरणात्कीशमिवेक्षामहे महेश वयम् ॥ १५५६ ॥**

हे महेश! भगवन् !

यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ॥

इति श्रुतेः । अतएव 'महेश हातुं तव पादपङ्कजम्' इति यमुनाचार्याश्चाहुः । अलप्स्महि अलभामहि । इदानीं ईदृशलाभानन्तरमित्यर्थः । कीनाशं कृतान्तं क्षुद्रमित्यपि गम्यते । 'कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु' इत्यमरः । अनादरणात् निर्लक्ष्यमित्यर्थः । कीशमिव कपिमिवेक्षामहे अकिंचित्करं मन्यामहे इति भावः । 'मर्कटो वानरः कीशः' इत्यमरः । पक्षे कीनाशशब्दे नः नाकारस्य आदरणं नादरणं ततो नञ्समासः अनादरणं तस्मात् नाकारत्यागादिति यावत् । कीशं कीशशब्दं ईक्षामहे । कीनाशशब्दं नाकारोत्सारणेन कीशशब्दं विद्म इत्यर्थः । इवशब्दो वाक्यालङ्कारे । स्पष्टमन्यत् । अत्र भगवच्चरणशरणवरणनिबन्धनाकुतोभयत्वप्राप्तिरूपपूर्ववाक्यार्थेन इदानीमित्यादेः कीनाशकीशतादर्शनरूपोत्तरवाक्यार्थस्य समर्थनम् । अयमेव पूर्वोदाहरणेभ्यो विशेषः । पूर्वत्र उत्तरवाक्यार्थेन पूर्ववाक्यार्थसमर्थनं हि कृतम् ॥

यथावा—

अग्रीयं शमवन्तं शरणं विन्दामहे शरण्य त्वाम् । पुर एवाशमयुक्तं पुनश्शरण्यान्तरं भजेम कुतः ॥ १५५७ ॥

शरणे साधुः शरण्यः । तस्य संबुद्धिः हे शरण्य ! भगवन् अग्रियं परार्ध्यं निरतिशयमित्यर्थः । शं सुखं अवन्तं प्राप्नुवन्तं अवतेरवाप्त्यर्थकत्वेनानुशिष्टाच्छता । 'कं ब्रह्म खं ब्रह्म' इति निरतिशयविपुलसुखरूपत्वश्रवणात् 'सुखविशिष्टाभिधानादेव च' इति सूत्रितत्वादिति भावः । त्वां, यद्वा अग्रीयं उत्कोऽर्थः शमवन्तं शान्तं अशनायाद्यूर्मिषट्कप्रतिभटमित्यर्थः । 'यत्तच्छान्तमजरम्' इति श्रुतेः । इह अस्मिन् जन्मनि शरणं उपायं रक्षितारं च विन्दामहे । पुनः इतःपरमपीति यावत् । पुर एव आदावेव अशं सुखविहीनं अत एव अयुक्तं आश्रयणानर्हं च । यद्वा अशमयुक्तं अशान्तमित्यर्थः । शरण्यान्तरं अन्यं शरण्यं तु कुतो भजेम । न भजेमैवेत्यर्थः । पक्षे हे शरण्य ! रक्षणसाधो अग्रीयं आद्यं शं शकारं अवन्तं प्राप्नुवन्तं त्वां भवन्तं शरणं गृहं लब्ध्वा पुर एव आदावेव अशं शकाररहितं अयुक्तं शकारस्थाने अकारयुक्तं शरण्यान्तरं अरण्यान्तरमित्यर्थः । अन्तरं मध्यं कुतो भजेम । रक्षणसाधु गृहं लब्ध्वा असुखमयुक्तं अरण्यान्तरं कुतो भजेमेत्यर्थश्च चमत्कारी । अत्र शरण्यत्वादिगुणशालिभगवच्चरणलाभरूपपूर्ववाक्यार्थेन अतादृशशरण्यान्तरभजनौदास्यरूपोत्तरवाक्यार्थसमर्थनं श्लेषमूलकव्यतिरेकगर्भमुपपादितचमत्कारान्तरपोषितं चेत्यवधेयम् ॥

यथावा—

जगतां जननि भवत्या क्रमादनालोकितौ यदि भवेताम्। नाकेशो वा सत्यं लोकेशो वाऽपि केशभूतौ स्तः ॥ १५५८ ॥

हे जगतां जननि! नाकेशः इन्द्रो वा लोकेशः ब्रह्मा वा। 'हिरण्यगर्भो लोकेशः' इत्यमरः। क्रमात् यथापूर्वमनुग्रहात् अनालोकितौ अकटाक्षितौ भवेतां यदि तदा केशभूतौ केशप्रायौ स्तः अतिवेलनिस्सारौ भवत इति भावः। पक्षे नाकेशशब्दो लोकेशशब्दश्च क्रमात् अनालोकितौ अविद्यमानौ ना लो वर्णौ ययोस्तौ अनालोकौ 'शेषाद्विभाषा' इति कप्। अनालोकौ कृतौ अनालोकितौ भवेतां यदि क्रमेण नाकेशशब्दो नावर्णेन लोकेशशब्दो लोवर्णेन च विरहितौ चेदित्यर्थः। केशभूतौ केशशब्दतया निष्पन्नावित्यर्थः। अत्र विवक्षिते लक्ष्मीकटाक्षलक्षितत्वाभावप्रतिषेधे उत्तरवाक्यार्थस्य हेतुत्वम् ॥

यथावा—

यो भाति वासुदेवः प्रथते यश्चापि वामदेव इति। श्रौतस्सुमतो भेदोऽस्त्यनयोरभिदां वदन्न किं मूर्खः ॥ १५५९ ॥

अनयोः वासुदेववामदेवयोः भेदः श्रौतः सुमतः 'नारायणाद्रुद्रो जायते' इत्यादिश्रुतिप्रसिद्धतया सर्वसम्मत इत्यर्थः। अनयोरित्येतन्मध्यमणिन्यायेनोभयतोऽन्वेति। अनयोः एवं भिन्नत्वेन श्रुतिप्रसिद्धयोः अभिदां अभेदं वदन् जनः मूर्खो न किं मूर्ख

एवेत्यर्थः । किंच वासुदेववामदेवशब्दयोः सुमतः सुकारमकाराभ्यां सार्वविभक्तिकस्तसिः । भेदः श्रौतः कण्ठरवेणोक्तः । अनयोः एवं विधयोः शब्दयोः अभेदं वदन् मूर्ख एवेत्यर्थान्तरमपि चमत्कारातिशयमाधत्ते । अत्र यो भातीत्यादिपूर्ववाक्यार्थेन अनयोरभिदामित्याद्युत्तरवाक्यार्थस्समर्थ्यते ॥

यथावा—

**वशिनं नारायणमिह वदन्ति सन्ततमनन्तनिगमान्ताः । यदि नशिवं तं ब्रूयाद्यःकश्चित्स प्रतीपदृङ्नूनम् ॥ १५६० ॥**

अनन्ताः निगमान्ताः 'सर्वस्य वशी । एको वशी' इत्यादयः उपनिषदः संततं नारायणं 'एको ह वै नारायण असीत् । अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेय' इत्यादिश्रुतिभिस्सर्वजगत्कारणत्वेन जोघुष्यमाणमिति भावः । वशिनं वशः प्रभुत्वं आयत्तत्वं वा । सोऽस्यास्तीति वशी । तं तथोक्तं वदन्ति 'वशो जनिस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः' इति विश्वः । 'जगद्वशे वर्ततेदम्' इत्यादिकमपीह स्मर्तव्यम् । तं एवं वशिनं सर्वेश्वरं यःकश्चित् नशिवं नशब्देन समासः । अकल्याणगुणं ब्रूयाद्यदि स एव वक्ता प्रतीपदृक् नूनं विरुद्धार्थदृष्टैव । सर्वेश्वरत्वौपयिककल्याणगुणगणपरिपूर्णमप्यशिवं ब्रूयाच्चेत् तस्य श्रुतिप्रतिकूलार्थदृक्त्वे कस्संदेह इति भावः । यद्वा सर्वं जगद्यदायत्तमिति ब्रवीतिश्रुतिः तस्य सर्वनियन्तुः 'नारायणाद्रुद्रो जायते' इति शिवस्यापि कारणतया तथैव श्रुत्या प्रतिपादितस्य 'शिवश्च नारायणः' इति कण्ठरवेणोक्तं कार्यकारणत्वनिबन्धनं नियाम्यनि-

यामकभावनिबन्धनं शरीरात्मभावनिबन्धनं वा सामानाधिकरण्यमविदित्वा तं नशिवं ब्रूयाद्यदि तस्य प्रतीपदर्शित्वे को विशय इति भावः। पक्षे वशिनमित्यानुपूर्वीमत्पदं नशिवमिति वदेच्चेत् सः प्रतिलोमदृष्टिरेव। उक्तानुपूर्व्याः प्रातिलोम्येन तथा निष्पत्तेरिति भावः। अत्रापि वशिनमित्यादिपूर्ववाक्यार्थेन स प्रतीपदृगित्युत्तरवाक्यार्थस्य समर्थनम्। पूर्वस्मिन्नुदाहरणे भगवतो रुद्रस्य च निष्कृष्टरूपनिबन्धनो भेद उक्तः। इह तु शरीरवाचकशब्दानां शरीरिपर्यन्तत्वनिबन्धनं कार्यकरणभावादिनिबन्धनं वा सामानाधिकरण्यमवलम्ब्याभेद इति बोध्यम्॥

यथावा—

पद्मेऽत्यरुणरुचा तव चरणेन स्पर्धते तरणि-

रेनम्। भास्वरतरमप्याहुर्विसर्जनीयाग्रगण्यन्तम्॥

हे पद्मे! अरुणं भानुमतिक्रान्ता अत्यरुणा रुक् भाः यस्य तेन अतिमात्रारुणभासा वा तव चरणेन तरणिः भानुः स्पर्धते। अत एव तमेनं तरणिं भास्वरतरमपि अतिद्युतिशालिनमपि विसर्जनीयानां बहिष्कार्याणां अग्रगण्यं आहुः। सन्त इति शेषः। त्वच्चरणस्पर्धिनोऽप्यन्यः को नाम बहिष्कार्य इति भावः। वस्तुतस्तु एनं तरणिरिति शब्दं भास्वरौ तरौ तकाररेफौ यस्मिंस्तं विसर्जनीयः विसर्गः अग्रगः चरमभागविद्यमानः यस्य सः तादृशो णिः णिवर्णः अन्ते यस्य तं विसर्जनीयाग्रगण्यन्तमाहुः तरणिशब्दस्य तथाविधत्वादिति भावः। शब्दार्थयोस्तादात्म्यम्। अत्रापि पूर्वार्धवाक्यार्थेनोत्तरार्धवाक्यार्थसमर्थनम्। अप्रस्तुतप्रशंसासंकीर्णम्॥

यथावा—

आदौ सश्रीकमथ त्वत्पदवसुहारिविप्रतीपमलम् । कमलं कलमत्वमयच्छ्रितान्यलिङ्गं वनान्तरेऽवात्सीत् ॥ १५६२ ॥

हे पद्मे! इति पूर्वपद्यादनुषज्यते। कमलं आदौ सश्रीकं सशोभं सवैभवं वा सत् अथ अनन्तरं त्वत्पदवसुहारि त्वच्चरणश्रीहरं त्वद्भवनरुचिहरं च सत् अत एव विप्रतीपः अप्रतिद्वंद्वः मलः पापं मालिन्यं च यस्य तत्तथोक्तम्। जगज्जननीपदसंपदपहारादन्यत्किमतिशायितं दुरितं स्यादिति भावः। विगतः प्रतीपः प्रतिकूलः यस्य तदिति विग्रहः। कलमत्वं चोरत्वं व्रीहिस्यत्वं च अगात् प्राप्नोत् । ततः अनन्तरं श्रितं अन्यलिङ्गं चिह्नान्तरं येन तत्तथोक्तं वेषान्तरप्रतिच्छन्नपूर्वरूपमिति यावत्। वने क्वापि विपिने जले चावात्सीत् वसति स्म। पक्षे कमलमिति पदं आदौ सश्रीः कः यस्य तथोक्तं प्रकाशमानकवर्णमित्यर्थः। अथ विप्रतीपौ मलौ मकारलकारौ यस्य तत्तथोक्तं व्यत्यासितमकारलकारमित्यर्थः। अत एव कलमत्वं कलमशब्दत्वं अगात्। श्रितं अन्यलिङ्गं लिङ्गान्तरं येन तत्तथोक्तम्। कमलशब्दत्वावस्थायां स्थितं क्लीबत्वं त्यक्त्वा पुंलिङ्गतां प्राप्तमित्यर्थः। ‘कलमो लेखनीचोरशालिकाक्षुरकेषु च’ इति। कलमः पुंसि मेदिन्यां शालौ पाटच्चरेऽपि च’ इति विश्वमेदिनीकोशाभ्यां कलमशब्दस्य पुंलिङ्गतानुशासनादीति भावः। अत्रापि पूर्वोदाहरणवदेव सर्वं द्रष्टव्यम् ॥

यथावा—

कलयसि कमलविलोचन काञ्चन सुतरांहतिं हिताहितयोः। सर्वसमस्त्वं न कथं दर्वीकरशेखराद्रिनाथ भवेः॥ १५६३ ॥

हिताहितयोः काञ्चनसुतरांहतिं कलयसि। त्वं सर्वसमः कथमिव न भवेः। हितस्य जनस्य सुतरा शोभनतरा अंहतिः विश्राणनं काञ्चनस्य सुवर्णोपलक्षितविभवस्य सुतरांहतिः, तां 'अपसर्जनमंहतिः' इति विश्राणनपर्यायेष्वमरः। हन्ति दुरितमनया अंहतिः 'हन्तेरंहश्च' इत्यौणादिके अतिप्रत्यये हन्तेरंहादेशः। अहितस्य तु काञ्चन अनिर्वचनीयां सुतरां अतिमात्रहतिं हिंसाम्। हन्तेः क्तिन्। 'अंहतिस्त्यागरोगयोः' इति हेमचन्द्रकोशपर्यालोचनायां तु यद्यपि अहितपक्षेऽप्यंहतिशब्दमेवादाय अंहतिं रोगमिति व्याख्यानेऽपि विवक्षितसिद्धिर्भवत्येव। तथाऽपि पदभङ्गकृतविच्छित्तिविशेषसद्भावात्प्रागुक्तपक्षार्थश्श्रेयान्। यद्वा पुंवाक्येषु नानार्थकत्वस्य दोषाभावादर्थद्वयमप्यस्तु। शिष्टं स्पष्टम्। अत्र पूर्वार्धवाक्यार्थेन सर्वसमत्वमित्याद्युत्तरवाक्यार्थस्य समर्थनम्। इदं हित हिताद्युक्तितौल्यलक्षणतुल्ययोगितया श्लेषप्रतिभोन्मीलितया दत्तहस्तमिति ध्येयम्॥

यथावा—

एका कुवलयबन्धुर्जगतां बन्धुः परा तु दृग्यस्य। अस्मादपि को बन्धुर्नमतां संभाव्यतां दयासिन्धुः॥ १५६४ ॥

अत्र पूर्वार्धवाक्यार्थेन जगद्बन्धुभूतलोचनद्वितयवत्त्वरूपेणोत्तरार्धगतस्य भगवतश्शरणागतबन्धुतानिर्णयरूपवाक्यार्थस्य कैमुत्येन समर्थनमिति विच्छित्तिविशेषः ॥

यथावा—

त्वदपाङ्गान्वयभाजस्तदभाजश्चापि भवति परभेदः । आद्यो विष्टपभृत्स्यादन्त्यः फणिशैलनाथ विष्टरभृत् ॥ १५६५ ॥

परभेदः उत्कृष्टो भेदः महान् भेद इत्यर्थः । पकाररेफाभ्यां भेद इत्यर्थोऽप्युपस्कार्यः । आद्यः त्वदपाङ्गान्वयभाक् विष्टपभृत् भुवनभर्ता लोकपाल इत्यर्थः । अन्त्यः तदभाक् विष्टरभृत् परेषां पीठाद्यासनभृत् किंकर इति यावत् । दर्भमुष्टिधारी इतरयाजनादिकर्तेति यावदिति वा । 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्' इत्यमरः । लोकपालान्यकिंकरयोर्महान् भेद इति भावः । विष्टपभृद्विष्टरभृच्छब्दयोः पकाररेफाभ्यामेव भेदः । अन्यवर्णानुपूर्व्या उभयत्र तुल्यत्वादिति परभेद इत्युक्तम् । अत्र पूर्वार्धप्रतिपादितपरभेदभवनरूपवाक्यार्थस्यैकस्योत्तरार्धवाक्यार्थाभ्य द्वाभ्यां समर्थनं व्यतिरेकगर्भमिति पूर्वेभ्यो वैलक्षण्यम् ॥

यथावा—

दूरेऽपसर तमस्त्वं चक्रधरो मम चकास्ति हृदि नित्यम् । यदि चेष्टसेऽल्पमपि वा तवावशिष्येत नोत्तमाङ्गमपि ॥ १५६६ ॥

हे तम इति तमोगुणाभेदेनाध्यवसितस्य राहोस्संबुद्धिः । अत्र तमसो दूरापसर्पणं अनपसर्पणेन यत्किञ्चिदपि चेष्टसे पूर्ववदुत्त-

माङ्गावशेषणमपि दुर्लभमित्येतौ पूर्वोत्तरवाक्यार्थौ । चक्रधरो मे चकास्ति हृदीति स्वहृदयाधिकरणकराहुशिरश्छेत्तृसुदर्शनायुधधरभगवत्प्रकाशरूपवाक्यार्थेन मध्यमाणिकल्पेन समर्थितावित्येकेन वाक्यार्थेन वाक्यार्थद्वयसमर्थनं पूर्वेभ्यो विच्छित्तिशालि ॥

मालारूपमपीदं दृश्यते । यथा—

त्वां य उदास्ते माधव मदवृत्तिस्स मनुजोऽपि दनुजस्स्यात् । नित्यमुपास्ते यस्त्वां दमवृत्तिस्स दनुजोऽपि मनुजस्स्यात् ॥ १५६७ ॥

हे माधव ! मदवृत्तिः मदे गर्वे वृत्तिर्यस्य स तथोक्तः । स मनुजोऽपि मानवोऽपि मत्ततया उदासितृत्वाद्दनुज एव स्यात् आसुरस्वभाव एव भवत् । पक्षे मनुजशब्दः मकारस्थाने दकारन्यासे दनुज इति निष्पद्येतेत्यर्थः । यस्तु त्वां नित्यं दमे दान्तत्वे वृत्तिर्यस्य स तथोक्तः । दकारस्थाने मकारन्यासे इत्यर्थः । स दनुजोऽपि मनुजः दमशीलत्वान्मनुजतुल्य एव भवेत् । पक्षे दनुजशब्दो मनुज इति निष्पद्येतेत्यर्थः । अत्र विवक्षितयोरुदासनप्रतिषेधोपासनावश्यकतयोः पूर्ववाक्यार्थयोरुत्तरवाक्यार्थाभ्यां समर्थनमिति मलारूपत्वम् । एवमुत्तरत्रापि यथायथं द्रष्टव्यम् ॥

यथावा—

आलोकितास्त्वया ये भवन्ति ते लोकपालभृत एव । ते पुनरलोकिता यदि जननि भवेयुः कपालभृत एव ॥ १५६८ ॥

अलोकिताः अदृष्टाः, अविद्यमानः लोवर्णो येषां ते अलोकाः 'शेषाद्विभाषा' इति कप्। अलोकाः कृताः अलोकिताः। अत्रापि पूर्ववदेव मालारूपत्वम्॥

यथावा—

**शममभिवर्धय सततं मम शङ्कामत्र यदि तनोषि त्वम्। कामो भविता वृद्धः क्षेमो मे स्यात्ततः कथं शौरे॥ १५६१॥**

हे शौरे! सततं मम शमं शान्ति अभिवर्धय। अत्र शान्त्यभिवर्धनाविषये त्वं शङ्कां विशयं तनोषि यदि कामः विषयाभिलाषः वृद्धः अभिवृद्धो भविता। ततः अनन्तरं मे क्षेमः संसारोत्तारादिकुशलं 'कुशलं क्षेममस्त्रियाम्' इत्यमरः। कथं स्यात् विषयलोलुपतायां न कथंचिदपि श्रेयस्सुलभमिति भावः। अत्र शं कां इति पदद्वयं 'वा पदान्तस्य' इति शमो मकारस्थानिकानुस्वारस्य वैकल्पिकः परसवर्णः। शं शमशब्दे शकारं कां काकारं तनोषि चेत् शमशब्दः कामशब्दो भवन् वृद्धस्स्यात्। आद्यचो वृद्धसंज्ञकत्वाद्वृद्धसंज्ञको भवति। 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति वृद्धसंज्ञाविधानात् ततः शाकारस्थाने काकारन्यासानन्तरं क्षेमः कथं स्यात् काकारन्यासे काम इत्येव शब्दस्स्यान्न तु क्षेम इतीत्यर्थान्तरमप्यनुसंधेयम्। अत्र शमाभिवर्धनौदास्यरूपवाक्यार्थेन कामाभिवृद्धिभवनरूपवाक्यार्थस्य तेन च क्षेमभवनसंदेहरूपवाक्यार्थस्य च पूर्वपूर्वेणोत्तरोत्तरस्य समर्थनमिति मालारूपत्वम्॥

यथावा—

मम चेतना विचेयाकाराऽच्युत यातनामयी भवभयतः । याचेकृतावभीतेः क यातना तर्हि चेतनैव स्यात्सा ॥ १५७० ॥

हे अच्युत! मम चेतना बुद्धिः भवभयतः संसृतिभीतेः यातनामयी प्रचुरतीव्रवेदना सती। प्राचुर्यार्थे मयट्। विचेयाकारा विचेयः गवेषणीयः आकारः आकृतिः यस्यास्सा तथोक्ता भवति। संसारोद्वेगजनितवेदनाप्रचुरतया विनष्टप्राया भवतीत्यर्थः। अतः अभीतेः अभयस्य कृतौ करणे विषये याचे। अभयप्रदाने त्वां प्रार्थये इत्यर्थः। ततः किं तव सेत्स्यतीत्यत्राह—केति। तर्हि तदा त्वदभयदानानन्तरमित्यर्थः। यातना पूर्वोक्तवेदना क स्यात् न स्यादेव, किंतु सा चेतनैव पूर्वोक्ता बुद्धिरेव स्यात् सत्तां लभेतेत्यर्थः। त्वदभयवितरणानन्तरं मम बुद्धिरस्तीति व्यवहार्या भवेदिति भावः। पक्षे चेतना चेतनेति शब्दव्यक्तिः विचेयाकारा विभ्रंशितः चेः चे इत्याकारकवर्णः येन स तथोक्तः विचेः याकारः यावर्णः यस्यास्सा तथोक्ता विभ्रंशितचेकारा तत्स्थानप्रापितयावर्णा सती यातनामयी 'तत्प्रकृतवचने मयट्' इत्यत्र तदिति योगविभागात्स्वार्थिको मयट्। यातनेति रूपं प्राप्ता भवतीत्यर्थः। अभीतेः विद्यमानवर्णभ्रंशनतत्स्थानवर्णान्तरन्यसनाभ्यां शब्दरूपं विपरीतं स्यादिति भयराहित्यादिति भावः। याचेकृताविति समस्तं पदम्। यावर्णस्थाने चेवर्णकरणे यातना क। उक्तरीत्या याकारस्थाने चेकारन्यासेन यातनेति शब्दरूपं क स्यात्। तत्स्वरूपस्यैव गतत्वादिति भावः।

प्रत्युत सा पूर्वोक्ता चेतनैव चेतनेति शब्दव्यक्तिरेव स्यात्। यातनात्वं प्राप्ता चेतनेति शब्दव्यक्तिश्चेतनेत्येव सत्तां प्रपद्येत। आगन्तुकयाकारस्थाने पुनश्चेकारन्यासादिति भावः। अत्र भवभययातनामूलकबुद्धिभ्रंशरूपवाक्यार्थेन भगवद्भययाचनरूपवाक्यार्थस्य तेन च यातनानिवृत्तिरूपवाक्यार्थस्य तेन च चेतनास्वास्थ्यरूपवाक्यार्थस्य समर्थनमिति ध्येयम्॥

यथावा—

भवदव वल्गसि कियदिव दूरं स्फारं हरेः कृपापूरम्। मयि सत्वरमतिसत्वरमभिपश्य तदा विनश्यति मदस्ते॥ १५७१॥

अत्र कृपापूरदर्शनेन वाक्यार्थेन मदविनाशवाक्यार्थः तेन भवदववल्गनोपसंहाररूपवाक्यार्थस्समर्थितः। अत्र मध्यगतपूर्ववाक्यार्थहेतुकोत्तरवाक्यार्थेन तत्पूर्ववाक्यार्थसमर्थनम्। पूर्वोदाहरणेभ्यो विशिष्टमिदं मालारूपं रूपकसंकीर्णं चेति॥

पदार्थहेतुककाव्यलिङ्गं यथा—

अन्योन्यजयप्रेप्साशृङ्गाशृङ्गिप्रसङ्गिणोरुभयोः।
तुन्नः पन्नगगिरिणा कनकगिरिर्मेरुरित्यूचे॥१५७२॥

कनकगिरिः पन्नगगिरिणा तुन्नस्सन् शृङ्गेण विद्धस्सन्नित्यर्थः। कर्मणि निष्ठान्तत्वं च। अत एव मे मम अरुः व्रणमजनीति ऊचे उक्तवान्। ब्रूञः कर्तरि लिट् 'ब्रुवो वचिः' इति वच्यादेशः। पक्षे मेरुः सुमेरुरिति ऊचे उच्यते स्म जनैरिति शेषः। कर्मणि लिट्। अत्र मेरुरित्यूचे इति वाक्यार्थस्तुन्न इति पदा-

र्थेन समर्थितः श्लेषभित्तिकाभेद्,ध्यवसायानुप्राणितवक्ष्यमाणनिरुक्त्युत्तंभितः ॥

यथावा—

राजासनहृदयङ्गमवृत्तिरपि त्वयि निरासहृदय इह । जायेत जगदधीश्वर जानङ्गमवृत्तिरेव जन्तुरहो ॥ १५७३ ॥

राजासनेन राजार्हसिंहासनेन राजासने वा हृदयङ्गमा हृद्या वृत्तिः स्थितिः यस्य स तथाभूतोऽपि त्वयि विषये निरासे औदास्ये तिरस्कारे वा हृदयं चित्तं यस्य स तथोक्तः। हे जगदधीश्वर! जन्तुः जनङ्गमः अन्त्यजः तस्येयं जानङ्गमी वृत्तिः जीविका यस्य स एव भविता। त्वदुदासिता महाराजोऽपि 'यो विष्णुं सततं द्वेष्टि तं विद्यादन्त्यरेतसम्' इत्युक्तरीत्या चण्डालवृत्तिरेव भवेदित्यर्थः। जनङ्गम इत्यत्र 'गमश्च' इति सूत्रेण संज्ञायां खच्प्रत्ययः 'अरुर्द्विषदजन्तस्य' इति मुम्। 'चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः' इत्यमरः । जनाद्गच्छति दूरमपसर्पतीति जनङ्गम इति विग्रहः। तस्येयं जानङ्गमी अण्णन्तलक्षणङीष् तादृशी वृत्तिर्यस्य। पुंवद्भावः। पक्षे राजासनहृदयङ्गमवृत्तिशब्दः निगताः रासहृदय इत्याकारका वर्णाः यस्य स तथोक्तः। अत एव जानङ्गमवृत्तिरित्याकारकवर्णानामेव पारिशेष्याज्जानङ्गमवृत्तिरिति निष्पद्यत इत्यर्थः। अत्र राजासनहृदयङ्गमस्यापि जानङ्गमवृत्तितावाप्तिरूपवाक्यार्थः त्वयि निरासहृदय इति पदाभ्यां समर्थितः। चमत्कारविशेषस्तु व्यक्त एव॥

यथावा—

तव सुतराम्बरहिततां स्ववर्णतोऽम्बानुविन्दती

**कबरी । मधुरिपुहृत्पद्माकरविलोडने बत करी भवति ॥ १५७४ ॥**

हे अम्ब! सुतरा अतिमात्रशोभना तव कबरी स्ववर्णतः स्वकीयश्यामलिम्ना । सार्वविभक्तिकस्तसिः । अम्बराय व्योम्ने हिततां मित्रतां अनुविन्दती सती व्योमतुलनां प्राप्तवती सती। मधुरिपुहृदेव पद्माकरः पद्मानामावासभूतस्तटाकः तस्य विलोडने विक्षोभणे करी भवति गजस्संपद्यते । तत्तुल्यो भवति पटूभवतीति यावत्। पक्षे कबरी कबरीति शब्दव्यक्तिः सुतरां अतिमात्रं स्ववर्णतः स्वस्मिन्विद्यमानेषु वर्णेषु पूर्ववत्सार्वविभक्तिकस्तसिः। बरहिततां बवर्णविधुरतां अनुविन्दती सती करी भवति कबरीशब्दो बवर्णराहित्ये करीति निष्पद्यत इत्यर्थः । अत्र कबर्याः करीभवनमघटमानं सुतराम्बरहिततामित्याद्यनेकपदार्थैस्समर्थ्यते। इदं च श्लेषपरंपरितरूपकाभ्यां परिपोषितमिति द्रष्टव्यम्॥

यथावा—

**ननु दुग्धसागरः प्राक्कौर्मे रूपेऽगमथनतो भगवन् । समतानि दुग्धसारो भवता कौस्तुभरमे समाददता ॥ १५७५ ॥**

हे भगवन्! अगमथनतः अगेन मन्दरेण मथनं 'साधनं कृता' इति समासः। तस्मात् अगमथनतः अगमथनं कृत्वेति ल्यब्लोपे कर्मणि पञ्चम्यास्तसिः। कौस्तुभः रमा लक्ष्मीश्चेत्येते समाददता स्वीकुर्वता 'लक्षणहेत्वोः' इति सौत्रनिर्देशेन पूर्वनिपातप्रकरणस्यानित्यताज्ञापनात्कौस्तुभशब्दस्य पूर्वनिपातः।

भवता दुग्धसागरः दुग्धसारः दुग्धः विरेचितः सारः स्थिरांशः यस्य स तथोक्तः समतानि। सारतमश्रीकौस्तुभादानेन दुग्धसागरस्याखिलस्सारोऽपि दुग्ध इति भावः। पक्षे दुग्धसागरशब्दः रूपेगमथनत इत्यत्र गथनत इति छेदे गस्य गकारस्य मथनथः विलोपनादिति यावत् दुग्धसारः दुग्धसारशब्दः समतानि। गकारोत्सारणेन तथा निष्पादित इत्यर्थोऽपि चमत्कारी। अत्रापि अगमथनपूर्वककौस्तुभरमासमादानरूपैर्बहुभिः पदार्थैः दुग्धसागरस्याप्रसिद्धं दुग्धसारत्वं समर्थ्यते॥

यथावा—

सूर्यकरः कचनार्यो भूत्वाऽनुकसङ्गमम्ब जहदासीत्। अपरित्यक्ताद्योत्तमवर्णस्सूरिभवंस्त्वदङ्घ्रिरुचिः॥ १५७६॥

हे अम्ब! सूर्यकरः भानुकिरणः कचन आर्यः कुलीनः न्याय्यः साधुर्वा भूत्वा 'गौर्यामार्या त्रिषु त्वेष कुलीनन्याय्यसाधुषु' इति रत्नमाला। अनुकानां कामुकानां अनुकामयत इत्यर्थे 'अनुकाभिक' इत्यादिना अनोः कन्निपात्यते 'कमुके कामिताऽनुकः' इत्यमरः। विषयरसलालसानामिति यावत्। सङ्गं संबन्धं जहत् त्यजन् 'नाभ्यस्तात्' इति नुम्निषेधः। अपरित्यक्तः आद्यः प्रथमभवः अत एव उत्तमः श्रेष्ठः वर्णो यस्य स तथोक्तः अनुपेक्षितब्राह्मणवर्णः आभ्यां प्रतिकूलवर्जनानुकूलावर्जने दर्शिते। ब्राह्मणवर्णोचिताचारशील इति यावत्। यद्वा कचनार्य इत्यत्र कचन अर्य इति छेदः। अर्यः वैश्यो भूत्वा 'अर्यस्स्वामिवैश्ययोः' इति निपातनात्साधुः 'स्यादर्यस्स्वामिवैश्ययोः' इत्यमरः। अनु-

कसङ्गंति जहत् उक्त एवार्थः। अपरित्यक्ताद्योत्तमवर्णः अपरित्यक्तौ अनुसृताविति यावत्। तादृशौ आद्यौ स्वापेक्षया पूर्वौ उत्तमौ स्वस्माद्वरिष्ठौ वर्णौ ब्रह्मक्षत्रवर्णौ येन स तथोक्तः। ब्रह्मक्षत्र-वर्णमानयितेति यावत्। अत एव सूरीभवन् असूरिस्सूरिस्संप-द्यमानो भवन् ब्रह्मविद्भवन् त्वदङ्घ्रौ रुचिरभिरतिर्यस्य स तथोक्तः आसीत्। पक्षे सूर्यकरशब्दः कचन अर्यः अविद्यमानर्यवर्णः भूत्वा अनुकसङ्गं अनु अनन्तरविद्यमानस्य कस्य कवर्णस्य सङ्गं जहत् र्यक इति वर्णसमुदयं त्यजन्नित्यर्थः। अपरित्यक्तौ आद्यः प्राथमिकः उत्तमः अन्तिमश्च आद्योत्तमौ वर्णौ सूर इत्याकारकौ वर्णौ येन स तथोक्तः 'उत्तमौ प्रवरान्तिमौ' इति रत्नमाला। 'उत्तमं च नैदाघम्' इत्यादयः प्रयोगाश्च। अत एव सूरीभवन् असूरसूर-स्संपद्यमानो भवन् सूर्यकरशब्दः र्यकवर्णत्यागे सूर इति निष्पन्न इत्यर्थः। त्वदङ्घ्रेः रुचिरिव रुचिर्यस्य स तथोक्त इति वस्तु-स्थितिः। शब्दार्थयोस्तादात्म्येन सूरशब्दस्य श्रीचरणतुल्यत्वमित्य-वधेयम्। अत्र सूर्यकरस्य सूरीभवनमप्रसिद्धतया समर्थनसापे-क्षमनेकपूर्वपदार्थसमर्थितम्। श्लेषमूलाभेदातिशयोक्त्युत्तम्भित-त्वादिकश्चमत्कारस्तु व्यक्त एव॥

यथावा—

**स्वर्णं स्वस्मादुत्तमवर्णं श्रीदेहमधमवर्णं स्वं च। अवयत्तमुत्तमर्णं विदधत्स्वस्याधमर्णमभवत्स-र्णम्॥ १५७७॥**

स्वर्णं कनकं कर्तृ। श्रियो देहं दिव्यविग्रहं स्वस्मात् उत्त-मवर्णं स्वं च आत्मानं च अधमवर्णं निकृष्टवर्णं अवयत् जान-

त्सत्। अवपूर्वादिणश्शतरि 'इणो यण्' इति यणादेशः। तं श्रीदिव्यदेहं स्वस्य आत्मनः उत्तमर्णं वर्णरूपऋणप्रयोक्तारं विदधत् तन्वत्सत् 'लक्षणहेत्वोः' इति शता। उत्तमर्णकरणेन हेतुनेत्यर्थः। अधमर्णं वर्णरूपऋणग्राहकं अत एव सर्णं ऋणसहितमेवाभूत्। न तु त्वत्प्रत्यर्पणक्षममिति भावः। स्वर्णमिति नाम्ना स्वत एव ऋणवत्त्वं च प्रतीयते॥

पक्षे—स्वर्णमिति पदं कर्तृ उत्तमवर्णमिति पदं अवयत् आविद्यमानवकारं कुर्वत् उत्तमर्णमिति कुर्वत्। अधमवर्णमिति पदं तथा कुर्वत् अधमर्णं आत्मानं स्वर्णमिति पदं तथा कुर्वत् सर्णं चाभूदित्यर्थान्तरं चमत्कारमतिशाययति। अत्र स्वर्णस्याधमर्णत्वादिकमलौकिकतया समर्थनापेक्षं स्वस्मादुत्तमवर्णमित्यादिपदार्थैस्समर्थ्यते। तत्र लक्ष्मीदिव्यविग्रहस्वर्णयोरुत्तमर्णत्वाधमर्णत्वासंबन्धेऽपि तत्संबन्धवर्णनरूपातिशयोक्तिप्रसादसमासादितसाम्राज्यमिति ध्येयम्। 'उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात्' इत्यमरः॥

यथावा—

त्वद्वचनसुधाहरणात्स्वाद्यस्समजनि सुधाकरो भूत्वा। स्वाद्यः कथंन्वितरथा सोऽयं स्यात्कुमुद्बान्धवो वान्तः॥ १५७८॥

हे भगवन्निति प्रकरणाल्लभ्यते। कुमुद्बान्धवः चन्द्रमाः त्वद्वचनसुधायाः हरणात् अपहारादेव सुधाकरः सुधायाः आकरः स्थानं भूत्वा। पक्षे सुधाकरः अमृतकिरण इत्यर्थः। स्वाद्यः आस्वादनीयः सुकारः आद्यवर्णो यस्य स तथोक्त इति तत्त्वम्।

शब्दार्थयोस्तादात्म्यं न विस्मर्तव्यम् । समजनि अजायत इतरथा प्रकारान्तरेण उक्तवैपरीत्येनेत्यर्थः । वान्तः वमनकर्मीभूतः ऊद्गीर्ण इत्यर्थः । सोऽयं कुमुदबान्धवः चन्द्रमाः पक्षे कुमुदबान्धवशब्दश्च तस्यान्ते वकारश्रवणात् वान्तत्वं बोध्यम् । कथं स्वाद्यस्स्यात् । वान्तस्य वस्तुनः कथमितरैरास्वाद्यत्वं स्यात् अन्तरा त्वद्वचनसुधाहरणहेतुकसुधाकरत्वप्राप्तिमिति भावः । पक्षे कुमुदबान्धवशब्दस्य वान्तत्वं संभवेत् न तु स्वाद्यत्वं, तस्य काद्यत्वादिति भावः । अत्र वान्तस्य कुमुदबान्धवस्य स्वाद्यत्वान्यथानुपपत्त्या भगवद्वचनसुधाहरणहेतुकसुधाकरत्वं कल्प्यत इति वक्ष्यमाणार्थापत्तिरूपप्रमाणालंकारो महावाक्यार्थः । तत्रावान्तरवाक्यार्थद्वयं चन्द्रमसस्स्वाद्यत्वसमर्थने भगवद्वचनसुधाहरणहेतुकसुधाकरत्वं स्वाद्यत्वाक्षेपसमर्थने वान्तत्वं चेति पदार्थौ हेतू इति काव्यलिङ्गद्वयरूपमिति विशेषः । श्लेषोत्तम्भितत्वेन चमत्कृतिविशेषः पूर्ववदेव। वस्तुतस्त्विदमर्थापत्तेरेव प्राधान्यात्तदुदाहरणतार्हमेवेति युक्तम् ॥

यथावा —

**त्वद्वर्णोत्कर्षेप्सं साध्वस्तमथापि तत्र सङ्गमितम् । कासारजमखिलेश्वरि कासरजं को नु वा न जानीयात् ॥ १५७९ ॥**

हे अखिलेश्वरि! कासारजं सरसिजं त्वद्वर्णादपि उत्कर्षे ईप्सा अप्तुमिच्छा यस्य तत्तथोक्तम् । तव वर्णोत्कर्षे ईप्साऽस्येति तथोक्तं वा । अत एव साधु यथा तथा अस्तं त्वया निरस्तं पक्षे कासारजमिति पदं साध्वस्तं ध्वस्तलावण्यमित्यर्थः । अथापि एवमपि तत्र त्वद्वर्णोत्कर्षेप्सायां सङ्गं अभिषङ्गं इतं प्राप्तं

इणः कर्तरि क्तः। तत्र ध्वस्तस्य साकारस्य स्थाने साधु यथा तथा सं ह्रस्वसकारं गमितं प्रापितं कासरजं महिषजातं कासरजशब्दं च को नु वा न जानीयात्। अदौ दुर्लभवस्तुविशेषप्रेप्सया प्रवृत्तस्सम्यक्पराहतश्च सन् महिषतुल्यमतिर्न चेत्कोवा तदर्थं पुनः प्रवर्तेतेति भावः। अत्र कासारजस्य कासरजत्वमलौकिकतया समर्थनसापेक्षमनेकैः पूर्वपदार्थैस्समर्थ्यते। चमत्कारान्तरं तु स्फुटमेव॥

यथावा—

संख्यावतां कुलं त्वय्यनुरक्तं स्वान्तरे शमुपयातम्। निश्श्रेयससाम्राज्यं साधयितुं कुशलमेव भवति हरे॥ १५८०॥

संख्यावतां विदुषां कुलं बृन्दं त्वयि अनुरक्तं अत एव स्वान्तरे निजचित्ते शं सुखं आनन्दं उपयातं सत् निःश्रेयससाम्राज्यं साधयितुं कुशलमेव भवति। पक्षे कुलमिति पदं स्वान्तरे वर्णद्वयात्मकस्य स्वस्य मध्ये शं शकारं उपयातं सत् कुशलमित्येव निष्पद्यत इत्यर्थः। अत्र संख्यावत्कुलस्य निश्श्रेयससाम्राज्यसाधनकुशलत्वं त्वय्यनुरक्तमित्यादिपदार्थहेतुकम्॥

यथावा—

प्रस्तरवरकौस्तुभमणिसौवस्तिकमम्बुजाक्ष तव हृदयम्। अरिगणशरांकिणदन्तुरमत्यन्तं मयि कठोरमित्युचितम्॥ १५८१॥

अत्र श्रीनिवासहृदयकठोरत्वं प्रस्तरवरेत्यादि-अरिगणेत्यादि-पदार्थाभ्यां समर्थितम् ॥

यथावा ममैव श्रीहयवदनस्तुतौ—

**अमृतकरे वससि हरे क्षीररुचिस्त्वं निसर्गतो मधुरः। तव सैन्धव इति वादो भविता कण्ठोपरीत्युचितमेव ॥ १५८२ ॥**

हे हरे! श्रीहयवदन! अमृतकरे सुधाविधायके पीयूषकिरणे इति तु तत्त्वम्। वससि। अनेनागन्तुकं माधुर्यमुक्तम्। निसर्गतः स्वभावत एव मधुरः मधुररसविशिष्टः जगतां प्रिय इति तु तत्त्वम्। 'स्वादुप्रियौ तु मधुरौ' इत्यमरः। अत एव क्षीरस्य दुग्धस्य रुचिः स्वादिमेव रुचिः स्वादिमा यस्य स तथोक्तः। तव ईदृशस्य सैन्धवः लवणमिति वादः उक्तिः कण्ठोपरि कण्ठादूर्ध्वं प्रवृत्तः अहृदय एव। न तु हृदयपूर्वक इत्युचितमेव। अतिमात्रमधुरस्य लवणमिति कथनं कथं मनःपूर्वकं भवेदिति भावः। परमार्थतस्तु—सैन्धवः अश्व इति वादः कण्ठादुपरि तव हयास्यत्वादिति भावः। 'सैन्धवो लवणे न स्त्री हये ना सिन्धुजे त्रिषु' इति रत्नमाला। अत्र अमृतकरे वससीति वाक्यार्थेन क्षीररुचिः निसर्गतो मधुर इति पदार्थाभ्यां च सैन्धवतावादस्य कण्ठादुपरि प्रवृत्तत्वौचित्यरूपस्य समर्थनमिति विशेषः ॥

क्वचित्पदार्थवाक्यार्थौ परस्परसापेक्षौ हेतुभावं भजतः।यथा—

**तज्जयतु कनकमकुटं यज्जगदीशो बिभर्ति शिरसैव। कनकगिरिणाऽस्य तुलना सकलसुरैरप्यधःकृतेन कथम् ॥ १५८३ ॥**

अत्र कनकगिरेर्भगवत्किरीटसादृश्याभावे यज्जगदीशो बिभर्ति शिरसैवेति वाक्यार्थः सकलसुरैरप्यधःकृतेनेति पदार्थश्चेत्युभयं संभूय हेतुतामश्नुते । ननु सकलसुरैरप्यधःकृतेनेति पदार्थः कनकगिरिनिष्ठत्वेन तन्निष्ठे भगवत्किरीटसादृश्याभावे हेतुभावं भजतां, यज्जगदीशो बिभर्तीति वाक्यार्थस्तु तदवृत्तितया कथं नाम तत्र हेतूभवितुमर्हतीतिचेत् साध्यकिरीटसादृश्याभावानुप्रविष्टकिरीटगततयोपनिबध्यमानो वाक्यार्थस्तथाविधकिरीटघटितसाम्याभावप्रायोजकतया हेतुरित्युभयं संभूय हेतुतां भजत इति गृहाण ॥

यथावा—

निर्विद्येऽहमविद्ये विद्येत मया न ते सुखलवोऽपि । विजहिहि मामकिंचनमकिंचनजनाश्रयं श्रितं कंचित् ॥ १५८४ ॥

निर्विद्ये निर्विण्णोऽस्मि । अकिंचनजनानां दरिद्राणां उपायान्तरविधुराणां च आश्रयं कंचित्पुरुषं भगवन्तमिति वस्तुस्थितिः अत्राविद्यायाः स्वपरित्यागे पूर्वार्धवाक्यार्थः, अकिंचनजनेत्यादिपदार्थश्चेत्युभयं हेतुः । वाक्यार्थपदार्थयोस्सापेक्षताविरहेऽपि हेतुत्वमिति पूर्वस्माद्विशेषः । समासोक्तिसंकीर्णं चेदमित्यपरोऽपि विशेषः ॥

यथावा—

वितरति बहुप्रसादो विपुलां विनताय संपदं भगवान् । ननु कथमिव नित्यश्रीरसान्वितोऽयं बहुप्रदो न स्यात् ॥ १५८५ ॥

भगवान् बहुप्रसादस्सन् विनताय विपुलां संपदं वितरति। नित्यश्रीः अयं रसान्वितः अनुग्रहान्वितश्चेत् कथमिव बहुप्रदो न स्यात् श्रीसमृद्धिमत्त्वे अनुग्रहशालित्वे च विनताय बहुप्रदानं नाश्चर्यमिति भावः। पक्षे बहुप्रसादशब्दः नित्यश्रीः असान्वित इति छेदः। असान्वितः सा इत्याकारकवर्णहीनश्चेत् बहुप्रद इत्येव श्रूयत इत्यर्थः। अत्र विनतोद्देश्यकविपुलसंपत्प्रदानरूपवाक्यार्थो बहुप्रसाद इति पदार्थेन ननुकथमिवेत्युत्तरवाक्यार्थेन च समर्थ्यत इति विशेषः। उत्तरवाक्यार्थेऽपि नित्यश्रीः रसान्वित इति पदार्थाभ्यां बहुप्रदत्वं समर्थ्यत इत्यपरोऽपि विशेषः। चमत्कृतिविशेषस्तु स्फुट एव॥

क्वचित्समर्थनीयार्थसमर्थनार्थे वाक्यार्थे पदार्थो हेतुः।

यथा—

**विषयचलः प्रागधुना त्वद्गुणविवशस्तवेश न स्मर्ता। आनन्दनिमग्नोऽग्रेऽप्यागस्करणं त्रिरस्य सह्यमिदम्॥ १५८६॥**

अत्र त्रिरागस्करणं समर्थनीयम्, अस्फुटहेतुकत्वात्। तत्समर्थनं च भगवद्विस्मरणरूपैर्वाक्यार्थैर्निबद्धम्। तत्र प्रतिवाक्यार्थं विषयचलत्वादयस्त्रयो हेतवः पदार्थरूपाः। तवेत्यत्र 'अधीगर्थ' इत्यादिना षष्ठी। न स्मर्तेत्यत्र अयमिति अहमिति वा सह्यमित्यत्र त्वयेति चाध्याहारः॥

यथावा—

**प्राह्लादिमवभ्रास्त्वं मुग्धोऽतितराममूमुचः क-**

ङ्गम् । स्वातंत्र्यदौर्ललित्यं सोढा कोऽच्युत तवे-श्वरस्यापि ॥ १५८७ ॥

हे अच्युत ! अतितरां मुग्धः मूढः सौम्यश्च त्वं 'मुग्धस्सौम्ये नवे मूढे' इति रत्नमाला । प्राह्लादिं प्रह्लादगोत्रापत्यं बलिं अबध्नाः वरुणपाशैरिति शेषः । प्राह्लादिमित्यनेन अतिमात्रान्तरङ्गता द्योत्यते कङ्कं जटायुं अमूमुचः अमोचयः मुक्तभवबन्धमकरोः ।कङ्कमित्यनेन तिर्यक्तया अतिवेलोदासीनता द्योत्यते । किंच कमपि कमपील्य-ज्ञातशीलमतिवहिरङ्गमित्यर्थोऽपि व्यज्यते । अत्र भगवतः स्वात-न्त्र्यदौर्ललित्यं समर्थनसापेक्षं, अव्यक्तहेतुकत्वात् । तत्समर्थनं च अन्तरङ्गभूतबलिबन्धनोदासीनतमगृध्रमोचनलक्षणवाक्यार्थाभ्यां क्रियते । तत्र प्रतिवाक्यार्थं मुग्ध इति पदार्थो हेतुः ॥

यथावा—

भव्यगुणायत्तोऽविदमीश्वरमात्मानमेव पूर्वम-हम । न्यस्तभरोऽपि तथैवेत्यच्युत मन्तुद्वयं क्ष-मेथा मे ॥ १५८८ ॥

पूर्वं भरन्यसनात्प्राक् अहं भव्याः भवे साधवः 'तत्र साधुः इति यत् । संसारौपयिका इति यावत् । ये गुणाः रजःप्रभृतयः तेषु आयत्तः अधीनः । यद्वा भवी अगुणायत्त इति छेदः भवी संसारी अहं अगुणायत्तः अगुणाः अप्रशस्तगुणाः मात्स-र्यादयः नञत्राप्राशस्त्ये । यद्वा भगवत्कटाक्षलाभौपयिकशान्त्या-दिगुणाः तेषामनधीनस्सन्नित्यर्थः । आत्मानं मामेव ईश्वरं त्वां अविदं अहमेव ब्रह्मेति स्वस्वरूपादभिन्नमविदम् । यद्वा 'ईश्वरो-

ऽहमहं भोगी' इत्युक्तरीत्या स्वतन्त्रात्मभ्रमवानस्मीत्यर्थः। न्यस्त-भरोऽपि त्वयि समर्पितात्मात्मीयरक्षाभरोऽपि तथैवाविदम्। भव्य-गुणायत्तः आत्मानमेवेश्वरमज्ञासिषमित्यर्थः। इति एवंप्रकारं भरार्पणपूर्वोत्तरकालकृतं मे मम मन्तुद्वयं अपराधयुग्मं क्षमेथाः। वास्तवार्थस्तु—भरन्यसनोत्तरं भव्याः कल्याणाः ये गुणाः सौशी-ल्यादयस्तावकाः शान्त्यादयो मामकाश्च तेष्वायत्तस्सन् आत्मा-नमेव ईश्वरमविदं परमात्मानं त्वामेव शेषिणमज्ञासिषम्। यद्वा आत्मानं प्रत्यगात्मशरीरकं ईश्वरमविदम्। ईश्वरशरीरभूतमा-त्मानमविदमिति भावः।' अनेन स्वतन्त्रात्मभ्रमो निवर्त्यते। अत्र तावदपराधद्वयं समर्थनीयमस्फुटहेतुकत्वात्। तत्समर्थनं च भरार्पणपूर्वापरकालयोरैकरूप्येण श्लेषमूलकेन यत् आत्मन ईश्वरत्ववेदनं तद्रूपाभ्यां वाक्यार्थाभ्यां क्रियते। अत्र वाक्यद्वयेऽपि भव्यगुणायत्त इत्येव उक्तरीत्या एकपदार्थोऽनेकपदार्थो वा हेतुः श्लेषभित्तिकाभेदाध्यवसायानुप्राणितत्वं पूर्वतो विशेषः॥

क्वचित्समर्थनीययोरन्योन्यमविरुद्धयोरुभयोः क्रमादुभौ हेतु-भावं भजेते।

यथा—

**यस्य रमां दयिततमां तनयं प्रतिलोमतद-**
**भिधावाच्यम्। आहुस्तस्य तवाच्युत विभवं**
**रूपं च को गदितुमीष्टाम्॥ १५८९॥**

प्रतिलोमा व्यत्यस्ता तस्याः रमायाः अभिधा आख्या तस्याः वाच्यं अभिधेयं मारमित्यर्थः। अत्र भगवद्विभवरूपयोर्निरतिश-

यत्वे यस्य रमां दयिततमां तनयं प्रतिलोमतत्पदार्थं चेत्युभौ हेतुतया निबद्धौ ॥

क्वचित्परस्परविरुद्धयोर्द्वयोः क्रमादुभौ हेतुभावमश्नुवाते ।

यथावा—

श्रुतनक्राक्रान्तद्विपदीननिनादो हरे भवानथ च । प्रविमृष्टतदैकान्त्यः खेदं मोदं च युगपदगात् ॥ १५१० ॥

हरे! इति संबोधनं गजेन्द्रमोक्षार्थगृहीतावतारत्वज्ञापनाय । ऐकान्त्यं भगवत्येकस्मिन्नेव अन्तः शरण्यत्वेन निश्चयो यस्य स एकान्तः तस्य भावः ऐकान्त्यं, एकश्चासावन्तश्च एकान्तः सोऽस्यास्तीत्येकान्ती तस्य भाव इति वा । तत् प्रविमृष्टं सम्यग्विचारितं येन स तथोक्तः । अत्र भगवतः युगपत्खेदमोदयोः परस्परविरुद्धयोः क्रमात् नक्राक्रान्तगजेन्द्रार्तनिनादश्रवणं तदीयैकान्त्यविमर्शनं चेत्युभौ पदार्थौ हेतुतया निबद्धौ ॥

क्वचित्परस्परविरुद्धयोरुभयोस्समर्थनीययोरेक एव हेतुः ।

यथावा—

आकाङ्क्षितावलोकं लोकाधीशं चिराद्विलोकितवान् । निर्वेदं खर्वेतरमविन्दमप्यहममन्दमानन्दम् ॥ १५११ ॥

अपेक्षितदर्शनं सर्वलोकेश्वरं श्रीनिवासं चिराय पश्यतो मम इयन्तमपि समयं वृथैव ईदृशदिव्यमङ्गळविग्रहनिर्वर्णनं नाघटतेति

निर्वेदः तल्लाभेनानन्दः। अत्र निर्वेदानन्दयोर्द्वयोर्विरुद्धयोर्भगवद्विलोकनमेकमेव हेतुः॥

अत्र दीक्षिताः—ननु साभिप्रायपदार्थवाक्यार्थविन्यसनरूपात्परिकरादस्य काव्यलिङ्गस्य को भेद इतिचेत् श्रूयताम्। परिकरे पदार्थवाक्यार्थबलात्प्रतीयमानावर्थौ वाक्योपस्कारकतां भजतः। काव्यलिङ्गे तु पदार्थवाक्यार्थावेव हेतुभावं भजत इति भेदः। तथाहि 'सुधांशुकलितोत्तंस' इत्यादौ विशेषणबलात्प्रतीयमानस्य तापनिवारकामृतकिरणसन्निधानस्य तापहरणरूपवाच्योपस्कारकता, न तु पदार्थवाक्यार्थयोस्तत्रोपस्कारकता। अतस्तत्र काव्यलिङ्गासंभवात्परिकर एव युक्तः। काव्यलिङ्गे तु पदार्थवाक्यार्थयोरेव हेतुत्वं न तु प्रतीयमानार्थापेक्षा। 'सुखालोकोच्छेदिनि। अग्रेऽप्यनतिमान्' इत्यादिपदार्थवाक्यार्थहेतुककाव्यलिङ्गोदाहरणे च सुखालोकोच्छेदित्वोत्सरकालानमनरूपाभ्यां पदार्थवाक्यार्थाभ्यामेव प्रतीयमानार्थनैरपेक्ष्येण वाच्यार्थस्य समर्थनादुभयोर्विविक्तविषयतया भेद इति वदन्ति। एवं प्राचामनुरोधेन काव्यलिङ्गं प्रदर्शितम्॥

रसगङ्गाधरकारस्तु—"अनुमितिकरणत्वेन सामान्यविशेषभावाभ्यां चानालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम्। उपपादकत्वं च तन्निश्चयजनकज्ञानविषयत्वम्। अनुमानार्थान्तरन्यासयोर्वारणायानालिङ्गितान्तम्। उपमादिवारणाय उपपादकत्वेनेत्यन्तम्। पञ्चम्यादिशब्दप्रतिपादितहेतुताकस्य हेतोरेव वारणायोपपादकत्वेन विवक्षित इति। न तु शब्दात्तेन रूपेण बोधित इत्येतदर्थफलकम्। तेन 'भयानकत्वात्परिवर्जनीयो दयाश्रयत्वादसि देव सेव्यः, इत्यादौ नायमलंकारः।

गम्यमानहेतुताकस्यैव हेतोस्सुन्दरत्वेनालंकारिकैः काव्यलिङ्गतायां अभ्युपगमात्। तच्च सुबन्ततिङन्तार्थत्वाभ्यां तावद्द्विविधम्। आद्यमपि शब्दान्तरार्थविशेषितशरीरं शुद्धकसुबन्तरूपं चेति द्वेधा। अत्राप्याद्यं साक्षात्परंपरया वा वाक्यार्थविशेषितं सुबन्तार्थमात्रविशेषितं चेति द्विभेदम्। तिङन्तार्थभूतमपि साक्षात्परंपरया वा वाक्यार्थविशेषितं सुबन्तार्थमात्रविशेषितं चेति द्विप्रकारम्। शुद्धभेदस्तु तिङन्तार्थस्य न संभवति। क्रियायाः कारकविशेषितत्वावश्यंभावात्" इत्याह। तत्प्रकारेणोदाहरणानि—

अञ्जलिमात्रचिकीर्षोस्त्वं जगदधिकां श्रियं ददद्भगवन्। जानन्नालं तदिदं वदान्यमूर्धन्य इति नुतौ त्रपसे ॥ १५१२ ॥

अत्र ह्यनितरसाधारणत्वेन वर्णितायाः भगवतःश्रीनिवासस्य वदान्यमूर्धन्यताप्रयोज्यलज्जाया आपाततोऽघटमानाया उपपादनाय अञ्जलिचिकीर्षुमुक्त्यैश्वर्यदानसमानाधिकरणः पर्याप्त्यभावस्सुबन्तमात्रार्थविशेषितात्मा सुबन्तार्थो हेतुत्वेनोपनिबद्धः॥

ननु 'लक्षणहेत्वोः' इति सूत्रविहितशत्रन्तेन जानन्नित्यनेन साक्षाद्धेतोरभिधानात्कथंकारं काव्यलिङ्गम्। तादृशहेतुवाचकपदेन हेतोरभिधाने तदनवतारस्य सर्वालंकारिकसंप्रतिपन्नत्वादिति चेन्नैवम्। तद्विहितश्शता न हेतुवाचकः येनैवं शङ्क्येत। किंतु तद्द्योतकः। तथाच तत्सूत्रशेखरग्रन्थः। 'इह लक्षणादि द्योत्यं शत्राद्यर्थस्तु कर्त्रादिरेव' इति। एवं शानजन्तहेतुस्थलेऽपि बोध्यम्। अतएव 'यदा पुनः पदार्थस्य हेतुत्वं तदा यदि तृतीयान्तं पञ्चम्यन्तं वा पदमुपादीयते तदा हेतुमात्रे नालंकारः, यदा तु

विशेषणद्वारा कारणोपनिबन्धः तदा 'पदार्थवृत्ति काव्यलिङ्गम्' इत्येकावळीकारेण तृतीयापञ्चमीविभक्त्यन्तयोरेवेदृशस्थले हेतुत्वमसुन्दरमिति कण्ठत एव वर्णितम्। अतएव रसगङ्गाधरकारस्य 'इमं तं मामम्ब त्वमथ करुणाक्रान्तहृदये पुनाना सर्वेषामघमथनदर्पं दलयसि' इति काव्यलिङ्गोदाहरणं दर्शयतः पवित्रीकरणस्यान्याघदर्पदलनसमर्थकतोक्तिस्संगच्छते। अस्य चायमभिप्रायः—हेतोश्शाब्दतायामेव न काव्यलिङ्गावतारः 'लक्षणहेत्वोः' इति विहितशतृशानजन्तस्थले हेतुहेतुमद्भावस्य संसर्गतया तृतीयापञ्चम्यन्तस्थल इव हेतोर्न शाब्दत्वमिति। यद्यपि पुनानेत्यत्र ताच्छील्यार्थे शक्त्यर्थे वा चानशा निर्वाहस्सुकरः तस्याहेत्वर्थकत्वात्। तथाऽपि 'नमन्मुक्तस्संप्रीत' इत्यादौ हेत्वर्थविहितशत्रन्तस्य नमन्नित्यादिपदस्य मुक्तत्वं प्रति हेतुत्ववर्णनात् शतुर्हेतुत्वमशाब्दमित्येवावसेयम्। न हि चानश इवास्य शतुस्ताच्छील्याद्यर्थकत्वेनान्यथासिद्धिश्शक्या कर्तुं, तादृशानुशासनादर्शनात्। एवमुदाहृतसूत्रविहितशानजन्तस्थलेऽपि द्रष्टव्यमित्यन्यत्र विस्तरः॥

यथावा—

उपगूहितादधीयन्नुदधिसुताकुचयुगात्कठोरत्वम्। तद्धारयन् हृदि हरे दीनेषु भवेः कथं नु मृदुहृदयः॥ १५९३॥

अत्र दुर्घटस्य भगवतो मृदुहृदयताभावस्योपपादनाय उदधिसुताकुचयुगापादानककठोरताध्ययनसमानाधिकरणस्तद्धृदय-धारणरूपस्सुबन्तमात्रार्थविशेषितस्सुबन्तार्थो हेतुतयोक्तः। अधीयन् धारयन्नित्यत्र 'इङ्धार्योश्शत्रकृच्छ्रिणि' इत्यकृच्छ्रार्थे शता॥

यथावा—

अपि नाथ ब्रह्माण्डान्यधिजठरं धारयन्नखिन्न-स्त्वम्। न्यस्तो मयाऽवनभरः कियानपि स्यात्तो नु बिभियाः किम्॥ १५९४॥

कियानपि स्यात् अल्पीयान्वा भवेन्महीयान्वा। अत्रानन्यसामान्यतया प्रतिपादितस्य भगवत आत्मरक्षाभरवहनभयाभावरूपोत्कर्षस्यापाततो घटमानस्योपपादनायानन्तकोटिब्रह्माण्डाक्लेशधारणसमानाधिकरणः खेदाभावस्सुबन्तमात्रार्थविशेषितस्सुबन्तार्थो हेतुतयोपनिबद्धः। धारयन्नित्यत्र पूर्ववदेवाकुल्यार्थे शता। इमानि त्रीण्यप्युदाहरणानि तुल्यानि॥

यस्य स्मरणायापि त्रस्यन्ति चतुर्मुखादयो लेखाः। तद्ब्रह्म हृदि निबध्नन्नलज्जयत्कोऽपि तानसुरडिम्भः॥ १५९५॥

स्मरणाय त्रस्यन्ति स्मरणं कर्तुमपि बिभ्यति। कोऽपि असुरडिम्भः प्रह्लाद इत्यर्थः। तान् चतुर्मुखादीन् अलज्जयत्। तद्ध्यानागोचरमपि ब्रह्म स्वहृदि निबध्नन् तान् त्रपाविष्टानकरोदिति भावः। अत्र चतुर्मुखादिकर्मकलज्जाप्रयोजकत्वसिद्धये तथाविधपरब्रह्मकर्मकहृदयाधिकरणकबन्धनं कविना निबद्धं, तच्चैतत्संकुरत्वात्तादृशसिद्ध्यसमर्थं विशेषकान्तरमपेक्षत इति चतुर्मुखादिकर्तृकपरब्रह्मानुस्मरणत्रासरूपवाक्यार्थः परब्रह्मरूपकर्मद्वारा विशेषक उपात्तः, तद्विशिष्टं च तादृशहृदयाधिकरणकबन्धनमसुरडिम्भारूढं तादृशलज्जाप्रयोजकत्वरूपकार्योपपादनसमर्थमिति भवति हेतुः॥

श्रुतिशिखरदुर्गमाद्भुतविभव हरे तावकान् गुणानखिलान् । भणितुं विजृम्भितवतो डिम्भस्यागस्त्वयैव सोढव्यम् ॥ १५१६ ॥

अत्र डिम्भत्वं शुद्धैकसुबन्तार्थः अपराधसोढव्यत्वे हेतुः । तथा अद्भुतविभवत्वमचिन्तनीयैश्वर्यत्वं सुबन्तार्थविशेषितसुबन्तार्थरूपं श्रुतिशिखरदुर्गमत्वे । एवं तादृशभगवद्गुणकर्मकवर्णनमागसि तादृशवर्णने च उच्छृङ्खलतया विजृम्भणमिति शुद्धसुबन्तार्थोदाहरणे विशिष्टसुबन्तार्थस्याप्युदाहरणम् ॥

दयितोऽपि तव मयाऽम्ब त्वदाश्रयमदादुदासनमनायि । यदिमुञ्चसीममधुना रक्षेति तमेव किमिति शरणमियाम् ॥ १५१७ ॥

हे अम्ब ! त्वदाश्रयमदात् त्वदवलम्बगर्वात् तव दयितो भगवानपि उदासनं उपेक्षणं अनायि प्राप्यत । सर्वशरण्यं तमप्युपेक्षितवानिति भावः । अधुना त्वदुपेक्षावसरे अमुं मामिति भावः । मुञ्चसि यदि । अधुनेत्येतत् मध्यमणिन्यायादुभयतोऽन्वेति । अधुना तमेव पूर्वं गर्वादुपेक्षितमेव तव दयितं किमिति शरणमियां, इयं लोकोक्तिः । कृतापराधस्तदग्रतः किमानुकूल्यं मयाकृतमिति शरणं प्राप्नुयामिति भावः । अत्र इममित्यादिना अभिव्यक्ते वक्तृनिष्ठानन्यशरणताहेतुकाश्रयान्तरपाराङ्मुख्ये अस्मत्कर्तृकभगवत्कर्मकोदासीनताप्रापणरूपसुबन्तार्थविशेषिततिङन्तार्थ उपपादकः ॥

द्रुह्यन्ति ये जगद्द्रुयस्त्वद्दयितायापि हन्त तेभ्योऽपि । वितरसि विविधं विभवं सुतरां मुग्धाऽसि दुग्धसिन्धुसुते ॥ १५१८ ॥

अत्र भगवत्या जगज्जनन्या मौग्ध्योपपादने तिङन्तार्थस्य वितरणस्य सुबन्तार्थविशेषितस्य तस्यैव विविधविभववितरणात्मनो वा असामर्थ्याज्जगदादिद्रोग्धृत्वरूपपूर्ववाक्यार्थविशेषितं वितरणं हेतुः। विशेषणत्वं च संप्रदाने विशेषणत्वात्परंपरया बोध्यमिति ॥

इदं सर्वमपि प्राचीनालंकारिककल्पितपदार्थवाक्यार्थरूपप्रभेदस्यैव प्रकारान्तरेण कथनं व्युत्पत्तिवैचित्र्यप्रदर्शनायैवेति ध्येयम्। अत्र रसगङ्गाधरकारः—"काव्यलिङ्गं नालंकारः, कविप्रतिभानिर्मितत्वप्रयुक्तचमत्कारविशेषात्मकविच्छित्तिविरहात् हेतुहेतुमद्भावस्य लोकसिद्धत्वात्, श्लेषादिसंमिश्रणजन्यस्तु चमत्कारः श्लेषप्रयुक्तत्वात्तदंशस्यैवालंकारतां कल्पयति न तु काव्यलिङ्गस्य। तत्प्रयोज्यकचमत्कारान्तरविरहात्" इति। अत्र वदन्ति—नेदं युक्तं, लौकिकत्वेऽपि कविप्रतिभामात्रगम्यतया चमत्काराधायकत्वात् 'इमं तं मामम्ब त्वमथ करुणाक्रान्तहृदये पुनाना सर्वेषामघमथनदर्पं दलयसि' इत्येतदीयहेतुहेतुमद्भावस्य लोकसिद्धत्वाभावाच्च। न हि 'सुखालोकोच्छेदिनि मोक्षनामनि महामोहे' इत्यादौ सुखालोकोच्छेदादीनां महामोहतादात्म्यादिहेतुत्वं क्वचित्सिद्धम्। किंच एवमप्युपमादेरप्यलंकारता न स्यात्। सादृश्यस्य वास्तवत्वेन कविप्रतिभाकल्पितत्वविरहात्। न च तत्राप्युपमाप्रयोजकसाधारणधर्माभेदांशे तत्कल्पितत्वमेवेति वाच्यं, रमणीयत्वादिनिमित्तधर्मस्यापि लोकप्रसिद्धत्वात् चमत्कारस्य लौकिकस्याप्यलंकारत्वे बाधकाभावात। अन्यथा सर्वालंकारोच्छेदापत्तेश्चेति ॥

इत्यलंकारमणिहारे काव्यलिङ्गसरो द्विषष्टितमः.

———

## अर्थार्थान्तरन्याससरः (६३)

समर्थनं विशेषस्य सामान्येनास्य तेन वा ।
आहुरर्थान्तरन्यासं साधर्म्येणेतरेण वा ॥

विशेषस्य सामान्येन सामान्यस्य विशेषेण वा समर्थनमर्थान्तरन्यासः । अर्थान्तरस्य विशेषस्य सामान्यस्य वा समर्थकतया न्यास इत्यन्वर्थोऽयम् । समर्थनं च इदमेवमनेवं वा स्यादिति संदेहस्य प्रतिबन्धकमिदमित्थमेवेत्यवधारणं, निश्चय इति यावत् । तच्च द्विविधमपि साधर्म्येण वैधर्म्येण चेति पुनर्द्विविधम् । तत्र प्रकृतयोस्सामान्यविशेषयोस्समर्थ्यत्वं अप्रकृतयोर्विशेषसामान्ययोस्समर्थकत्वं प्रायशो दृश्यते ॥

यथा—

स्यालो हरेरितीन्दुर्बालोऽपि जडोऽपि हन्त कुटिलोऽपि । ध्रियते शिवेन शिरसा महदनुबन्धो हि मान्यताहेतुः ॥ १५९९ ॥

अत्र प्राथमिकचरणत्रितयेनोक्तो विशेषस्तुरीयचरणोक्तसामान्येनाप्रकृतेन साधर्म्येण समर्थ्यते ॥

यथावा—

घनसारस्तिलकस्स्तान्मृगनाभिस्तिलकितः कथं हरिणा । अथवा प्रभुस्स्वतन्त्रो यदिच्छति करोति तन्निरोद्धा कः ॥ १६०० ॥

घनसारः कर्पूरः तिलकः स्तात् भवतु । हरिणा प्रकृतेन भगवता श्रीनिवासेन तस्यैव कर्पूरकस्तूरीतिलकितफालत्वप्रसिद्धेः । अत्र घनसारस्य नाम्नैवाभ्यर्हणीयस्य तिलकीकरणमुचितमेव । मृगनाभेः नाम्नैव जुगुप्सनीयस्य तिलकीरणमनुचितमित्याक्षिप्य अथवेत्यादिना सामान्येन समर्थित इत्याक्षेपालंकारसंकीर्णत्वं पूर्वस्माद्विशेषः ॥

यथावा—

उद्दामरामतेजोज्वलनैर्भ्रष्टो धरातलभ्राष्ट्रे । निःश्रीकोऽरिगणोऽभूद्भ्रष्टस्य रमागमः कुतो वा स्यात् ॥ १६०१ ॥

उद्दामरामतेजांस्येव ज्वलनाः अग्नयः तैः अरिगणः धरातलमेव भ्राष्ट्रं अम्बरीषं तस्मिन् 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः। भ्रष्टः भर्जनं प्रापितस्सन् निश्श्रीकः अलक्ष्मीकः अभूत् भ्रष्टस्य भर्जितस्य 'भ्रस्ज पाके' इत्यस्मात्कर्मणि क्तः । भ्रंशं प्राप्तस्य च, भ्रंशधातोः कर्तरि क्तः । 'व्रश्च' इति षत्वे ष्टुत्वम् । रमागमः लक्ष्मीप्राप्तिः । पक्षे रमित्याकारक आगमः कुतो वा स्यात् । 'भ्रस्जोरोपधयोरमन्यतरस्याम्' इति रमागमस्य वैकल्पिकत्वेन भ्रष्टस्येत्यत्र तदभावः । अन्यथा भर्ष्टस्येति स्यादिति भावः । "भ्रस्जेः रेफस्य उपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके मित्त्वादन्त्यादचः परः स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः" इति सूत्रार्थः । अत्रापि पूर्वपादत्रयप्रतिपादितस्य विशेषस्य चरमपादप्रतिपाद्यसामान्येन समर्थनम् । रूपकश्लेषोज्जीवितत्वादिकं विशेषः ॥

यथावा—

त्वज्जङ्गदास्यात्तथाऽहा जाता जननि काहळी काळी । श्रेयस्करीश्वराणां प्रायस्सेवा जडात्मनोऽपि स्यात् ॥ १६०२ ॥

काहळी त्वज्जङ्घयोः दास्यस्य आतथा ईदृशभाग्येनेति भावः । काळी गौरी जाता 'काळी हैमवतीश्वरी' इत्यमरः । हा इत्याश्चर्ये । पक्षे काहळीति शब्दव्यक्तिः अहा जातेति छेदः । अहा अविद्यमानहकारा सती काळी जाता काळीति निष्पन्नेति शब्दार्थतादात्म्यमूलकश्लेषदत्तहस्तो विशेषस्य सामान्येन समर्थनरूपोऽयम् ॥

यथावा—

श्रीस्तनकलशयुगेन स्पर्धायै यदि भजेत मुखगतताम् । गुच्छस्तुच्छस्स्यादिह कठिनेन मृदोर्हि भवति परिभूतिः ॥ १६०३ ॥

गुच्छः स्तबकः श्रीस्तनकलशयुगेन सह स्पर्धायै स्पर्धार्थं मुखगततां तत्संमुखीनतां भजेत यदि तदा तुच्छ एव स्यात् शौर्यरिक्त एव स्यात् 'शून्यं तु वशिकं तुच्छरिक्तके' इत्यमरः। पक्षे गुच्छः गुच्छशब्दः मुखे विद्यमानो यो गः तस्मिन् ततां तकारत्वं भजेतचेत् तुच्छः स्यात् । गतेत्यत्र वर्णद्वयेऽप्यकारो मुखसुखोच्चारणार्थः । गकारमपनीय तत्र तकारन्यासे तुच्छ इति निष्पद्येतेत्यर्थः ॥

यथावा—

ग्लौस्त्वन्मुखमात्सर्याद्यदाविलत्वं परं गतो नु भवेत् । गौरेव तदाऽम्ब भवेन्मत्सरिणां स्वस्वरूपहानिस्स्यात् ॥ १६०४ ॥

हे अम्ब! ग्लौः चन्द्रः त्वन्मुखे मात्सर्यात् यदा परं अतिशयितं आविलत्वं कलुषत्वं गतः भवेन्नु । नुर्वितर्के । पक्षे-ग्लौः ग्लौशब्दः यदा गतः गवर्णात् आद्यादित्वात्तसिः । परं अनन्तरं विलत्वं विगतलकारत्वं अनुभवेत् प्राप्नुयात् तदा गौरेव भवेन्नु । उत्कृष्टतमलक्ष्मीवदनमात्सर्येण कलुषितहृदयश्चेत्स पशुरेवेति भावः । पक्षे ग्लौशब्दो लकारविरहे गौरित्येव हि निष्पद्येतेति भावः । मत्सरिणां परोत्कर्षासहिष्णूनां स्वस्वरूपहानिस्स्यात् स्वगौरवक्षतिरेव स्यादिति भावः । पक्षे ग्लौशब्दस्य-गौरिति निष्पत्तौ स्वरूपव्यत्ययस्स्यादिति भावः ॥

यथावा—

त्वद्गतिभाग्यमवाप्तुं यतमानोऽपि च करी पराभूतः । मन्दा एव भवेयुस्तुङ्गा अपि देवि पेचकारूढाः ॥ १६०५ ॥

त्वद्गतिभाग्यं त्वत्प्राप्तिभागधेयं त्वद्गमनतौल्यं च अवाप्तुं यतमानोऽपिच करी पराभूतः । कुत इत्यत आह—मन्दा इति तुङ्गा अपि महान्तोऽपि उन्नता अपिच । पेचकेन उलूकेन अन्यत्र पुच्छमूलोपान्तेन आरूढाः करिण इति यावत् । ‘उलूके करिणः पुच्छमूलोपान्ते च पेचकः’ इत्यमरः । मन्दा एव भाग्यहीना

एव, पक्षे मन्दसंज्ञा एव 'मन्दोऽतीक्ष्णे च मूर्खे च स्वैरे चाभाग्यरोगिणोः। अल्पे च त्रिषु पुंसि स्याद्धस्तिजात्यन्तरे शनौ' इति मेदिनी। उलूकारूढानामीप्सितसिद्ध्यर्थं यतमानानामपि कुतो महाभाग्यलाभ इति भावः। अमीषु श्रीस्तनेत्यादिषु त्रिषूदाहरणेष्वपि श्लेषोत्तम्भितविषमालंकारसंकीर्णत्वं विशेषः॥

यथावा—

पुष्करमम्ब पदा तव निष्कासितमपि रमे त्वदाधारतया। पुरमासीत्तव महता तिरस्कृतोऽप्याश्रितोऽमुमयते हि शुभम्॥ १६०६॥

हे अम्ब रमे! पुष्करं कमलं तव पदा पादेन निष्कासितं स्वविजिततया स्थानान्निस्सारितमपि त्वदाधारतया त्वदेकावलम्बनतया त्वदधिष्ठानतया च तव पुरं गृहं आसीत् 'अगारे नगरे पुरम्' इत्यमरः। पक्षे पुष्करमिति पदं निष्कासितं निर्गतः ष्क इति वर्णसमुदयो यस्मिन् कर्मणि तद्यथा भवति तथा आसितं उपवेशितं पुरमासीदित्यर्थः। स्पष्टमन्यत्। अत्रापि विशेषस्य सामान्येन साधर्म्येण समर्थनम्॥

यथा—

त्वय्यत्यादरवांश्चेत्प्रत्याख्यातोऽपि चेतनो भगवन्। सुतरां प्रख्यातस्स्यात्त्वदादरो ह्यद्वितीयतां फलति॥ १६०७॥

हे भगवन्! त्वयेति शेषः। प्रत्याख्यातः अभिभूतोऽपि चेतनः कश्चित्प्राणी प्राह्लादिर्बलिरिवेति भावः। त्वयि अत्या-

दरवान् अविश्लथभक्तिमांश्चेत् सुतरां असदृशतयेति यावत्। प्रख्यातस्स्यात् त्वदाश्रयः अद्वितीयतां कीर्त्यादिभिरसदृशतां, पक्षे द्वितीयवर्णराहित्यं च फलति हि। प्रत्याख्यातशब्दः अत्यादरवान् त्या इत्याकारकवर्णे आदरवांश्च चेत् तद्विश्लिष्टश्चेदिति यावत् प्रख्यातशब्दो भवतीत्यर्थान्तरम्॥

यथावा—

तव तेजसि विद्वेषान्नाथ महारश्मयो रवेर्लब्ध्वा। अप्यश्मदशामभवन्महारयो वासना हि दुर्मोचा॥ १६०८॥

महारश्मयः अश्मदशां प्रस्तरावस्थां लब्ध्वाऽपि महारय एव महाविद्विष एव अभवन्। पक्षे महारश्मय इति शब्दः अविद्यमानः श्म इति वर्णसमुदयो यस्य स तथाभूतः अश्मः तस्य दशां लब्ध्वा, अभवत् महारय इति छेदः। महारय इति निष्पन्नोऽभूदित्यर्थः। शिष्टं स्पष्टम्॥

यथावा—

समुपनतेऽपि नदीनस्तव गाम्भीर्यादुपर्युपरि भङ्गे। व्यक्रियत नान्तरीदृङ्न विकृतिभाक्प्रकृतिवैपरीत्येन॥ १६०९॥

हे भगवन्निति लभ्यते, तस्यैव प्रकृतत्वात्। नदीनः सरित्पतिः। अदीन इत्यप्युपस्कार्यम्। तव गाम्भीर्यात् हेतुभूतात् उपर्युपरि पदेपदे भङ्गे स्वस्य परिभवे, पक्षे उपर्युपरि ऊर्ध्वोर्ध्वभाग एव भङ्गे तरङ्गे जात्यभिप्रायकमेकवचनम्। समुपनतेऽपि

प्राप्तेऽपीत्यर्थः । अन्तः मनसि, पक्षे अन्तःप्रदेशे न व्यक्रियत न विकुरुते स्म । हृदयदौर्बल्यं न प्राचीकशदिति यावत् । कर्मकर्तरि यक् । यद्वा न व्यक्रियत नदीनतां नात्याक्षीदित्यर्थः । पक्षे क्षुभितो नासीदित्यर्थः । ईदृक् गभीरस्वभावः प्रकृतिवैपरीत्येन गभीरिमरूस्वस्वभावविपर्ययेण विकृतिभाक् लाघवरूपविकारभाक् न भवति । आपतत्स्वपि हृदयविक्षोभहेतुषु भूयस्सु न गभीरप्रकृतिस्स्वस्वभावविरोधिलाघवादिरूपविकारमाप्नोतीति भावः ॥

पक्षे नदीनः नदीन इति शब्दः उपर्युपरि अग्रेऽग्रे भङ्गेस्वादिविभक्तीनां परस्परं भेदे उपनतेऽपि । 'भङ्गो जयविपर्यये । भेदरोगतरङ्गेषु' इति मेदिनी । अन्तः विभक्त्यपेक्षया पूर्ववर्तिनि प्रातिपदिकरूपे अन्तर्भागे न व्यक्रियत । विभक्तीनामन्योन्यभेदसद्भावेऽपि प्रकृतेरविकृततयैवावस्थानादिति भावः । न केवलं यथावस्थितप्रातिपदिकाविकृतत्वमेव, अपितु तद्वैपरीत्येऽप्यविकृतत्वमेवेत्याह—ईदृगिति । ईदृक् नदीनशब्द एवेति भावः । प्रकृतिवैपरीत्येन प्रातिपदिकरूपप्रकृतेर्व्यत्यस्ततया पाठे न विकृतिभाक् पूर्वापेक्षया विभिन्नवर्णानुपूर्वीकः न भवति । किंतु यथापुरं नदीन इत्येवावतिष्ठत इति भावः । अत्र समुपनतेऽपीत्यादिना नान्तरित्यन्तेन प्रतिपादितस्य विशेषस्य ईदृगित्यादिसामान्येनाप्रस्तुतेन समर्थनम् । समासोक्तिसंकीर्णत्वादिविच्छित्तिविशेषस्तु सुगम एव ॥

यथावा—

विकचसिताम्बुजमुद्भटगन्धं त्वन्नयनाजितमथापचितम् । तव सर्वदाऽऽस्यलक्ष्मीमलभत सूनस्य वृत्तिरियती हि ॥ १६१० ॥

हे भगवन् ! विकचं व्याकोचं सिताम्बुजं पुण्डरीकं उद्भटः गन्धः यस्य तत्तथोक्तं अतिसौन्दर्यगर्वितमित्यर्थः। अतिसौरभशालीति तु तत्त्वम्। अथ त्वन्नयनजितं अत एव अपचितं अपचयं प्राप्तं त्वन्नयनजितं अथ अपचितमिति वा योजना। पक्षे विकचसिताम्बुजमिति पदं अपचितं अपगतचकारं कृतं सत् विकसिताम्बुजं भवदिति भावः। तव सर्वदास्यलक्ष्मीं सर्वविधकैंकर्यश्रियं, पक्षे सर्वदा आस्यलक्ष्मीं मुखशोभां अलभत। तथाहि, सूनस्य सुष्ठु ऊनस्य वैरशुद्ध्यौपयिकशौर्यधैर्यादिभिस्सर्वथाऽपि हीनस्य प्रसूनस्येति तु तत्त्वम्। गतिः स्थितिः इयती एतावती। यत्प्रतीकाराक्षमतया स्वजेत्रोपसर्पणमिति भावः। अयमपि सामान्येन विशेषस्य समर्थनरूप एव॥

त्वत्सौकुमार्यविजितं मत्वा निजसौकुमार्यमखिलाम्ब। नवनीतमनस्थितिमद्वनीतमासीन्मृदोर्हि गतिरियती ॥ १६११ ॥

नवनीतं अनस्थितिमत् अनसि शकटे स्थितिमत् 'शर्परे खरि वा विसर्गलोपः' इति विसर्गलोपे स्थितीत्यत्रैकसकारकमेव रूपमर्थान्तरे शब्दावैरूप्यायेति ध्येयम्। देशान्तरप्रस्थानाय शकटमारूढमिति भावः। वनीतं वनीं गतं अथवा वनी इता प्राप्ता येनेति बहुव्रीहिः। अरण्यानीं प्रविष्टमित्यर्थः। पक्षे नवनीतमिति पदं नस्य नकारस्य स्थितिः साऽस्यास्तीति नस्थितिमत् तन्न भवतीत्यनस्थितिमत् नकारविघटीतं वनीतमासीदित्यर्थः। तथाहि, मृदोः कोमलस्य अतीक्ष्णस्य च गतिः ईदृक्। अन्यत्सर्वं पूर्ववत्॥

यथावा—

त्वत्पदरुचिविद्वेषाद्विभङ्गमभ्येत्य विद्रुमश्शौरे।
द्रुम एव सर्वथाऽभूस्त्वद्वेषस्येदृशो हि परिणामः॥

विद्रुमः प्रवाळः विद्रुमशब्दश्च। विभङ्गं विशेषेण पराभवं सर्वतोमुखं परिभवमिति यावत्। पक्षे वि इत्याकारकवर्णस्य नाशं अभ्येत्य। द्रुम एव तरुरेव पक्षे द्रुमशब्द एव अभूत् त्वयि त्वद्विषये द्वेषस्य परिणामः परिपाकः ईदृशो हि। स्थावरजन्मप्रापणमेव हि॥

यथावा—

फालेन तव परास्तो बालेन्दुर्भवति बहुळगळदोजाः। हालिकसंघर्षी मृदुरयते क्षयमेव देवि हरिदयिते॥ १६१३॥

बालेन्दुः अभिवृद्धो भवन्नपि बहुलगळदोजाः अतिमात्रभ्रश्यत्तेजाः भवति बहुले कृष्णपक्षे गलदोजाः भवतीति वस्तुस्थितिः। हलं प्रहरणमस्य हालिकः तेन संघर्षी मृदुः शरीरतश्शौर्यतश्च मृदुलः। पक्षे हा अलिकसंघर्षीति छेदः अलिकं ललाटं तेन संघर्षीत्यर्थः। शिष्टं स्पष्टम्॥

यथावा—

परमपुरुषाश्रितो यः परवाक्छरबाधितोऽपि दृढभावात्। न पुरेव स परमरुषाश्रितो भवेन्न हि तथाविधस्सीदेत्॥ १६१४॥

थ: पुमान् परमपुरुषाश्रितः सः परेषां वैरिणां वाग्भिश्शरैश्च। पक्षे शरतुल्याभिर्वाग्भिः बाधितोऽपि क्षतोऽपि दृढभावात् भगवदनुग्रहजनितशरीरदार्ढ्यात्तद्भक्तिदार्ढ्याच्च पुरेव भगवदाश्रयणात्पूर्वमिव परं अरुषा व्रणेन 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः। श्रितो न भवेत्। प्रह्लादादेरिव तस्य भगवत्प्रसादात्परैः प्रयुक्ताश्शरा न व्यथालेशमपि विधातुमीशारिन्निति भावः। पक्षे परमया रुषा क्रुधा श्रितो न भवेत् 'न क्रोधो न च मात्सर्यम्' इत्याद्युक्तरीत्या क्षोदिष्ठमर्मस्पर्शिवाग्भिस्तस्य क्रोधानुदयादिति भावः। तथाहि तथाविधः महदाश्रितः न सीदेत् नावसीदेदित्यर्थः॥

पक्षे परमपुरुषाश्रितशब्दः न विद्यते पुः पुवर्णः यस्य नपुः नशब्देन बहुव्रीहिः। पुवर्णरहित एव परमरुषाश्रित इति ज्ञायते। तथाविधः पुवर्णविधुरतां प्राप्तोऽपि परमपुरुषशब्दः न हि सीदेत् निरर्थकतया नावतिष्ठेत किंतु अर्थवत्तयैव जागृयादिति भावः॥

यथावा—

**इन्दुः कन्दुरपि त्वन्मुखवसुहारी क्षयं कमपि यातः। यो दुस्थितिमान् स्वान्ते स भवति भावान्तरेऽपि दुस्थितिमान्॥ १६१५॥**

हे भगवन्! इन्दुः त्वन्मुखवसुहारी वदनप्रभाहरणशीलः स्वत्प्रभृतिधनहरणशील इति च गम्यते। ताच्छील्ये णिनिः। अतएव कमपि क्षयं सकलकलापचयरूपं राजयक्ष्माणं यातस्सन् कन्दुरपि कन्दुर्भवन्नपि कन्दुर्नाम अयोमय उत्तानो वर्तुलाकारो होळकाद्यपूपनिर्वर्तनोपकरणभूतो वस्तुविशेषः। 'क्लिबेऽम्बरीषं

भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम्' इत्यमरः। कन्दुशब्दः वा ना वा पुंसीति कोशार्थः। स्वेदनीजन्म भजमानोऽपि तद्वन्निस्तेजस्को भवन्नपीति तु हृदयम्। पक्षे हारो इक्षयमिति च्छेदः। इन्दुः इन्दुशब्दः इक्षयं इकारलोपं यातः नैतावदेव, कमपि यातः। अपिस्समुच्चये। इकारस्थाने ककारं च यातः कन्दुरिति निष्पन्न इत्यर्थः। एवं कन्दुरूपं प्रपन्नोऽपि कमपि क्षयं यात इत्यावृत्त्या योजनीयम्। इन्दुत्वावस्थायामिव कन्दुत्वावस्थायामपि राजयक्ष्माणं प्राप्त एवासीत् न तु तमत्याक्षीदिति भावः। वस्तुतस्तु कमपि क्षयं गृहं महानसमिति भावः। तत्रैव कन्दोरवस्थानौचित्यात्। 'क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च' इति मेदिनी। यद्वा चुल्लीस्थित्यवसरलग्नधूममषीव्यपनयार्थकृतसिकतादिघर्षजभूयस्तया अपचयं यात इत्यर्थः। कथमस्य जन्मान्तरेऽपि क्षयानुवृत्तिरित्यत आह—य इति। यः स्वान्ते मनसि 'स्वान्तं हृन्मानसम्' इत्यमरः। दुस्थितिमान् नित्यं परस्वापहारादिदुराशयवान्। नित्ययोगे मतुप्। तदनुरूपक्षयाद्युपतापी च भवति। सः भावान्तरेऽपि 'भावस्सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः। दुस्थितिमानेव भवति। न हि नित्यमेव पापशीलानामकृततन्निष्कृतीनां जन्मान्तरेऽपि तत्फलानुभवस्सुकरापनोद इति भावः। वस्तुतस्तु यः इन्दुशब्दः स्वान्ते स्वस्य चरमभागे दुस्थितिमान् इकारलोपेन तत्स्थाने ककारं प्राप्तोऽपि नित्यदुवर्णस्थितिमानिति भावः। सः इन्दुशब्दः भावान्तरेऽपि कन्दुरिति रूपान्तरे प्राप्तेऽपि दुस्थितिमानेव दुवर्णस्य पूर्वमप्यनपनीतत्वात्तद्विशिष्ट एव भवति। इन्दुकन्दुशब्दयोरुभयोरप्यन्ते दुरितिवर्णसमुदयस्य तौल्यादिति भावः। शब्दार्थता-

दात्म्यविजृम्भितश्लेषमूलकाभेदाध्यवसायानुप्रणितस्सामान्येनाप्रस्तुतेन विशेषसमर्थनरूप एवार्थान्तरन्यासः ॥

विशेषस्य सामान्येन वैधर्म्येण समर्थनं यथा—

संकल्पादेव जगद्वेङ्कटनाथस्सृजत्यवत्यत्ति ।
असमर्थो यः कार्येष्वपेक्षते स परमन्यसाहाय्यम् ॥ १६१६ ॥

अत्र पूर्वार्धोक्तस्य विशेषस्य प्रकृतस्य उत्तरार्धोक्तेन सामान्येनाप्रकृतेन वैधर्म्येण समर्थनम् ॥

यथावा—

नितरां जननि कराभ्यां निजकरचरणेक्षणप्रतिस्पर्धि । नलिनं बत लालयसे न पराभविताऽरिमपि मृदुप्रकृतिः ॥ १६१७ ॥

अत्र प्राथमिकचरणत्रितयप्रतिपादितस्य विशेषस्य चतुर्थचरणोदितसामान्येन वैधर्म्येण समर्थनम् ॥

यथावा—

लोकेशे नाकेशे काके कीशेऽपि तव कृपा सदृशी । न विशति हि महोदारो ननूत्तमाधमविभागकार्पण्यम् ॥ १६१८ ॥

अत्रापि पूर्वार्धोक्तो विशेषः प्रकृत उत्तरार्धोक्तेन सामान्येनाप्रकृतेन वैधर्म्येण समर्थ्यते ॥

यथावा—

हुतवहमध्ये तप्त्वा द्रुतमुज्ज्वलितं भवान्तरे भर्म । वर्म तवाच्युत समजनि कल्याणस्य स्वतः किमप्राप्यम् ॥ १६१९ ॥

हे अच्युत ! भर्म स्वर्णं कर्तृ। हुतवहमध्ये पञ्चाग्निमध्ये अग्निमध्ये च तप्त्वा तपः कृत्वा तप्तं भूत्वा च अतएव द्रुतं शीघ्रं उज्ज्वलितं प्रकाशितं पक्षे द्रुतं द्रवतां गतं विलीनमित्यर्थः । उज्ज्वलितं पुटपाकेन शोभितमित्यर्थः । भवान्तरे जन्मान्तरे रूपान्तरे च तव वर्म कवचं अजनि। पक्षे भर्म भर्मेति पदं भवान्तरे वेन वकारेण अन्तरं अन्तर्धानं भस्य भकारस्य वान्तरं भवान्तरं तस्मिन् सति वकारस्य भकारेण तिरोधाने सति भकारस्थाने वकारोच्चारणे सतीति यावत् 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमर । वर्म अजनि। भर्मेति पदं वर्मेति निष्पन्नमित्यर्थः। स्वतः कल्याणस्य मङ्गळकृतः सुवर्णस्य च किमप्राप्यं सर्वं प्राप्यमेव 'न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इति गानादिति भावः। 'कल्याणं मङ्गले स्वर्णे' इति रत्नमाला। अत्रापि पूर्ववदेव समर्थनम् । श्लेषादिसंकीर्णत्वं विशेषः॥

यथावा—

भ्रमरोऽपि तव पदाब्जे लग्नोऽभ्रममेत्य भवति खल्वमरः । किंकिमलभ्यं त्वत्पदपङ्कजसक्तस्य वेङ्कटाद्रिमणे ॥ १६२० ॥

भ्रमरोऽपि तिर्यग्जन्तुरपि कामुकोपीति वा 'भ्रमरः कामुके भृङ्गे' इति मेदिनी। तव पदाब्जे लग्नस्सन् अभ्रमं अन्यत्र भ्रमणं अभ्रान्तिं वा प्रत्य अमरो भवति देवो भवति। खल्विति प्रसिद्धौ। पक्षे भ्रमरशब्दः अभ्रममित्यत्र अभ्रं अं इति च्छेदः। अविद्यमानो भ्रः भ्रवर्णो यस्य तं भ्रंशितभ्रवर्णमिति यावत् अं अवर्णं प्रत्य-भ्रवर्णस्थाने अकारं प्राप्येत्यर्थः। अमरः अभूत् उक्तरीत्या भ्रमर-शब्दः अमरशब्दोऽभूदित्यर्थः। अत्रापि पूर्ववदेव सर्वमनुसन्धेयम्॥

यथावा—

**अपि पामरस्तवाङ्घ्रावुपजातरुचिस्त्वया कृतो-ऽपापः। लभतेऽमरत्वमच्युत न भजेत्किं वा त्वदाश्रितोऽभीष्टम्॥ १६२१॥**

हे अच्युत! इदं संबोधनं विवक्षितपापहरणसाभिप्रायम्। यथा स्मर्यते—

अतिपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम्।
भूयस्तपस्वी भवति पङ्क्तिपावनपावनः॥

इति। तव अङ्घ्रौ उपजातरुचिः पामरः नीचोऽपि त्वया अपापः कृतः निर्धूताखिलपूर्वोत्तराघः कृतस्सन् अमरत्वं 'यत्र पूर्वे साध्यास्सन्ति देवाः' इत्युक्तप्रकारेण देवत्वं मुक्तत्वमिति यावत् लभते। पक्षे पामरशब्दः त्वया पं आप्नोतीति पापः। कर्मण्यण्। नपापः अपापः पवर्णरहितः कृत इति यावत्। अमरत्वं अमर शब्दत्वं लभते इत्यर्थः॥

यथावा—

**आद्यन्तप्रासजयं मध्येऽपिच लेशतोऽप्यवि-**

ध्वस्तम् । जयति जलेशयमम्ब त्वदाश्रितानां कदा परिभवस्स्यात् ॥ १६२२ ॥

जलेशयं कमलं जलेशयमिति पदं च । आद्यन्तयोस्समर्थयोः अद्यन्तभागयोश्च प्राप्तः जयः उत्कर्षः यस्य तत्तथोक्तं, प्राप्तौ जयौ जकारयकारौ येन तदिति च । मध्येऽपिच मध्यकालेऽपि लेशतोऽपि लवमात्रतोऽपि अविध्वस्तं भ्रंशं नप्राप्तं, पक्षे लेशतः ले श इति वर्णाभ्यां अविध्वस्तं अध्वस्तलेशवर्णमित्यर्थः । जयति सर्वोत्कर्षं प्राप्नोति । शब्दपक्षे जलेशयशब्दः एवंविधो जयतीत्यर्थः ॥

यथावा—

नहुषस्स वासवस्सन्नवलेपात्स्वान्त एव हसितोऽम्ब । वाहसभावमविन्दत्त्वदपाङ्गविपर्यये किमिव न स्यात् ॥ १६२३ ॥

हे अम्ब ! सः प्रसिद्धः नहुषः वासवस्सन् इन्द्रो भवन् सन् अवलेपात् त्रैलोक्यैश्वर्यमदात् स्वान्त एव मनस्येव 'स्वान्तं हृन्मानसं मनः' इत्यमरः । हसितः मत्तुल्यः कोऽन्योऽस्तीति हसन्निति गर्वानुभावोक्तिः । कर्तरि क्तः । वाहसभावं अजगरत्वं 'अजगरश्शयुर्वाहस इत्युभौ' इत्यमरः। अविन्दत् । पक्षे वासवशब्दः वस्य वकारस्य लेपः संबन्धः न वलेपः अवलेपः तस्मात् वकारसंबन्धाभावं प्राप्येति ल्यब्लोपे पञ्चमी । वकारलोपेन वास इति निष्पन्नः स्वान्त एव स्वस्य अन्ते मध्यभाग एव हसितः हेन हकारेण सितः बद्धस्सन् मध्ये हकारघटितस्सन्नित्यर्थः ।

वाहसभावं वाहसशब्दत्वं अविन्दत् वा स इति वर्णयोर्मध्ये हकारविन्यासे तथा निष्पत्तेरिति भावः। स्पष्टमन्यत् ॥

यथावा—

त्वच्चरणरुचेस्तौल्ये किसलयमुद्युक्तमेव चेदम्ब। मुखभङ्गात्सलयं स्यादीदृग्दर्शयति किं मुखं भग्नम् ॥ १६२४ ॥

किसलयं मुखभङ्गात् पराभवादिति यावत्। लयः यत्र क्वापि वा लीनता तेन सह वर्तत इति सलयं स्यात्। केनाप्यदृश्यमानतयाऽवस्थितं स्यादिति भावः। पक्षे मुखवर्णविच्युतेः सलयं स्यात् किसलयमिति शब्दरूपं मुखवर्णभ्रंशे सलयमिति निष्पद्येतेत्यर्थः। ईदृक् एवं पराभूतो यःकोऽपि वा भग्नं मुखं दर्शयति किं? जनानामिति शेषः। मुखभङ्गं प्राप्तवान्मानी कस्यचिदपि मुखं न दर्शयत्येवेति लोकोक्तिः। पक्षे ईदृक् सलयमिति निष्पन्नं किसलयं किसलयपदं कर्तृ, मुखं आदिभागविस्थितमिति यावत् किं कि इत्याकारकं वर्णं भग्नं दर्शयति च्युतं सूचयति। किसलयपदं सलयमिति श्रूयेतचेत् अस्य मुखे वर्णं स्रस्तमिति सूचयतीति भावः। शिष्टं स्पष्टम्। अत्र सामान्यमप्रस्तुतं समर्थकम् ॥

यथावा—

पुलिनमपुंभावं गतमम्ब भवत्या नितम्बतो विजितम्। कथमपि सदग्रभवनं पादधुतं किं प्रगल्भतां क्लीबम् ॥ १६२५ ॥

हे अम्ब! पुलिनं अपुंभावं गतं स्वरूपत एवापुंस्त्वमापन्नं 'तोयोत्थितं तत्पुलिनम्' इति क्लीबत्वानुशासनादिति भावः। पक्षे अपुं पुवर्णरहितं भावं स्थितिं गतं लिनमित्यवशिष्टमित्यर्थः। अत एव भवत्याः नितम्बतः पुंस्त्वभाज इति भावः 'गश्चान्नितम्बः' इति पुल्लिङ्गतानुशासनात्तस्य। विजितं अथ कथमपि अग्रे नितम्बस्य समक्षं भवनं स्थितः यस्य तथाभूतं सत्, पक्षे अग्रभवः आदिभागस्थितिः नः नकारः यस्य तत्तथोक्तं नलिनं सदिति यावत्। तदाऽपि क्लीबत्वमत्यजदेवेति भावः। पादेन पुंस्त्वभाजेति भावः। धुतं क्षिप्तम्। पुलिनभावे नितम्बेन नलिनभावे पादेन च तिरस्कृतमिति निर्गलितोऽर्थः। कुत एवमित्यत आह— किमिति। क्लीबं नपुंसकम्। किं प्रगल्भतां किमिति पुमानिव प्रागल्भ्यं लभेतेति भावः॥

यथावा—

**गोत्रप्रवरे भवनं युवयोरेकत्र माधव तथा-ऽपि। आसीद्विवाहयोगस्स्वैराः क्व नु विधिनिषे-धवशगास्स्युः॥ १६२६॥**

हे माधव! इदं लक्ष्मीपतित्वेन संबोधनं विवक्षितार्थोपष्टम्भाय। लक्ष्मीश्च त्वं च युवां तयोः युवयोः "त्यदादीनि सर्वैर्नित्यम्, त्यदादितश्शेषे पुन्नपुंसकतो लिङ्गवचनानि" इति पुल्लिङ्गयुष्मच्छब्दैकशेषः। एकत्र एकस्मिन् गोत्रप्रवरे गोत्रं च प्रवरश्च अनयोस्समाहारः गोत्रप्रवरं तस्मिन् स्मृतिप्रसिद्धे एकस्मिन्नेव गोत्रे प्रवरे चेत्यर्थः। पक्षे गोत्रप्रवरे गिरिश्रेष्ठे शेषाद्रावित्यर्थः। भवनं जन्म गृहं च भवति। तथाऽपि युवयोः विवाहयोगः परिणयरूपसंबन्धः। तथाऽपीत्यनेन—

"समानप्रवरां कन्यामेकगोत्रामथापि वा।
विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम्" ॥

"असगोत्रामसमानप्रवरां विन्देत" इत्यादिशातातपविष्णुप्रभृतिधर्मशास्त्रवचनविरोधस्सूचितः। पक्षे विः पक्षी गरुत्मान् स एव वाहः वाहनं तस्य योगः 'अजिताकर्षणी नीतिर्गरुडा गरुडासना' इति, 'वाहनं वेदात्मा विहगेश्वरः' इत्यादिभिर्लक्ष्म्या अपि तद्वाहनात्वोक्तेरिति भावः। कुत एवं शास्त्रनिषिद्धे प्रवृत्तिरत्रत्याह—स्वैरा इति। स्वैराः स्वेच्छाचारिणः कनु विधिनिषेधवशगाः स्युः न भवन्त्येवेति भावः 'अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी' इत्युक्तरीत्या भगवतस्स्वैरत्वमिति हृदयम् ॥

यथावा—

कचविजितोऽवध्वस्तश्शैवल इह शैलतां प्रपद्य पुनः। कुचविजितोऽभूल्लक्ष्म्याश्श्रिया जितः क्वनु जयाय कल्पेत ॥ १६२७ ॥

शैवलः शैवालं अवध्वस्तः अवचूर्णितः 'अवध्वस्तोऽवचूर्णितः' इत्यमरः। पक्षे वकारेण ध्वस्त इति वा वकारो ध्वस्तो यस्मादिति वा वध्वस्तः। शैलतां गिरितां शैलशब्दतां च प्रपद्य। स्पष्टमन्यत् ॥

यथावा—

देवि प्रसूर्न हि त्वत्पुष्टा म्लायन्ति सुमनसस्तापैः। म्लायन्ति तरुगतास्तु क्वनु न म्लानिः प्रसूनताभाजाम् ॥ १६२८ ॥

हे प्रसूः हे जननि! सुमनसः विपश्चितः कुसुमानि च। तापैः आध्यात्मिकादिभिः रविकरादिजन्यैश्च संतापैः। प्रसूनता प्रस्वा जनन्या ऊनता हीनत्वं पक्षे कुसुमत्वं तां भजन्तीति तथोक्ताः। सुगमामितरत्॥

यथावा—

**मकरन्दस्स्वकदलनेऽप्यनुज्झितस्वार्थ एव तव वचसः। सख्यमुपैन्न हि मधुरा वैरायन्ते निजासुहृद्भ्योऽपि॥ १६२१॥**

हे देवि! मकरन्दः पुष्परसः मकरन्दशब्दश्च। तव वचसः हेतुभूताद्वचनात् स्वस्य कं स्वकं तस्य दळनेऽपि मस्तकफालनेऽपीति लोकोक्तिः। पक्षे स्वस्य कः कवर्णः तस्य दळने भ्रंशे सत्यपि अनुज्झितः स्वः निजः अर्थः प्रयोजनं येन स तथोक्तः। स्वप्रयोजनैकसाधनदृष्टिः। पक्षे अनुज्झितस्वार्थः अपरित्यक्तस्वाभिधेयः मकरन्दशब्दः कवर्णभ्रंशेऽपि मरन्द इति निष्पन्नतया अपरित्यक्तस्वाभिधेय एव। मकरन्दमरन्दशब्दयोस्तुल्यार्थकत्वादिति भावः। वचस इत्येतन्मध्यमणिन्यायेनोत्तरत्राप्यन्वेति। तव वचसः वचनस्य सख्यं सौहार्दं उपैत् प्रापत्। स्वशिरोविदलनहेतुभूतेऽपि कुत एव न प्रत्यकार्षीदित्यत्राह— मधुरा इति। मधुराः निसर्गत एव प्रियशीलाः स्वादुशीलाश्च 'स्वादुप्रियौ तु मधुरौ' इत्यमरः। निजासुहृद्भ्योऽपि स्वप्राणहारिभ्योऽपि न वैरायन्ते तानुद्दिश्य वैरं न कुर्वन्तीत्यर्थः। 'शब्दवैर' इत्यादिना क्यङ् 'तस्मै कः प्रथमाय मानिषु महावीराय वैरायते' इत्यत्रेव 'क्रुधद्रुह' इत्यादिना चतुर्थी॥

यथावा—

**पातालं हरिमहिळेऽपारहितं सख्यमेत्य तावकनाभेः । स्तनसख्यमप्यगात्कनु सर्वगुरु स्थितिमयत्सतां न सुहृत्स्यात् ॥ १६३० ॥**

हे हरिमहिळे! पातालं कर्तृ। तव नाभेस्सख्यमेत्य तत्तुल्यं भूत्वेति हृदयम्। अपारं यथा स्यात्तथा हितं आप्तं सत् पक्षे पारहितमिति च्छेदः पावर्णविधुरं सत् स्तनयोस्सख्यमप्यगात् तालं तालफलं सत् कुचतौल्यमप्यलभतेति भावः। शब्दार्थतादात्म्यं न विस्मर्तव्यम्। तथा हि—सर्वगुरु सर्वेषामपि पूज्यं सतां महतां स्थितिं मर्यादां अयत् प्राप्नुवत् वस्तु कनु कस्मिन्वस्तुनि सुहृत् न स्यात् ईदृशं सर्वसुहृदेव भवेदिति भावः। पक्षे सर्वे वर्णाः गुरवः यस्मिन् तत्तथोक्तं सतां ताकारसहितां स्थितिं अवस्थानं प्राप्तं, पातालमिति पदं गुरुभूतसर्ववर्णं ताकारसहितं चेति तथोक्तिः॥

एवं साधर्म्यवैधर्म्याभ्यां विशेषस्य सामान्येन समर्थने तयोः प्रस्तुतत्वाप्रस्तुतत्ववैलक्षण्यमनादृत्य समुदितान्येवोदाहरणानि यद्यपि प्रदर्शितानि। तथाऽपि अत्र प्रथमप्रभेदस्य 'स्यालो हरेरितीन्दुः' इत्यादिषूदाहरणेषु प्रस्तुतस्य विशेषस्याप्रस्तुतेन सामान्येन समर्थनं 'त्वय्यत्यादरवांश्चेत्। त्वत्पद्रुचिविद्वेषात्' इत्युदाहरणयोः प्रस्तुतेन सामान्येनाप्रस्तुतस्य विशेषस्य समर्थनं द्वितीयप्रभेदस्य तु 'संकल्पादेव जगत्' इत्याद्युदाहरणेषु प्रस्तुतस्य विशेषस्याप्रस्तुतेन सामान्येन 'भ्रमरोऽपि तव पदाब्जे, इत्याद्युदाहरणचतुष्टये 'कचविजितोऽवध्वस्तः' इत्याद्युदाहरणे च अप्र-

स्तुतविशेषस्यैव प्रस्तुतेन सामान्येन समर्थनमिति वैलक्षण्यं बोध्यम् ॥

सामान्यस्य विशेषेण साधर्म्येण समर्थनं यथा—

त्वादृशसदीश्वरजुषां स्वगुणाश्श्रीनाथ संप्रकाशेरन् । चन्द्राश्रितस्य सान्द्रश्श्यामलिमा भाति कृष्णसारस्य ॥ १६३१ ॥

सन् प्रशस्तः ईश्वरः स्वामी । सतां नक्षत्राणां ईश्वर इति च तज्जुषाम् । अत्र पूर्वार्धोक्तस्य सामान्यस्य प्रकृतस्याप्रकृतेनोत्तरार्धोक्तेन विशेषेण साधर्म्येण समर्थनम् ॥

यथावा—

निरवधिका धनतृष्णा स्फुरति हि निरतिशयसंपदामेव । नतजनधनमादत्ते विततं यस्माद्रमानिवासोऽपि ॥ १६३२ ॥

अत्र पूर्वार्धप्रतिपादितस्य सामान्यस्य प्रकृतस्य उत्तरार्धप्रतिपादितेन विशेषेण प्रकृतेन साधर्म्येण समर्थनमिति पूर्वस्माद्विशेषः ॥

यथावा—

नियतं जगदीशेन न्यक्क्रियते जिह्मगो धराभृदपि । अधरीकृतस्सरीसृपगिरीश्वरो यद्रमेश्वरेणायम् ॥ १६३३ ॥

अत्रापि पूर्ववदेवाप्रकृतस्य सामान्यस्य प्रकृतेन विशेषेण समर्थनं, श्लेषसंकीर्णत्वं तु विशेषः ॥

यथावा—

ऋद्धिमतामेवाशा महती यन्नन्दमन्दिरे निवसन्। पीताम्बरोऽपि भगवान् बत पाटच्चरदशामुपादत्त ॥ १६३४ ॥

पटच्चरस्येयं पाटच्चरी तां जीर्णवस्त्रसंबन्धिनीं दशां अञ्चलं, पक्षे पाटच्चरस्य चोरस्य दशां अवस्थां उपादत्त दधिनवनीतादिचौर्यलीलाया दर्शितत्वादिति भावः । 'पटच्चरं जीर्णवस्त्रं । प्रतिरोधिपरास्कान्दिपाटच्चरमलिम्लुचाः' इति चामरः । 'वर्त्यवस्थांशुकान्तेषु दशा' इति रत्नमाला ॥

सामान्यस्य विशेषेण वैधर्म्येण समर्थनं यथा—

शरणगमीश भवादृक्करुणात्मा न त्यजेन्निहीनमपि । विनिधायोत्सङ्गे स्वे विधुः कुरङ्गं श्रितं हि लालयति ॥ १६३५ ॥

अत्र पूर्वार्धोदीरितस्य सामान्यस्य प्रकृतस्याप्रकृतेन विशेषेण वैधर्म्येण समर्थनम् ॥

यथावा—

यो हि निसर्गाच्छ्रेयान् स जगति मूर्धन्यतां स्वयं भजते । कमिह पुरस्कुर्वंस्त्वं मूर्धन्याकारभागभवसि कृष्ण ॥ १६३६ ॥

हे कृष्ण! कं पुरस्कुर्वन् पूजयन् आश्रयन्नित्यर्थः। मूर्धन्यः सकलभुवनशिरोमान्यः यः आकारः स्वरूपं तं भजतीति तथोक्तो भवसि। न कस्यचिदपि पुरस्कारेण त्वं मूर्धन्याकारभाक् किंतु स्वभावत एवेति भावः। पक्षे हे कृष्णेति कृष्णशब्दस्यैव संबोधनम्। त्वं कं कवर्णं पुरस्कुर्वन् मुखतः कुर्वन् मूर्धन्याः मूर्धस्थानकाः ऋकारषकारणकाराः 'ऋ टु रषाणां मूर्धा' इत्यनुशासनात्। ते च अकारश्च मूर्धन्याकाराः तान् भजतीति तथोक्तः भवसि संबुद्ध्यन्तकृष्णशब्दस्य ककारऋकारषकारणकाराकारभाक्त्वात्तथोक्तिः। अत्रापि पूर्ववदेव। श्लेषचमत्कारस्तु विशेषः॥

समर्थ्यसमर्थकयोरुभयोरपि प्रकृतत्वेऽप्ययं दृश्यते। यथा—

दुर्लभमिह भविता श्रीवल्लभ किमु मे त्वदनुगृहीतस्य। त्वत्कृपया यद्दर्वीकरोऽपि भूभृद्वरेण्य एवासीत्॥ १६३७॥

दर्वीकरः शेषः सूदश्च। भूभृद्वरेण्यः गिरिराजः राजमुख्यश्च। अत्र समर्थ्यसमर्थकयोर्द्वयोरपि प्रकृतत्वम्। एवमग्रेऽपि॥

यथावा—

रक्षेरिति वरणकृतोऽच्युत विदधद्वंशमेव मम मुख्यम्। तं शरणकृतं रचयेर्न हीयते जात्वपि त्वदीयजनः॥ १६३८॥

हे अच्युत! रक्षेरिति गोपायिता भवेरिति वरणकृतः त्वां वृतवतः मम वंशं कुलमेव मुख्यं श्रेष्ठं विदधत्सन् 'लक्षणहे-

स्वोः' इति हेत्वर्थे शता। तं वंशं शरणकृतं भरन्यसनरूपोपायानुष्ठातारं रचयेः कुर्या एव। महद्वंशस्यैव श्रैष्ठ्यविधाने प्रवृत्तस्त्वं तं प्रपन्नं कथं न रचयेरिति भावः। त्वदीयजनः त्वदनुगृहीतो जनः जात्वपि न हीयते। 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति' इति गानादिति भावः। अत्रार्थान्तरं—वरणकृतः वरणकृच्छब्दस्य मुख्यं मुखे भवं वं वकारं शं शकारं विदधत्सन् तं वरणकृच्छब्दं शरणकृतं शरणकृच्छब्दं रचयेः। वरणकृच्छब्दस्यादिमवकारस्थाने शकारविन्यासे शरणकृदिति निष्पत्तेरिति॥

यथावा—

**तव कृपया राम पुरा वलीमुखोऽपि च चतुर्मुखो भवति। पङ्कजपलाशलोचन किंकिं न करोति तव कृपा स्वैरा॥ १६३९॥**

हे राम! वलीमुखः कपिरपि हनूमानिति भावः। तव कृपया चतुर्मुखः पुरा भवति भविष्यति। पुराशब्दयोगेन 'यावत्पुरा' इति भविष्यत्यर्थे लट्। स्पष्टमन्यत्॥

यथावा—

**त्वमिव श्रीवल्लभ ते श्रीवत्सश्श्रीनिवासतामयते। स श्रीसध्र्यङ् भवति हि यस्तव हृदयस्सुलक्षणत्वमियात्॥ १६४०॥**

हे श्रीवल्लभ! ते तव श्रीवत्सः तन्नामा लाञ्छनविशेषः त्वमिव श्रीनिवासतां श्रीनिकेतनत्वं अयते 'श्रीदश्श्रीशश्श्रीनिवासः।

ब्रह्मणि श्रीनिवासे' इति भवत इव तस्यापि श्रीनिवासत्वप्रसिद्धेः। तथाच तन्मन्त्रवर्णः 'श्रीवत्साय श्रीनिवासाय नमः' इति। लक्ष्मीनिवासस्थानत्वादेव हि तस्य श्रीनिवासत्वव्यवहारः। यः पदार्थः तव हृद्यः हृदयप्रियः वक्षसि भवश्च। सुलक्षणत्वं शोभनानि लक्षणानि 'शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः' इत्युक्तानि चिह्नानि यस्य स तथोक्तः। पक्षे शोभनं च तल्लक्षणं च तत्त्वं इयात्। सः सहाश्नुतीति सध्र्यङ्। श्रियस्सध्र्यङ् श्रीसहचारी भवति। भगवन्मनःप्रियश्शुभलक्षणश्च चेतनरूपः पदार्थः अपरित्यक्तज्ञानैश्वर्यादिसमृद्धिर्भवतीति भगवद्वक्षस्यवस्थितश्चिह्नरूपः पदार्थः नित्यं श्रिया सहैव वसतीति च निर्गळितोऽर्थः॥

तयोरप्रकृतयोरप्ययं दृश्यते। यथा—

**शुभकृच्छ्रेयो विन्देत्त्वद्वच इव सरलसारतामाप्तुम्। तप्त्वाऽधश्शीर्षं यद्रसालरस एव सरलसारोऽभूत्॥ १६४१॥**

शुभकृत् शुभकारी श्रेयः विन्देत्। 'शुभकृच्छुभमाप्नोति' इत्युक्तेरिति भावः। रसालरसः इक्षुरसः माकन्दरसो वा। त्वद्वच इव सरलसारतां उदाररसतां आप्तुं अधश्शीर्षं तप्त्वा सरलसार एव अभूत्। रसालरसशब्दस्य विलोमतया पठने तथा निष्पत्तेरिति भावः। अत्र समर्थ्यसमर्थकयोर्द्वयोरप्यप्रकृतत्वम्॥

अस्मिन्नलंकारे समर्थ्यसमर्थकभाव आर्थश्शाब्दश्चालंकारताप्रयोजकः। न तु काव्यलिङ्गे हेतुहेतुमद्भाव इवार्थ एव। हि यत् यस्मात् इत्यादेः प्रतिपादकस्याभावे आर्थः। स च 'असमर्थो यः कार्येष्वपेक्षते स परमन्यसाहाय्यम्' इत्यादौ। तत्सत्त्वे शाब्दः। सोऽपि 'न विशति हि महोदारः।

त्वत्कृपया यद्वशीकरः' इत्यादौ दर्शितः। अत्र वक्तव्यमन्यत्सर्वमुदाहरणालंकारनिरूपणावसरे दर्शितमिति नात्र प्रतायते। अत्र हि प्रतिज्ञाहेत्ववयवयोरिव आकाङ्क्षाक्रमप्राप्तं समर्थ्यसमर्थकवाक्ययोः पौर्वापर्यमिति न मन्तव्यम्। न ह्यत्र समर्थकं समर्थ्यानुपपत्त्युन्मीलितायामाकाङ्क्षायां सत्यामेवाभिधीयत इत्यस्ति नियमः। अनुपपत्तेरभावेऽपि प्रतीतिवैशद्यार्थं कविभिस्तस्याभिधानात्। एवं काव्यलिङ्गेऽपि। एवं च तयोर्वैपरीत्येऽपि न दोषः ॥

यथावा—

**सरिदधिपे शिखरिणि वा सदृशं वर्षति घनाघनस्सलिलम्। अवधीरितनिम्नोन्नतविभागमच्युत भवादृशौदार्यम् ॥ १६४२ ॥**

अत्र पूर्वार्धगत एव विशेषः उत्तरार्धगते सामान्ये प्रस्तुते समर्थकः ॥

इत्यलंकारमणिहारे अर्थान्तरन्याससरस्त्रिषष्टितमः

## अथ विकस्वरालंकारसरः (६४)

**सामान्येन विशेषस्य क्रियते यत्समर्थनम्।**
**पुनस्तस्य विशेषेण स विकस्वर ईर्यते ॥**

कस्यचिद्विशेषस्य समर्थनं सामान्येन विधाय तत्प्रसिद्ध्यापरितुष्यता कविना पुनर्विशेषेण तत्समर्थनमुपमानरीत्या अर्थान्तरन्यासविधया वा क्रियते स विकस्वरो नामालंकारः ॥

यथा—

न्यस्तभरं त्वयि मामिह न स्तोकं वाऽपि कर्म बाधेत । किमपि विबाधितुमीष्टे न भाग्यवन्तं यथा रविं ध्वान्तम् ॥ १६४३ ॥

किमपि वस्तु, इदं कर्तृ । ध्वान्तं तमः, इदमपि कर्तृ । इदमुपमानरीत्या विशेषान्तरन्यसने उदाहरणम् ॥

अर्थान्तरन्यासविधया यथा—

सत्स्वपि शिखरिषु बहुषु श्रीवास त्वं श्रितोऽसि वृषशैलम् । न हि सर्वे भाग्यभृतो मिषत्सु विबुधेष्ववाप हि श्रीस्त्वाम् ॥ १६४४ ॥

यथावा—

कृपया राज्यं प्रादाः कपये महतां निरङ्कुशा हि कृपा । गोपस्याप्यच्युत तव जगदीशत्वं ददौ हि जलधिसुता ॥ १६४५ ॥

अयमलंकारश्चन्द्रालोकानुयायिदीक्षितानुरोधेन दर्शितः । जगन्नाथादयस्तु—प्रकृतविशेषस्य सामान्येन समर्थनादेकोऽर्थान्तरन्यासः । सामान्यस्य विशेषेण समर्थनादपर इति भेदद्वयसमावेशात्मकतायाः स्फुटत्वात्तत्संसृष्ट्यैव गतार्थत्वान्नालंकारान्तरस्वीकार उचित इत्याहुः ॥

इत्यलंकारमणिहारे विकस्वरालंकारसरश्चतुष्षष्टितमः



## अथ प्रौढोक्तिसरः (६५)

---

यदुत्कर्षानिमित्तस्य तन्निमित्तत्वकल्पनम् ।
प्रौढोक्तिरेषा कथिता जयदेवमुखैर्बुधैः ॥

किंचिदुत्कर्षाहेतुभूते वस्तुनि तद्धेतुताकल्पनं प्रौढोक्तिनामालंकारः ॥

यथा—

सारस्वतपूरोदरसूरसमुद्भूसारसात्यरुणे । चरणे सुभगंकरणे स्मरणे स्तां मे हरेः प्रियंकरणे ॥ १६४६ ॥

अत्र सरस्वतीपूरगतारुणिमातिशयाहेतोस्तदुदरसूरसमुद्भवस्य तद्धेतुत्वकल्पनम् ॥

यथावा—

शरदमृतकरज्योत्स्नाच्छुरिताभ्रसरिद्विकासिकुमुदसिताः । मुरवैरियशःपूरा हरिता कर्पूरलेपमादधते ॥ १६४७ ॥

अत्रापि कुमुदसितत्वातिशयाहेतोश्शरच्चन्द्रज्योत्स्नाच्छुरितत्वादेर्हेतुत्वकल्पनम् ॥

रसगङ्गाधरकारस्तु "कस्मिंश्चिदर्थे किंचिद्धर्मकृतातिशयप्रतिपिपादयिषया प्रसिद्धतद्धर्मवता संसर्गस्योद्भावनं प्रौढोक्तिः" इति अस्यालंकारस्य लक्षणमाह । तदेदमुदाहरणम्—

इन्दुकरव्यतिकरितैश्चन्दनगिरिगन्धवाहसारांशैः।
जलनिधिकन्ये मन्ये जलरुहजन्माऽसृजत्तवापा-
ङ्गान् ॥ १६४८ ॥

अत्रापाङ्गेषु न केवलं शैशिर्यादयो मलयानिलकिशोरमात्रगुणा एव कवेः प्रतिपिपादयिषिताः, किंतु सकलजगदुज्जीवयितृत्वादयोऽन्येऽपीति मलयानिलसारांशेषु चन्द्रकरसंसर्गो विशेषणतयाऽतिशयार्थमुपात्तः। उत्पाद्योत्पादकभावश्चात्र न लोकप्रसिद्धः। किंतु कविप्रतिभामात्रनिबद्धः। अत्र च धर्मिविशेषसंसर्गादतिशयो धर्म्यन्तरगतो यदि व्यञ्जनाविषयः तदैवायमलंकारः। यदि वाच्यवृत्त्या तत्तत्प्रयुक्तत्वेनाभिधीयते तदा समालंकारस्यैव विषयः।

यथा—

पद्मे प्रादुरभूः किल पद्मे पद्मे बिभर्षि पाणि-
भ्याम्। असि पद्मनाभहृदयावसतिस्त्वं पद्मग-
न्धिरिति युक्तम् ॥ १६४९ ॥

अत्र लक्ष्म्यास्सौरभ्यातिशयस्तद्धर्मिसंबन्धप्रयुक्तत्वेन वर्णित इति सम एवालंकारः। एवं चास्य मते—

'एकोनविंशसंख्यकपुराणतः किंच षष्ठवेदेन। हेयगुणास्तत्र भगवन् ख्याप्यन्ते भाविमातृगर्भभवैः' ॥

इत्यादावेकस्य मिथ्यात्वसिद्ध्यर्थं मिथ्याभूतवस्त्वन्तरकल्पनं मिथ्याध्यवसित्यलंकारान्तरमिति न वक्तव्यं, प्रौढोक्त्यैव गतार्थत्वात्। 'कचाः कलिन्दजातीरतमालस्तोममेचकाः' इत्यादौ

प्राचीनकृतप्रौढोक्त्युदाहरणे यथा तमालेषु श्यामलिमातिशयार्थं श्यामलिमाधिकरणीभूतकालिन्दीसंबन्ध उद्भाव्यते तथा हेयगुणेषु मिथ्यात्वातिशयसिद्ध्यै मिथ्यात्वाधिकरणैकोनविंशसंख्याकपुराणादेसंबन्ध इत्यस्यापि सुवचत्वात् । यदि च मिथ्याध्यवसितिरेवालंकारान्तरं स्यात् सत्याध्यवसितिरपि तथा स्यादित्यापादयता रसगङ्गाधरकृता—

हरिश्चन्द्रेण संजप्ताः प्रगीता धर्मसूनुना ।
खेलन्ति निगमोत्सङ्गे मातर्गङ्गे गुणास्तव ॥

इत्याद्युदाहृत्य अत्र हरिश्चन्द्रयुधिष्ठिरनिगमसंबन्धाद्गुणानां सत्यत्वं प्रतीयते । एवं—

मध्ये सुधासमुद्रस्य सितामयगृहोदरे ।
पूर्णेन्दुविष्टरे देव स्थातुं योग्यास्तवोक्तयः ॥

अत्रापि सुधासमुद्रादिसंबन्धात् उक्तिषु माधुर्यातिशयः प्रतीयमानः कस्यालङ्कारस्य गोचरः स्यात् । अतोऽलंकारान्तरं स्यात् । मम तु प्रौढोक्त्यैव गतार्थतेत्युक्तम् ॥

इत्यलंकारमणिहारे प्रौढोक्तिसरः पञ्चषष्टितमः.

---

## अथ संभावनासरः (६६)

**संभावनं स्याद्यद्येवं स्यादित्यूहोऽन्यसिद्धये ॥**

यत्र किंचित्तर्कणमन्यत्तर्कणसाधनं तत्संभावनम् ॥

यथा—

**मम कोटिवदनता स्याद्यदि पुरुषायुषमिदं च कोटिगुणम् । ईशीय हरे स्तोतुं कोटितमांशं त्वदेकगुणभूम्नः ॥ १६५० ॥**

यथावा—

सितकिरणकिरणनिकरव्यतिकरतो द्रावित-स्तुषारगिरिः। घनसारसारमसृणो यदि तुलये-न्नाथ तव कृपासारम् ॥ १६५१ ॥

अत्राद्ये स्तोतुः कोटिवदनत्वादितर्कणं भगवदेकगुणमहिम-कोटितमांशतर्कणसाधनम्। द्वितीये तुषारगिरेश्चन्द्रकरद्रवीभूत-त्वादितर्कणं भगवत्कृपासारतुलनार्हतातर्कणसाधनम् ॥

यथावा—

कर्मानुगुणफलप्रदभर्त्रनुरोधश्रमोऽम्ब तव नो चेत्। धनिदीनविभागकथादूरमिदं श्रीमदेव भुवनं स्यात् ॥ १६५२ ॥

यथावा—

अहमेव यदि विधाता जातु भवेयं हरे भव-त्कृपया। खलवदनगहननिपतनविसंस्थुलां न रचयेय ननु वाणीम् ॥ १६५३ ॥

यथावा—

यदि तादृशशेषत्वं सिध्येन्मम तर्हि कथमपी-शीय। लावण्यविभवमच्युत तव वक्तुं श्रोतुमीक्षितुं वाऽपि ॥ १६५४ ॥

तादृशशेषत्वमिति। शेषत्वं तादृशेति विशिंषतोऽयमभिप्रा-यः—यद्यप्यधुनाऽपि स्वाभाविकं भगवदनन्यार्हशेषत्वमस्ति तथा-

ऽपि भगवल्लावण्यवर्णनादिपटुतरं सहस्रवदनस्वरूपं शेषत्वं नास्तीति । वक्तुं द्विसहस्ररसनत्वादिति भावः । श्रोतुमीक्षितुं वाऽपि द्विसहस्रनयनत्वादिति भावः । स हि चक्षुश्श्रवाः ॥

यथावा—

उज्झित्वा बकवृत्तिं ननु शिष्टस्तत्त्वविद्भवन् स्तवकः । साध्वग्रभवन एव स्याद्यदि लक्ष्म्यास्तदा स्तनत्वमियात् ॥ १६५५ ॥

स्तबकः गुच्छः स्तबकशब्दश्च । बकवृत्तिं 'अधोदृष्टिर्नैकृतिकस्स्वार्थस्साधनतत्परः, इत्याद्युक्तां बकवृत्तिं बकेत्याकारकवर्णद्वयस्थितिं च । उज्झित्वा त्यक्त्वा शिष्टः आचारशीलः तत्त्ववित् तत्त्वज्ञश्च भवन् । पक्षे शिष्टः उर्वरितः यः स्तः स्त इत्याकारकवर्णसमुदयो यस्य तथाभूतस्सन् ब क वर्णलोपे स्तकारमात्रावशिष्ट इत्यर्थः । साधूनां सात्त्विकानां रम्यवस्तूनां वा अग्रे भवनं स्थितिः यस्य स तथोक्त एव । पक्षे साधु यथा तथा अग्रभवः चरमश्रूयमाणः नः नकारः यस्य स तथोक्त एव स्याद्यदि तदा लक्ष्म्याः स्तनत्वं इयात् स्तनजन्म प्राप्नुयादित्यर्थः । स्तबकशब्दः बकवर्णलोपेन अवसाने नवर्णघटनेन च स्तन इति निष्पद्यत इति भावः । अत्र स्तबकस्य बकवृत्तिपरित्यागादिपूर्वकसाध्वग्रभवनत्वतर्कणं लक्ष्मीस्तनत्वप्राप्तितर्कणसाधनम् । श्लेषादिकं तु पूर्वेभ्यो विशेषः ॥

यथावा—

जननि मम स्तुत्या त्वं तनुया यदि च दरमन्तरामोदम् । सिद्ध्येद्दामोदरपदमथ मम नास्त्यत्र विशयलेशोऽपि ॥ १६५६ ॥

हे जननि ! मम स्तुत्या मत्कर्तृकस्तवेन दरं अल्पमपि अन्तः मनसि आमोदं प्रहर्षं तनुया यदि अथ तदैव मम दामोदरपदं परमं पदं सिद्ध्येत् । पक्षे दरं दश्च रश्च अनयोस्समाहारः दरं अन्तरा 'अन्तरान्तरेणयुक्ते' इति द्वितीया । दकाररेफयोर्मध्ये इत्यर्थः । आमोदं आमोदशब्दं तनुया यदि दामोदर इति पदं शब्दः सिध्येत् इत्यर्थः । अत्र स्तोतुर्यत्किञ्चिच्छ्रीहृदयामोदोदयतर्कणं दामोदरपदासिद्धितर्कणस्य साधनं श्लेषसंकीर्णम् । एवमग्रेऽपि ॥

यथावा—

**त्वदुदारकरविधूतस्सुरागमो वीतराग एव भवन् । यदि सुमतया परिणमेत्तदा तु तेऽच्युत नखेन सदृशस्स्यात् ॥ १६५७ ॥**

हे अच्युत ! सुरागमः कल्पतरुः तव उदारेण करेण विधूतः अतएव वीतराग एव विधूननजनितदैन्यातिशयेन विरक्त एव भवन् तपस्वी भवन्निति यावत् । सुमतया शोभना मा लक्ष्मीः यस्य स तथोक्तः सुमः तस्य भावः सुमता तया शोभनलक्ष्मीविशिष्टत्वेनेत्यर्थः । परिणमेद्यदि जायेतचेत् । पक्षे पुष्पतया परिणतो भवेद्यदीत्यर्थः । तदा तु ते तव नखेन सदृशस्स्यात् । अत्र सुरागमशब्दः वीतरागः विगतरावर्णगवर्णश्चेत् सुमतयैव परिणंस्यतीत्यर्थोऽपि चमत्कारी । अत्र सुरागमस्य सुमतापरिणतितर्कणं नखसादृश्यतर्कणसाधनम् ॥

यथावा—

**यदि जातु विजानीयाच्छ्रीजाने तावकीनमौदार्यम् । देवतरुस्स तदात्वे नासत्यं देवदारुतां यायात् ॥ १६५८ ॥**

देवतरुः अचेतन इति भावः। जातु कदाचित् तावकीनं औदार्यं जानीयाद्यदि। चेतनकार्यस्याचेतनेऽसंभवाद्यदीति संभावना। सः देवतरुः तदात्वे तत्काल एव देवदारुतां भद्रदारुनामक्षुद्रतरुविशेषतां यायात् यत्रक्वाप्यरण्ये देवदारुतरुवदौदार्यप्रथागन्धदवीयस्तया संकुचितो वर्तेतेति भावः। पक्षे देवतरु देवतरुशब्दः तदात्वे तकारस्य दावर्णत्वे तकारमपनीय दाकारे पठिते इति यावत्। देवदारुतां यायात् देवदारुशब्दो भवेदिति भावः। अत्र देवतरोर्भगवदौदार्यज्ञानसंभावनं तद्देवदारुतासंभावनसाधनम्॥

यथावा—

**त्वां तत्त्वेन वृषाचलकान्त बिडौजा द्विषीत यदि जातु। स भवेदेव गतौजास्सालो भूत्वाऽन्ततो बिडालोऽपि॥ १६५९॥**

हे वृषाचलकान्त! बिडौजाः इन्द्रोऽपि भ्रातृत्वेन व्यपदेश्योऽपि किमुतान्य इति भावः। जातु तत्त्वेन वस्तुतः न त्वारोपितकोपेन त्वां द्विषीत यदि तदा तर्हि बिडौजा गतौजास्सन् भगवद्विद्वेषमहिम्ना निस्तेजास्सन् सालः वृक्षो भूत्वा स्थावरजन्म लब्ध्वेत्यर्थः। अन्ततः पर्यवसाने बिडालोपि भवेत्। स्थावरजन्मना व्यपनीतकियत्पापस्तिर्यग्जन्माऽपि लभेतेति भावः। भगवद्विद्वेषफलमदीदृगित्यभिप्रायः। पक्षे बिडौजा इति शब्दः गताः ओ जा इत्याकारकवर्णौ यस्य स तथोक्तः। अन्ततः चरमभागे ओ जा इत्याकारकवर्णापगमे परिशिष्टस्य बिडेत्याकारकवर्णस्य चरमभागे इत्यर्थः। सालः आल इत्याकारकवर्णसमुदयसहितस्सन् बिडाल इति निष्पद्यत इत्यर्थः। अत्र बिडौजसो भगव-

द्विड्वेषसंभावनं स्तालबिडालतासंभावनसाधनम्। विच्छित्तिविशेषस्तु व्यक्त एव॥

यथावा—

हृत्वाऽच्युत तव कान्तिं क्वचन ग्रावणि निलीनमसिताभ्रम। दर्शयति कान्तिमत्त्वं यदि तर्हि बुधैः क्रियेत तद्भस्म॥ १६६० ॥

हे अच्युत! असिताभ्रं नीलजलदः तव कान्तिं हृत्वा क्वचन कस्मिंश्चित् ग्रावणि शैले। पक्षे प्रस्तरे 'ग्रावाणौ शैलपाषाणौ' इत्यमरः। विलीनं सत् कान्तिमत्त्वं स्वस्य द्युतिमत्त्वं, पक्षे कः कवर्णः अन्तिमो यस्य तत्तथोक्तं तस्य भावस्तत्त्वम्। अस्मिन् पक्षे अन्तिमत्त्वमित्यत्र तकारस्य 'अनचि च' इति द्वित्वम्। दर्शयति यदि तर्हि बुधैः धर्मशास्त्रज्ञैः आयुर्वेदज्ञैश्च तत् अभ्रकं भस्म क्रियेत जगदीश्वरप्रशस्तवस्तुहरणदुरितापनोदनानुरूपभस्मान्तप्रायश्चित्तगोचरीक्रियेतेति भावः। पक्षे भसितं क्रियेत। कृष्णाभ्रकस्यैव भस्मविषये ज्यायस्त्वस्मरणादिति भावः। अत्रासिताभ्रस्य क्वचिद्ग्रावणि कान्तिमत्त्वप्रकाशनतर्कणं भस्मीकरणतर्कणं प्रति साधनम्। चमत्कारातिशयस्तु पूर्ववदेव॥

यथावा—

रघुवीर महादेवो महाहवो यदि भवेत्त्वयि कदाचित्। सत्यं स देहभिदया विकृतस्स्यात्त्वं हि दलिततद्धन्वा॥ १६६१ ॥

हे रघुवीर! महादेवः मृत्युंजयः त्वयि विषये कदाचित् महाहवः प्रवर्तितप्रबलरणो यदि सः महादेवः देहस्य शरीरस्य भिदया

त्वच्छरकृतविदारणेन विकृतः स्यात् सत्यं नात्र संशयः। तत्र हेतुमाह—हि यस्मात् त्वं दलितं तस्य शंभोः धनुः धन्व वा येन स तथोक्तः। तस्मात् त्वया कृतमहारणोऽपि महादेवो देहविदारणेन विकृतस्स्यादेवेति भावः। पक्षे देहभिदया देकारस्य हकारेण भेदनेन विकृतस्स्यात्। महादेवशब्दः महाहवशब्दतया विकृतस्स्यादित्यर्थः। अत्र महादेवस्य रघुवीरविषयकमहाहवत्वसंभावनं तद्देहविदळनप्रयोज्यविकारवत्त्वसंभावनसाधनं हेतूपष्टम्भेन निबद्धम्॥

यथावा —

**भगवन्मुकुरः कुसृतेस्स्याच्चेत्त्वद्गण्डमण्डलजिगीषुः। शकलीभवेत्स नूनं त्वं मुरदलन इति स किल नाज्ञासीत्॥ १६६२॥**

हे भगवन्! मुकुरः कुसृतेः शाठ्यात् कुत्सितः सृतिः कुसृतिः कुमार्गः 'कुसृतिर्निकृतिश्शाठ्यम्' इति कपटपर्यायेष्वमरः। पक्षे कु इति वर्णस्य सृतेः अपसरणात् 'सृ गतौ' इत्यस्माद्धातोः क्तिन्। मुकुरो मुर इति निष्पन्न इति भावः। शब्दार्थयोस्तादात्म्यम्। त्वद्गण्डमण्डलजिगीषुस्स्याच्चेत् शकलीभवेत्। नूनं नात्र संदेग्धव्यमिति भावः। अथैवं मुरत्वं प्राप्तोऽपि मुकुरः मुरभिदस्तव विजिगीषायां कथं प्रवृत्त इत्यत आह—त्वमिति। सः मुकुरः त्वं मुरदलन इति नाज्ञासीत्किल। नाजानादिति संभावये इति भावः॥

यथावा—

**अविकुलमप्यविकलमिह मुख्येनाशेषपालकेन**

यदा। दृश्येत तदा सत्यं भवेत्कविकुलं विमृश्यता सम्यक् ॥ १६६३ ॥

अविकुलं मेषबृन्दमपि अत्र अविशब्दः अविसदृशे लाक्षणिकः। अतिमात्रमूर्खाणां समूहोऽपीत्यर्थः। मुख्येन अग्रिणेन अशेषपालकेन सर्वेश्वरेण भगवता अविकलं यथा स्यात्तथा यदा दृश्येत कटाक्षविषयीक्रियते। तदा कविकुलं काव्यकृद्विद्वद्बृन्दं भवे‍्‍त् सत्यं नात्र संदेहः। यदि संदेहः तर्हि सम्यग्विमृश्यताम्। भगवत्प्रभावाविमर्शे उक्तोऽर्थस्सम्यङ्ज्ञायत एवेति भावः। पक्षे अविकुलमिति पदं अविकलं अकारेण विकलं सत् मुख्येनेति वक्ष्यमाणत्वादाद्येनाकारेणेति लभ्यते। हे अशेषपाल सर्वेश्वर भगवन् मुख्येन आद्येन केन कवर्णेन यदा दृश्यते व्याविताकारेण आद्यकवर्णेन घटितं दृश्यतेचेत् तदा कविकुलमित्येव भवेदित्यर्थः। अत्राविकुलस्य भगवत्कटाक्षगोचरत्वतर्कणं कविकुलत्वतर्कणसाधनमित्यादिकं द्रष्टव्यम् ॥

यथावा—

तुलनायालं वचसस्स्वं तव यदि नाम कोकिलोऽवेयात्। किं छिन्नमस्य जानन्कोलं तं जननि बुद्धिमान् ब्रूयात् ॥ १६६४ ॥

हे जननि! कोकिलः तव वचसः तुलनाय साम्याय स्वं आत्मानं अलं समर्थं यदिनाम अवेयात् जानीयात् 'नमस्स्वस्ति' इत्यादिना चतुर्थी। अस्य अतिश्राव्यतया प्रत्यक्षस्य तव वचसः किं छिन्नं किं न्यूनं भवेत्। कोकिलस्य स्वरं तथा समर्थमन्यत्वे

त्वद्वचसोऽप्रतिद्वन्द्विरामणीयकस्य का हानिर्भवेदिति विदन्निति भावः। कः बुद्धिमान् तं कोकिलं अलं त्वद्वचनतुलापर्याप्तं ब्रूयात्। किंच तं कोलं सूकरं ब्रूयादित्यप्यर्थः। स्वपरगुणतारतम्यविमर्शनाकुशलो यदि कश्चिदपकृष्टं स्वमुत्कृष्टसधर्माणं जानीयात् तं निपुणमतिस्स्थूलमतिं सूकरसदृशमेव मन्येतेति भावः॥

पक्षे अस्य कोकिलस्य किं कीतिवर्णं छिन्नं निरस्तं जानन्नित्यर्थः। शब्दार्थयोस्तादात्म्यम्। बुद्धिमान् तं कोकिलं कोलं ब्रूयात् कोकिलशब्दस्य किवर्णलोपे कोल इति निष्पत्तेरिति भावः। अत्र यदिनामेत्याद्यूहनं कोलं तमित्याद्यूहंप्रति साधनम्। चमत्कारातिशयस्तु व्यक्त एव॥

यथावा—

**तव चरणारुणलक्ष्मीं हृत्वाऽपि यदार्यमेव मनुते स्वम्। सूर्यकरस्तर्हि भवेत्सूकर एवाम्ब तत्र को विशयः॥ १६६५॥**

आर्यं पूज्यमेव। पक्षे अर्यं अविद्यमानर्यवर्णमित्यर्थः। अत्र चौर्यकर्तुरपि सूर्यकरस्यार्यताज्ञानसंभावनं तस्य सूकरतासंभावनसाधनमिति लक्षणानुगतिः॥

यथावा—

**यदि तव वाग्रसमीप्सेत्स्वादिमविधुरोऽरसत्वभाङ्मकरन्दः। मालक्ष्योऽग्रे माधव विन्दतु माकन्दतामियात्सफलत्वम्॥ १६६६॥**

हे माधव! इदं वक्ष्यमाणार्थोपस्कारकम्। स्वादिम्ना स्वादुतया रहितः तत्र हेतुः—अरसत्त्वभागिति। अविद्यमानः रसः

मधुराद्युत्तमरसः यस्य स तथोक्तः। तस्य भावः तत्त्वं केनापि श्लाघ्येन विधुरतया अभोग्य इति भावः॥

रसस्स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे।
भोगे रोगे देहधातौ तिक्तादौ पारदेऽपि च॥

इति हेमः। मकरन्दः उक्तिविशेषणमाहिम्ना क्षुद्रतमयत्किंचित्पुष्परस इति लक्ष्यते। त्वद्वाचः रसं आस्वादं ईप्सेद्यदि अग्रे उत्तरस्मिन् काले मालक्ष्यः यादृच्छिकादिसुकृतपरिपाकवशेन लक्ष्मीकटाक्षविषयस्सन् माकन्दतां सहकारफलतां 'माकन्दस्सहकारेऽपि' इति हेममेदिन्यौ। मां श्रियं कन्दति आह्वयति स्वरक्षणार्थमिति माकन्दः। तत्तां लक्ष्मीशिशुतामिति च गम्यते। कदिधातोराह्वानार्थकात्कर्मण्यण्। विन्दतु। तदा सफलत्वं स्वाभीप्सितत्वद्वाग्रसरूपफलसहितत्वं तद्वाक्त्वमित्यर्थः। इयात्। ईदृशमाकन्दजन्मपरिग्रहे सत्येव माधवस्य तव वाग्रसं विन्देत। न तूक्तमकरन्दरूपेण स्वात्मनेति भावः। पक्षे स्वस्य आदिः आद्यः यः मः मकारः तद्विधुरः। सतो भावः सत्त्वं रस्य सत्त्वं रसत्त्वं तद्भजतीति रसत्त्वभाक्। स न भवतीत्यरसत्त्वभाक्। मकाररेफशून्य इति विशेषणद्वयाभिप्रायः। मकरन्दः मकरन्दशब्दः कन्द इति निष्पन्नस्सन्निति भावः। अग्रे आदौ माः मावर्णः तेन लक्ष्यः दृश्यस्सन्। माकन्द इति निष्पन्नः। सः फलत्वं इति छेदः। सः माकन्दशब्दः फलतां फलवाचकतामिति यावत्। इयात्। अत्र मकरन्दस्य माकन्दत्वसंभावनं भगवद्वाग्रसलाभरूपफलवत्तासंभावनस्य साधनम्। शब्दार्थतादात्म्यभित्तिकश्लेषमूलकाभेदाध्यवसायोज्जीवितमिति ध्येयम्॥

इत्यलंकारमणिहारे संभावनसरः षट्षष्टितमः.

---

## अथ मिथ्याध्यवसितिसरः (६७)

---

मिथ्यार्थोऽन्यः कल्पते चेत्किंचिन्मिथ्यात्वसिद्धये। मिथ्याध्यवसितिर्नाम साऽलंकृतिरुदाहृता ॥

कस्यचिदर्थस्य मिथ्यात्वसिद्ध्यर्थं मिथ्याभूतार्थान्तरकल्पनं मिथ्याध्यवसितिर्नामालंकारः ॥

यथावा—

गणनातिशायिघृणिना पयोजसुहृदा त्रयोदशेन शुचीनाम्। सन्तमसं हन्त हृदभ्यन्तरगं त्वज्जुषां निरासि मुरारे ॥ १६६७ ॥

हे मुरारे! गणनातिशायिनो घृणयः किरणाः यस्य तेन तथोक्तेन त्रयोदशेन पयोजसुहृदा सहस्रमात्रसंख्याककिरणतया द्वादशात्मतया च प्रथिताद्भास्वतोऽन्येन भास्करेणेत्यर्थः। त्वज्जुषां त्वयि प्रीतिरूपापन्नध्यानभाजां न्यासविद्यया त्वां सेवमानानां वा 'जुषी प्रीतिसेवनयोः' इत्यस्मात्क्विप्। शुचीनां 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इत्याद्युक्तसर्वप्रकारविशुद्धिभाजामित्यर्थः। अग्नीनामित्यप्युपस्कार्यम्। हृदभ्यन्तरगं अन्तरं संतमसं तमोगुणरूपं महातिमिरं निरासि निरस्यत। अत्र भगवत्प्रपन्नशुचिहृत्तमसोऽत्यन्तासंभावितस्य निष्पत्तये त्रयोदशभास्करकर्तृकनिरासोऽत्यन्तासंभावितो निबद्धः। इदं श्लेषसंकीर्णम् ॥

यथावा—

अतसी परिभूता तव रुच्या तप्त्वा वनेष्वध-स्शीर्षम् । अन्ते संधेरसीता स्याच्चेत्त्वद्रुचिमियाद्रघुकुलेन्दो ॥ १६६८ ॥

हे रघुकुलेन्दो ! इदं विवक्षितार्थोपस्काराय । अतसी क्षुमाकुसुमं 'पुष्पमूलेषु बहुलम्' इति लुक् । तव रुच्या त्विषा परिभूता सती वनेषु अधश्शीर्षं तप्त्वा । पक्षे वैपरीत्येन स्थित्वेत्यर्थः । अन्ते पर्यवसाने संधेः बलवद्विरोधोऽनुचित इति संधिं कृत्वेत्यर्थः । पक्षे संहितात्वविवक्षाया इति यावत् । सीता स्याच्चेत् जानकीत्वं प्राप्नुयाच्चेत् त्वद्रुचिं तव द्युतिं त्वय्यनुरागं च इयात्, अन्यथा तस्यास्त्वद्रुचिर्न सुलभेति भावः । पक्षे अतसीशब्दव्यक्तिः वैपरीत्येनावस्थिताचेत् सीत अ इति स्यात्, ततस्तकाराकारयोस्सवर्णदीर्घरूपस्संधिश्चेत् सीता इति निष्पद्येत । स एव दुर्घटः 'अतो गुणे' इति पररूपलक्षणैकादेशे सवर्णदीर्घाप्रवृत्तेः । तथाच सीत इत्यदन्त एवायं शब्दो भवेत् । न तु सीतेति दीर्घान्त इति भावः । अत्रातस्याः श्रीरघुनन्दनरुचिप्राप्तेरतिवेलासंभावितस्य निर्वृत्त्यर्थं तस्यास्सीतात्वप्राप्तिरूपातिवेलासंभावितत्वकल्पनम् । श्लेषचमत्कारान्तरादिकं व्यक्तमेव ॥

यथावा—

अष्टमजलधौ जनितप्रष्ठो निर्जरतरुर्वृषाद्रिमणे । त्वत्तोऽपि वदान्य इति स्रष्टा षष्ठेन वदति वदनेन ॥ १६६९ ॥

इदं शुद्धमुदाहरणम् । एवं प्रौढोक्त्यलंकारनिरूपणे प्रसङ्गादुपदर्शितं 'एकोनविंशसंख्यकपुराणतः' इति पद्यमपि शुद्धमेवास्या उदाहरणम् ॥

चन्द्रालोके तृतीये काव्यलक्षणमयूखे काव्यलक्षणत्वेन यानि अक्षरसंहतिशोभाभिमानहेतुप्रतिषेधनिरुक्तिमिथ्याध्यवसायसिद्धियुक्तिकार्याणि दश निरूपितानि; तानि कुवलयानन्दे चमत्कारितयाऽलंकारपदे निवेशितानि दीक्षितैः । तेष्वेकतमेयं मिथ्याध्यवसितिरिति ध्येयम् । तत्रैतल्लक्षणं लक्ष्यं चैवं दृश्यते—

स्यान्मिथ्याध्यवसायश्चेदसती साध्यसाधने ।
चन्द्रांशु सूत्रग्रथितां नभःपुष्पस्रजं वह ॥

इति । वक्तव्यान्तरं तत्तदवसरे स्फुटीभविष्यति ॥

इत्यलंकारमणिहारे मिथ्याध्यवसितिसरस्सप्तषष्टितमः.

---

## अथ ललितालंकारसरः (६८)

**धर्मिणि प्रस्तुते वर्ण्यवृत्तान्तोल्लेखनं विना ।**
**तत्र तत्प्रतिबिम्बस्य वर्णनं ललितं मतम् ॥**

प्रस्तुतधर्मिणि प्रस्तुतव्यवहारानुल्लेखेन तत्रैव निरूप्यमाणः प्रकृतव्यवहारसंबन्धो ललितालंकारः । 'दोर्भ्यामब्धिं तितीर्षन्तस्तुष्टुवुस्ते गुणार्णवम' इत्यादिनिदर्शनावारणाय तृतीयान्तम् । अप्रस्तुतप्रशंसावारणाय प्रस्तुतधर्मिणीति ॥

यथावा—

काहं भवमरुपान्थः क्व च तव सायुज्यनित्य-
साम्राज्यम् । इत एवाच्युत सहसा सुमेरुशृङ्गाग्र-
मभवमुत्पित्सुः ॥ १६७० ॥

अत्र भवमरुपान्थ एव सन्नहं दुरासदत्वदीयनित्यसाम्राज्यप्रेप्सुरस्मीति प्रस्तुतव्यवहारं विषयं कण्ठरवेणाप्रतिपाद्यैव तत्प्रतिबिम्बभूतः दुरारोहं सुमेरुशृङ्गाग्रभित एकोत्पातेनैवाधिष्ठातुमिच्छामीति विषय्युपनिबद्धः । विषयोपादाने तु निदर्शनैव ॥

यथावा—

माहङ्मितवचनः क्व त्वाहङ्निगमागणेयसु-
गुणः क्व । भूमिष्ठ एव कल्पकसुमनिचयं निखि-
लमपचिचीषामि ॥ १६७१ ॥

अत्रापि मितंपचमतिरहं निगमापरिच्छेद्यभगवदनन्तकल्याणगुणविवक्षुरस्मीति विषयमकथयित्वैव भूमिष्ठ एव सकलकल्पतरुकुसुमान्यपचिचीषामीति विषय्येव निबद्धः ॥

यथावा—

यद्यपि नाहं पात्रं हृद्यतमाया हरे तव कृपा-
याः । उन्मर्यादि उदन्वानुत्सर्पति चेदमुं निरु-
न्ध्यात्कः ॥ १६७२ ॥

अत्रापि त्वं नीचेऽपि मयि निरर्गळकृपाप्रसरश्चेदपर्यनुयोज्यस्वातन्त्र्यवैभवं त्वां को नाम निरोद्धुमीष्टामिति बिम्बभूतवा-

क्यार्थानुल्लेखेन उन्मर्याद इत्यादिप्रतिबिम्बवाक्यार्थ एवोपन्यस्तः ॥

यथावा—

**महतां सतां कुले मां विहितकृपस्त्वं व्यजीजनश्शौरे । निबुसीकार्यं धान्यं निबिडे वातेऽनुवात्येव ॥ १६७३ ॥**

निबिडे सान्द्रे वातेऽनुवात्येव अनुकूलतया वहमान एव धान्यं तुषाविविक्तमिति भावः । निबुसीकार्यं निस्तुषीकार्यं 'कडंगरो बुसं क्लीबे धान्यत्वचि तुषः पुमान्' इत्यमरः । निर्गतं बुसं यस्य तन्निबुसम् । अत्र याद‍ृच्छिकादिसुकृतवशात्सत्कुलप्रसवावसर एव परमपुरुषार्थस्साधनीय इति विषयवाक्यार्थमप्रतिपाद्य तत्प्रतिबिम्बवाक्यार्थमात्रमुल्लिखितम् ॥

यथावा—

**श्रुतिपठिती वा भवतु स्मृतिपठिती वा हरिं न विन्देद्यः । न हि कुक्कुरस्य रटतो भेदस्स्यात्कुक्कुटस्यापि ॥ १६७४ ॥**

यः हरिं न विन्देत् सः श्रुतिपठिती स्मृतिपठिती वा भवतु; उभयत्रापि पठितमनेनेति विग्रहे इष्टादिभ्यश्चेति कर्तरि इनिः तद्योगे श्रुतिस्मृतिशब्दयोः 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति कर्मणि सप्तमी । ततस्सप्तमीसमासः, त्रयीं धर्मशास्त्रं वा पठितवान् स्यादित्यर्थः । कुक्कुरस्य शुनः कुक्कुटस्य च रटतः श्रुतिकटु ध्वनतः भेदो न हि स्यात् । उभयोरपि नैरर्थक्यस्य तौल्यादिति भावः । पक्षे कुक्कुर कुक्कुटशब्दयोः, रटतो भेद इत्यत्र अभेद इति छेदः ।

रटाभ्याममेदो न किंतु भेद एवेत्यर्थः। अत्र भगवद्भजनहीनश्रुति स्मृतिपठनं निरर्थकमिति वर्ण्यमनुक्त्वा तत्प्रतिबिम्बमेव निबद्धम्।

यथावा—

**केऽपि भजन्ते त्वदितरमितरे त्वामेव देव सेवन्ते। काकाः काका एव ह्यधरितशिरसोऽपि किं नु हंसास्स्युः॥ १६७५॥**

काकाः वायसाः अधरितशिरसोऽपि। पक्षे काका इति शब्दः विपरीतोऽपीत्यर्थः। अत्र देवतान्तरं भजतां महतापि प्रयासेन भगवद्भक्तजनसाधर्म्यं न घटत इति विषयवाक्यार्थमप्रदर्श्य तत्प्रतिबिम्बवाक्यार्थ एव वर्णितः चमत्कारान्तरं तूदाहरणद्वयेऽपि व्यक्तमेव॥

न चात्र सर्वत्रापि भेदेऽप्यमेद इत्यतिशयोक्त्या चारितार्थ्यमिति वाच्यम्। तत्र हि पदार्थेन पदार्थस्यैवाभेदाध्यवसानम्' 'कनकलतायां विराजते चन्द्रः' इत्यादौ दृष्टम्, न तु व्यवहारेण व्यवहारस्येत्यविषय एवायमतिशयोक्तेः। नापि सादृश्यमूलया अप्रस्तुतप्रशंसया, धर्म्यंशे प्रस्तुतत्वविरहात्। नापि निदर्शनया, एकधर्मिगतव्यवहारद्वयोपादान एव तस्या इष्टेः। प्रकृते च प्रकृतव्यवहारस्यानुपात्तत्वादलंकारान्तरमेव। एवंच—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥

इत्यत्र काव्यप्रकाशिकाकारो यन्निदर्शनामुदाहार्षीत् तदसंगतमेव, ललितस्यावश्याभ्युपगम्यत्वात्। निदर्शनाया अप्राप्तेश्च। तदेवं ललितस्यालंकारान्तरत्वमुररीकुर्वतामाशयः॥

अन्ये तु—ललितं नालंकारान्तरं, निदर्शनयैव गतार्थत्वात्। नन्वेकधर्मिगतप्रस्तुताप्रस्तुतव्यवहारद्वयोपादानजीविता निदर्शना कथमप्रस्तुतव्यवहारमात्रोपादाने पदं निधत्तामिति चेत्, श्रूयतामायुष्मता—इह तावदलंकाराः प्रायेण श्रौता आर्थाश्च संभवन्ति। तत्र श्रौतेभ्य आर्था न पृथगलंकारतया संख्यायन्ते किंतु पृथग्भेदतया। तदलंकारसामान्यलक्षणेन क्रोडीकरणात्। इदं पुनर्वाक्यार्थनिदर्शनास्वरूपम्—व्यवहारद्वयवद्धर्म्यभेदप्रतिपादनाक्षिप्तो व्यवहारद्वयाभेदः। तत्र व्यवहारद्वयवद्धर्म्यभेदप्रतिपादनं श्रौतमेवापेक्षितमिति न नियमः। किंतु प्रतिपादनमात्रम्। तेन 'परवित्तं हरन् मर्त्यो विषमेवात्त्यसंशयम्' इत्यत्र व्यवहारद्वयवद्धर्मिणोरभेदस्य श्रुत्या प्रतिपादन इव 'धिक्परस्वं तथाऽप्येष विषमत्ति स दुर्मतिः' इत्यत्र आर्थप्रकृतव्यवहारवद्धर्मिश्रौताप्रकृतव्यहारवद्धर्मिणोरार्थाभेदस्य प्रतिपादनेऽपि वाक्यार्थनिदर्शनात्वमक्षतम्। एकत्र श्रौतीत्वं अपरत्रार्थीत्वमिति तु विशेषो न वार्यते। पदार्थनिदर्शनास्वरूपं तूपमानोपमेयधर्मयोरभेदाध्यवसायमूल उपमेयोपमानधर्मसंबन्ध इति पृथगेव। एतदुभयान्यतरत्वं च प्राचीनरीत्या सामान्यलक्षणम्। यदि तु ललितं पृथगलंकारस्स्यात् लुप्तोपमादिरप्युपमादेः पृथक् स्यात्, त्वदुक्तयुक्तेस्तुल्यत्वात्। नन्वतिशयोक्तिरेवं सति रूपक एव विलीयेत। विषयविषयिणोर्द्वयोरप्युपादाने श्रौतं रूपकं, विषयमात्रोपादाने त्वार्थमित्यस्यापि सुवचत्वात्, सत्यं, यत्र ह्यलंकारशरीरमुभयत्राप्यविलक्षणं तत्रैवालंकारव्यपदेशो युक्तः। यथा सादृश्यं निष्पाद्यमानमुपमाशरीरं लुप्तोपमादिष्वविलक्षणमेवेति तत्राप्युपमयैव व्यपदेशो न्याय्यः। नालंकारान्तरेण। लुप्तत्वपूर्णत्वादिस्तु न तच्छरीरनिविष्ट इति स्वयं व्यावर्तमानोऽपि नोपमात्वव्याव-

र्तकः। तथाऽन्यत्रापीति स्थितिः । एवंच विषयतावच्छेदकरूपेण भाते विषये विषयितावच्छेदकावच्छिन्नाभेदस्य रूपकशरीरस्य विषयतावच्छेदकरूपेणाभासमानविषयात्मकादतिशयोक्तिस्वरूपाद्विलक्षणत्वेन द्वयोरेकालंकारत्वं न युक्तम् । निदर्शनाललितयोस्तु स्वरूपावैलक्षण्यं प्रदर्शितमेवेत्येकालंकारत्वमेवेत्याहुः ॥

इत्यलंकारमणिहारे ललितालंकारसरोऽष्टषष्टितमः.

## अथ प्रहर्षणालंकारसरः (६९)

विना यत्नादभीष्टार्थसिद्धिस्स्याच्चेत्प्रहर्षणम् ॥

अभीष्टार्थस्य तदुपायसंपादनयत्नेन विना सिद्धिः प्रहर्षणं नामालंकारः ॥

यथावा—

कृष्णाऽऽश्लेषरसायनमाध्यायन्ती गृहक्रियाव्यग्रा । त्वरिता स्खलिता च हठादुद्धरता तेन गोपिकाऽऽश्लिष्टा ॥ १६७६ ॥

आध्यायन्ती उत्कण्ठापूर्वकमाशासाना, गृहक्रियायां व्यग्रा अत एव त्वरिता शीघ्रं संचरन्ती अत एव स्खलिता स्खलितपदा च गोपिका हठात् अकस्मात् उद्धरता तेन कृष्णेन आश्लिष्टा। अत्र यत्नसामान्यशून्याया अपि गोपिकाया अभीष्टसिद्धिः ॥

अभीप्सितार्थादधिकलाभश्चापि प्रहर्षणम् ॥

इच्छाविषयभूतादर्थादधिकार्थस्य तद्योग्यत्वं विनैव सिद्धिर्द्वितीयं प्रहर्षणम् ॥

यथा—

**दृष्टा चेन्नन्दभुवा हृष्टा स्यामिति चिरादभिलषन्ती । लेभे गोपकिशोरी रहसि तदीयाङ्कपालिसर्वस्वम् ॥ १६७७ ॥**

अत्र भगवत्कर्तृकात्मकर्मकदर्शनमात्रेण स्वहर्षं संभावयमानाया गोपकिशोर्यास्ततोऽप्यतिवेलातिशायिपरिरम्भसर्वस्वसाम्राज्यरूपाधिकार्थलाभः ॥

यथावा—

**संसारचारजनितां संसादयितुं विहस्ततां ये त्वाम् । श्रीनाथाकलयन्ते ते नाम कृतास्त्वया चतुर्हस्ताः ॥ १६७८ ॥**

विहस्ततां विक्लवतां 'विहस्तव्याकुलौ समौ' इत्यमरः । पक्षे विगतौ हस्तौ यस्य सः विहस्तः तस्य भावम् । यथाकथंचिद्धस्तवत्तासंपादनाय भगवन्तमुपासीनानां जनानां चतुर्हस्ततावाप्तिरूपाधिकार्थलाभो विहस्तशब्दगतश्लेषनिर्व्यूढ इति पूर्वस्माद्विशेषः ॥

यथावा—

**त्वदनुग्रहात्तनीयश्श्रीर्वा स्यामित्युपेत्य शौरे त्वाम् । बत बहुतपनीयश्श्रीरभूत्तव सखा ततस्त्वयाऽपचितः ॥ १६७९ ॥**

हे शौरे! तव सखाकुचेल इति भावः । त्वदनुग्रहात् तनीयश्श्रीर्वा स्याम् 'यावद्भ्रियेत जठरम्' इत्याद्युक्तरीत्या अल्पतरसंपन्ना स्यां न तु तदतिशयलिप्सुरिति भावः। इति त्वामुपेत्य ततः अनन्तरं त्वया अपचितः पूजितस्सन् 'पूजा नमस्याऽपचितिः' इत्यमरः। बह्वी तपनीयश्रीः सुवर्णसंपत् यस्य स तथोक्तः अभूत्। बतेति विस्मये हर्षे वा। किंच अल्पतरतेजा अपि वा भवेयमित्यभिलषमाणः बहुतपनीयश्श्रीः अतिशयितभानुसंबन्धिश्रीरभूदित्यर्थोऽप्युपस्कार्यः। पक्षे तनीयश्श्रीशब्दः त्वया ततः तकारादनन्तरमिति यावत्। पचित इति च्छेदः। पकारेण चितः घटितस्सन्। बहु इति भिन्नं पदम्। बहु यथा स्यात्तथा प्राग्विद्यमानवर्णापेक्षयाऽधिकैकवर्णतयेति भावः। तपनीयश्रीरिति शब्दोऽभूत्। अत्र कुचेलस्यापेक्षितादधिकार्थलाभो वर्णितः॥

**भूवासवत्वमीप्सोस्त्वद्द्विजयात्कोसलेन्द्र विद्विषतः। स्ववासवत्वमददा भवतः किं ब्रूमहे महौदार्यम्॥ १६८०॥**

भूवासवत्वं भूदेवेन्द्रत्वं, स्वः स्वर्गे वासवत्वं महेन्द्रत्वं वासोऽस्यास्तीति वासवान् तस्य भावं च। अददाः सर्वानरातीन् संहृतवानिति वस्तुस्थितिः। अत्रापि पूर्ववदेव॥

यथावा—

**जगतां जननि भवत्यास्तौल्यं प्रेप्सुः कचश्रियामेकः। तप्त्वाऽधःकृतशीर्षं कथमपि लभते स्म मेचकः कचताम्॥ १६८१॥**

हे जगतां जननि ! मेचकः चन्द्रकः अन्धकारो वा 'मेचकश्श्यामले कृष्णे तिमिरे बर्हिचन्द्रके' इति हेमः। भवत्याः कचश्रियां केशभासां तौल्यं प्रेप्सुः; अत एव एकस्सन् अधःकृतशीर्षं तप्त्वा 'एकस्तपांसि कुर्वीत' इत्युक्तेर्विविक्ते एक एव तपस्तप्त्वेति भावः। कथमपि भवत्याः कचतां लभते स्म। पक्षे मेचकशब्दः कचश्रिया अमेक इति छेदः। भवत्याः कचश्रिया सह तौल्यं प्रेप्सुः; अविद्यमानो मे इति वर्णो यस्य स तथोक्तः, 'शेषाद्विभाषा' इति कप्। मेवर्णरहितः चक इत्यवशिष्ट इति भावः। ततः विलोमतां प्रपन्नः कचशब्दतां लभते स्मेत्यर्थः। अत्र मेचकस्य वाञ्छितश्रीकचतौल्यापेक्षया अधिकस्य तत्कचत्वस्य लाभो वर्णितः। श्लेषादिचमत्कृतिविशेषस्तु पूर्ववदेव ॥

यथावा —

**यावन्मृगयति कामपि मरुपान्थश्श्रान्तिशान्तये छायाम्। तावदकस्माद्ग्रैष्मं पिदधे चण्डांशुबिम्बमम्बुमुचा ॥ १६८२ ॥**

मरुपान्थ इत्यनेन सर्वदा छायादौर्लभ्यं सूच्यते। कामपि छायामित्यनेन शाकोटकाद्यतिक्षुद्रतरुप्रविरलच्छायामित्युक्तम्। अत्राप्रस्तुतमरुपान्थकर्तृकयत्किञ्चिच्छायान्वेषणाकस्मिकमहाजलधरकर्तृकग्रैष्मचण्डांशुबिम्बपिधानप्रशंसा यावदेव भवपथगतागतखेदशमनकृते यंकंचिच्छरणं पर्यालोचयति चेतनस्तावदेव याहच्छिकप्रासङ्गिकादिसुकृतवशात्प्रत्यक्षतामुपगतवता भगवता तत्तापशान्तिर्विधीयतेति प्रस्तुतेऽर्थे पर्यवस्यतीत्यप्रस्तुतप्रशंसारू-

पेऽत्र वाक्यार्थे अभीप्सितार्थादधिकार्थलाभः स्पष्ट एव। अय-
मेव हि पूर्वेभ्यो विशेषो यदप्रस्तुतप्रशंसासंकीर्णत्वम् ॥

उपायसिद्धये यत्ने क्रियमाणे यदृच्छया।
साक्षात्फलस्य लाभोऽपि प्रहर्षणमितीरितम् ॥

फलानवाप्त्या तत्प्राप्तये तदुपायगोचरो यत्नो लोके प्रसिद्धः। तादृशयत्नादतर्कितत्फलस्यैव लाभो यत् सोऽपि प्रहर्षणमित्यर्थः। अयं तृतीयः प्रकारः ॥

यथावा—

त्वत्सेवनेन संपदमीप्सुस्त्वच्छिखरिसंमुखो म-
नुजः। तावत्पश्यति सिन्धुरबन्धुरमीश स्वम-
न्दिरालिन्दम् ॥ १६८३ ॥

हे ईशेति संबोधनम्। अत्र गजान्तैश्वर्यलाभोपायभूतभगवत्सेवनसिद्ध्यर्थाच्छैलाचलाभिमुखप्रस्थानात् स्वमन्दिरालिन्द एव तादृशैश्वर्यलाभ इति तृतीयं प्रहर्षणम्। इदं च कार्यकारणपौर्वापर्यव्यतिक्रमरूपातिशयोक्त्युत्तम्भितम् ॥

यथावा—

यमुनातीरनिकुञ्जं कृष्णवशीकारमूलविचिची-
षुः। प्राप्य हठात्तत्रागतममुमेव वशीचकार गोप-
वधूः ॥ १६८४ ॥

अत्र भगवद्वशीकरणोपायभूतमूलिकार्थाद्यमुनातीरनिकुञ्जगमनात्तत्रैव भगवद्वशीकारलाभः। एवं च साक्षात्तदुद्देश्यकयत्नमं-

तरेणाप्यभीष्टार्थलाभः प्रहर्षणमिति प्रहर्षणत्रितयसाधारणं सामान्यलक्षणमिति ध्येयम् ॥

चन्द्रालोके तु 'वाञ्छितार्थाधिकप्राप्तिरयत्नेन प्रहर्षणम्' इति द्वितीयप्रभेद एव लक्षितः । न तु प्रथमतृतीयौ । अन्ये तु—प्रथमप्रहर्षणोदाहरणे इष्टार्थानुकूलप्रयत्नाभावेऽपीष्टप्राप्तिवर्णनेन न प्रहर्षणालंकारोऽभ्युपेयः, प्रयत्नस्य कार्यमात्रं प्रति कारणतया इष्टार्थतदुपायगोचरप्रयत्नाभावेऽपीष्टार्थसिद्ध्या कारणं विना कार्योत्पत्तिरूपविभावनाया एव विषयत्वात् । अतः प्रहर्षणस्य भेदद्वयमेवेति । इयांस्तु विशेषः—यत्तत्र कारणाभावश्शाब्दः इह त्वार्थ इत्याहुः ॥

इत्यलंकारमणिहारे प्रहर्षणसर एकोनसप्ततितमः.

## अथ विषादनालंकारसरः (७०)

### यदभीष्टविरुद्धार्थलाभस्तत्स्याद्विषादनम् ॥

अस्य च अभीष्टार्थलाभार्थं कारणप्रयोगो यत्र न कृतः केवलमिच्छैव कृता जातश्च विरुद्धार्थलाभः सः; यत्र च इष्टार्थे प्रयुक्तेऽपि कारणे तस्मान्न विरुद्धार्थलाभः; अपितु स्वकारणवशात् स च विविक्तो विषयः । यत्र तु इष्टार्थं प्रयुक्तात्कारणादेव विरुद्धार्थलाभः तत्र तादृशकारणविरुद्धार्थयोरुत्पाद्योत्पादकभावलक्षणसंसर्गस्याननुरूपत्वाद्विषमम् । इष्यमाणविरुद्धार्थलाभाच्च विषादनमिति संकीर्णतैव । एवं चास्य न विषमभेदैर्गतार्थतेति

मन्तव्यम् । विषमासंस्पृष्टस्याप्येतद्विषयस्यानुपदमेव दर्शयिष्यमाणत्वात् ॥

यथावा -

**भात्येवमेव भानुर्भार्यासुखमेवमेव विन्देयम् ।**
**ध्यायत्येवं कोके सायं हन्ताम्बुधौ ममज्ज रविः ॥**

अत्र हि नास्ति विषमप्रभेदस्य विषयः, इष्टार्थं कारणप्रयोगाभावात्, इष्टार्थप्रयुक्तकारणेन सह विरुद्धार्थस्य उत्पाद्योत्पादकभावलक्षणसंसर्गस्याननुरूपत्वं हि तच्छरीरम् । तस्माद्विषादनमेवात्राप्रस्तुतप्रशंसाघटकतयाऽवस्थितम् । अत्र ह्यप्रस्तुतश्चक्रवाकवृत्तान्तः अतिमात्रानित्यमैहिकविभवं नित्यतमं प्रत्येत्य शाश्वततमनिश्श्रेयससाम्राज्यसाधनोपेक्षया समयमतिवाहयति तावदेव प्राप्ततादृशविभवभ्रंशे कस्मिंश्चिद्धन्ये पर्यवस्यतीत्यप्रस्तुतप्रशंसा॥

यथावा—

**कृतमेतदिदं कार्यं कृताकृतमिदं सुखाय भविता नः । इति विमृशन्नेव जनस्त्वद्विमुखो हन्त मृत्युना ह्रियते ॥ १६८६ ॥**

अत्राभीष्टसुखविरूद्धमृत्युहरणरूपार्थलाभः । अत्र—

इदं कृतमिदं सज्जमिदमन्यत्कृताकृतम् ।
एवमीहासमायुक्तं मृत्युरादाय गच्छति ॥

इति महाभारतवचनार्थोऽनुसंहितः ॥

द्वितीयप्रकारो यथा—

**उपगूहति नन्दसुते त्रपया पिहिताननाऽपि**

गोपवधूः। श्लथबन्धकञ्चुळीका हर्षोच्छूनस्तनद्वयतयाऽऽसीत् ॥ १६८७ ॥

अत्राभीष्टस्याननपिधानस्य विरुद्धोऽर्थः कञ्चुळिकाबन्धशैथिल्यं कारणभूतत्रपाप्रत्यनीकत्वात्, तच्च हर्षोच्छूनस्तनद्वयतारूपस्वकारणादेवोत्पन्नं न तु पिधानानुकूलयत्नात्। नापीष्टसाधनत्वेन प्रयुक्तात्कारणादिष्टानुत्पत्तिरत्रास्ति, आननपिधानरूपस्येष्टस्योत्पत्तेः। अतो विषादनमेवात्र, न विषमम्। अयमप्यलंकारो दीक्षितोपज्ञमेव ॥

इत्यलंकारमणिहारे विषादनसरस्सप्ततितमः.

## अथोल्लासालंकारसरः (७१)

यदन्यगुणदोषाभ्यामन्यस्य गुणदोषयोः।
आधानं वर्ण्यते प्राहुरुल्लासालंकृतिं तु ताम् ॥

तच्च गुणेन गुणस्य दोषेण दोषस्य गुणेन दोषस्य दोषेण गुणस्य वेति चतुर्धा। क्रमेणोदाहरणानि—

अपि मयि पतेदपाङ्गः कृपया शिशिरोऽम्बुजाक्षभक्तिजुषाम्। अपि धन्यस्स्यामहमिति स पितामह एव वाञ्छति किमन्यः॥ १६८८ ॥

अत्र श्रीनिवासभक्तिरूपभागवतगुणेन तदपाङ्गसङ्गात्पितामहादीनामपि धन्यत्वगुणाधानम्। आधानं च तद्वत्ताबुद्धिः॥

यथावा—

त्वत्कृपयाऽपरिभाव्यो लोकस्याग्रत उदारिताकारः । सर्वस्योपरिभाव्यो वर्वर्ति त्वत्पदाश्रितो भगवन् ॥ १६८९ ॥

लोकस्य अपरिभाव्यः अतिरस्कार्यः अग्रतः उदारितः उदारीकृतः आकारः यस्य सः उवर्णेन दारितः भिन्नः अकारो यस्य सः तथोक्तः इति च । सर्वस्य लोकस्य उपरि भाव्यः श्रेष्ठतया माननीयस्सन् वर्वर्ति । पक्षे अपरिभाव्यशब्दः आदौ अवर्णव्यावनेन तत्रैव उवर्णन्यासेन च उपरिभाव्य इति निष्पद्यत इत्यर्थः । अत्र भगवत्कृपारूपगुणेन तत्पदाश्रितस्यापरिभाव्यादिगुणाधानम् । पूर्वं शुद्धं, इदं तु श्लेषसंकीर्णमिति विशेषः ॥

यथावा—

जलजन्तुकुले जातस्त्वद्दृष्टश्चेद्यदृच्छया जातु । हन्त कुलीरोऽपि नरो नेतस्स्यान्ननु कुलीन एव हरे ॥ १६९० ॥

हे नेतः! सर्वेश्वर । जलजन्तूनां जडजन्तूनां च कुले जातः कुलीरः कर्कटकोऽपि जातु यदा कदा वा यदृच्छया न त्वैदंपर्येण त्वया दृष्टश्चेत् यादृच्छिकादिसुकृतपरिणतिवशात् कटाक्षितश्चेदित्यर्थः । कुलीनः सद्वंश्य इत्यर्थः । 'महाकुलकुलीनार्यसभ्यसज्जनसाधवः' इत्यमरः । 'कुलात्खः' इति खः । नर एव मानुष एव स्यान्ननु भवेदेव । हन्तेति भगवत्कटाक्षप्रभावपरिचिन्तनजनितहर्षे । पक्षे कुलीरशब्दः नरः रेफरहितस्सन् नेतः तत्रैव नकारेण इतः संयुतश्चेत् कुलीन इति निष्पद्येतेत्यर्थोऽपि चम-

त्कारी। अत्रापि भगवत्कटाक्षप्रभावरूपगुणेन कुलीरस्यापि कुलीननरत्वरूपगुणाधानम्। श्लेषसंकीर्णत्वं चमत्कारविशेषश्च पूर्ववदेव। संभावनागर्भितत्वं तु विशेषः॥

यथावा—

**त्वत्तो बहुप्रसादस्सारहितत्वाद्बहुप्रदश्च पुमान्। चातुर्वर्ण्यश्लाघ्यो भवेत्स्वयं जननि दान्तिमत्त्वमयन्॥ १६११॥**

हे जननि! स्वयं दान्तिमतो भावः दान्तिमत्त्वं दान्ततां अयन् प्राप्नुवन्। पक्षे दकारः अन्तिमो यस्य तस्य भावं अयन् पुमान् पुरुषः इदं विशेषणं बहुप्रसाद इत्यस्य। त्वत्तः त्वदनुग्रहादिति यावत्। बहुप्रसादः त्वत्कृपाकृतबहुप्रसादविषयस्सन्नित्यर्थः। सारश्चासौ हितश्च सारहितः तस्य भावं सारहितत्वं तस्मात् अर्थिनामुत्तमहितत्वं प्राप्येत्यर्थः। ल्यब्लोपे पञ्चमी। यद्वा त्वत्तः त्वत्कटाक्षादिति यावत्। बहुः प्रसादः प्रसन्नता यस्य स तथोक्तः। अयं हि 'यद्दातुस्सौम्यता सेयं पूर्णेन्दोरकलङ्कता' इत्युक्तो दातुर्महान् गुणः, अत एव सारहितत्वात् उक्त एवार्थः। बहुप्रदः स्थूललक्षो भूत्वा। पक्षे बहुप्रसादशब्दः सारहितत्वं सावर्णराहित्यं प्राप्य बहुप्रद इति निष्पद्यत इत्यर्थः। अतएव चातुर्वर्ण्येन ब्राह्मणादिवर्णचतुष्टयेन श्लाघ्यो भवेत्। पक्षे पञ्चवर्णात्मको बहुप्रसादशब्दस्सावर्णराहित्ये चतुर्वर्णत्वेनैव श्लाघ्यो भवेदित्यर्थः। प्राथमिकार्थपक्षे चत्वारो वर्णाश्चातुर्वर्ण्यमिति विग्रहः 'चतुर्वर्णादीनां स्वार्थे' इति स्वार्थे ष्यञ्। द्वितीयस्मिन् पक्षे तु चत्वारो वर्णा यस्येति बहुव्रीहिः। ततः

'गुणवचनब्राह्मणादिभ्यश्च' इति भावे ष्यञ्। अत्र भगवत्प्रसाद-प्रभावगुणेन तद्भक्तस्य सारहितत्वादिगुणाधानम्। भगवत्कटाक्षप्रभावाद्बहुप्रसादत्वाद्याधानं वा॥

यथावा—

दुर्गतिवशात्पुमान्यो बहुप्रमादोऽपि तव दृशां विषयः। मानिततां प्राप्य भवेद्बहुप्रदस्स खलु कलशजलधिसुते॥ १६१२॥

हे कलशजलधिसुते! दुर्गतिवशात् दारिद्र्यवशात् बहु-प्रमादः बहुविपदपि। पक्षे बहुप्रमादशब्दो यः पुमान् तव दृशां कटाक्षाणां विषयः भवेत् स पुमान् पुरुषः पुल्लिङ्गो बहुप्रमाद-शब्दश्च मानिततां जगत्पूजिततां। पक्षे मावर्णेन अनिततां अयु-क्ततां च प्राप्य बहुप्रदः दानशौण्डः भवेत्खलु। पक्षे बहुप्रद इति निष्पद्येतेत्यर्थः। अत्र लक्ष्मीकटाक्षप्रसरगुणेन दुर्गतेरपि महो-दारतादिगुणाधानम्। एकस्मिन्नाधारे बहुप्रमादत्वबहुप्रदत्वरूपा-नेकाधेयवर्णनरूपपर्यायालंकारगर्भितत्वं विशेषः। श्लेषादिसंकी-र्णत्वं तु पूर्ववदेव॥

यथावा—

आदौ वैश्वानुगतोऽप्यग्र्यनरो यस्स्वभावतः कश्चित्। दृष्टः क्रमेण भवता वैश्वानर एव भवति को विशयः॥ १६१३॥

हे भगवन्! अग्र्यनरः अग्रजन्मा मनुजः ब्राह्मणः वै इति प्रसिद्धौ। आदौ श्वभिः अनुगतः श्वानुगतः "श्वक्रोडी श्येनजीवी

च' इत्याद्युक्तनिषिद्धाचारवान् भवन्नपि यःकश्चित् भवता क्रमेण यादृच्छिकादिसुकृतपरिपाकक्रमेण तद्वशादिति यावत्। दृष्टश्चेत् वैश्वानरः अग्निः तद्वच्छुचिस्तेजस्वी च भवति, पक्षे आदौ वैश्वा इति वर्णाभ्यामनुगतः अग्रयौ नरौ नकाररेफौ यस्य स तथोक्तः। यःकश्चिच्छब्दः क्रमेण उक्तवर्णानुपूर्व्येण दृष्टश्चेत् वैश्वानर एव भ ति नान्यशब्द इत्यर्थः। अत्रापि भगवन्महिमातिशयगुणेन तद्दृष्टिवशादशुचेरपि शुचित्वगुणाधानम्। एकस्मिन्नाधारे अशुचित्वशुचित्वरूपानेकाधेयवर्णनात्मकपर्यायेण संभावनेन च संकीर्णत्वं विशेषः॥

यथावा—

**अजहत्स्वामिन् प्रकृतिं सद्मान्तस्स्थानभाग्यतो**
**भवतः। अपि पक्षी पद्माक्षीभविष्यति ततः**
**किमत्र वक्तव्यम्॥ १६१४॥**

हे स्वामिन्! प्रकृतिं स्वस्वभावं अजहदेव स्वप्रकृत्यनुगुणं चेष्टमान एव न तूपासनादि कुर्वन्निति भावः। भगवतः सद्मनः दिव्यालयस्य अन्तः स्थानं स्थितिः तद्रूपं यत् भाग्यं भागधेयं तस्मात् सद्मान्तस्स्थानभाग्यतः सार्वविभक्तिकस्तसिः। पक्ष्यपि विहगोऽपि तिर्यग्जन्तुरपीति भावः। पद्माक्षो भगवान् अपद्माक्षः पद्माक्षस्संपत्स्यते पद्माक्षीभविष्यति। च्विः। उपायाभिमुख्यगन्धस्यापि दवीयान् पक्षिमात्रोऽपि भवद्दिव्यालयवासभाग्यवशात् 'ब्रह्म वेद ब्रह्मैव भवति' इत्युक्तरीत्या ब्रह्मविदिव भगवत्सारूप्ययोग्यो भविष्यतीति भावः। ततः तदपेक्षया वक्तव्यं किमस्ति कथनीयं तन्माहात्म्यं ततोऽपि नान्यदवशिष्यत इति भावः॥

पक्षे स्वां इन्प्रकृतिं इति छेदः। स्वां स्वकीयां इन्प्रकृतिं मत्वर्थीयेन इन्प्रत्ययेन युक्तां प्रकृतिंपक्षीति प्रकृतिं अजहदेव। इन्प्रत्ययान्तप्रकृतिकत्वात्तस्येति भावः। पक्षी पक्षीतिशब्दः सद्मान्तस्थानभाक् यतः इति छेदः। यतः यस्मात्कारणात् आवर्णेन सह वर्तत इति सद्मं अन्तस्स्थानं मध्यभागः तद्भजतीति तथोक्तः। ततः तस्मात्कारणात् पद्माक्षी भविष्यति। पद्माक्षीति निष्पत्स्यते। अत्र वक्तव्यं किं वक्तव्यप्रकिया सर्वाऽप्युक्तैव नान्यत्किंचिदवशिष्यत इति भावः। अत्र भगवन्मन्दिरमाहिमगुणेन तन्निवासेन पक्षिणोऽपि भगवत्सारूप्यगुणाधानम्। अन्यत्सर्वं पूर्ववदेव ॥

यथावा—

**आद्यमरत्वं गतमप्यथ चातितरान्तकत्वमाप्तमपि। हरितत्वविस्त्वभूम्ना तत्साधर्म्येण मरतकं भाति ॥ १६९५ ॥**

मरतकं गारुत्मतं मरतकपदं च, तयोस्तादात्म्यम्। आद्यमरत्वं पूर्वदेवत्वं दैत्यत्वमित्यर्थः। गतमपि कर्मवशाद्वृत्रादिवदिति भावः। अथ च अनन्तरं च अतितरान्तकत्वं अतिवेलजगन्नाशकत्वं दैत्यत्वानुगुणमिति भावः। आप्तमपि। पक्षे आद्यौ प्राथमिकौ मरौ मवर्णरेफौ यस्य तत् आद्यमरं तस्य भावः तत्त्वं गतं अथ च मरवर्णानन्तरं च अतितरां अतिवेलं तकौ तकारककारौ यस्य तत् अतितरांतकं तस्य भावं आप्तमित्यर्थः। मरतकशब्दस्यैवं वर्णचतुष्टयात्मकत्वादित्यभिप्रायः। हरेः भगवतः तत्वं याथात्म्यं वेत्तीति वा हरिरूपं परं तत्वं वेत्तीति वा हरितत्त्ववित् तस्य भावः हरितत्त्ववित्त्वं तस्य भूम्ना तत्साधर्म्येण भाति।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥

इत्युक्तरीत्या भगवत्साम्यं प्राप्य प्रकाशत इत्यर्थः ॥

पक्षे—हरितत्वं हरिद्वर्णत्वं विन्दतीति हरितत्ववित् । विन्दतेः क्विप् । तद्भूम्ना तत्साधर्म्येण भाति । मरतकमणेर्हरितवर्णत्वेन भगवत्सावर्ण्यात्तथोक्तिः । नीलहरिद्वर्णयोरभेदः कविसमयसिद्धः, अत्र मकाररेफादिवर्णवत्त्वं मरतकशब्दगतं हरितत्वभाक्त्वं तदर्थगतमपि शब्दार्थतादात्म्यसाम्राज्यादभेदेनाध्यवसितमिति रहस्यम् । भगवन्निष्ठमाहिमगुणेन तत्त्वविदि मरतके तत्साधर्म्यगुणाधानम् । हरितत्वविन्त्वादिशब्दक्रोडीकृतार्थद्वयाभेदाध्यवसायनिर्व्यूढप्रतिबन्धकसद्भावेऽपि कार्योत्पत्तिलक्षणविभावनाविशेषेण पूर्वोक्तरीत्या पर्यायालंकारविशेषेण चोपस्कृतमित्यवधेयम् ॥

यथावा—

**अचलामरस्थितिः प्राग्येनाप्ताऽन्ते प्रतीपवर्णगति । भूत्वाऽपि मरकतं तद्धरिरुच्या स्वार्थतो न विभ्रष्टम् ॥ १६१६ ॥**

येन मरकतेन गारुत्मतमणिना मरकतपदेन च प्राक् आदौ अचलामरस्थितिः अचलामरो भूदेवः तस्य स्थितिः मर्यादा आप्ता ब्राह्मण्यं लब्धमित्यर्थः । पक्षे अचला निश्चला मरस्थितिः मकाररेफयोरवस्थानं आप्ता 'स्थितिस्स्त्रियामवस्थाने मर्यादायां च सीमनि, इति मेदिनी । तत् मरकतं तत्पदं च । अन्ते अवसानसमये प्रतीपवर्णः ब्राह्मणप्रातिकूल्यवर्णः शूद्रवर्ण इति यावत् । गतिः संबन्धो यस्य तत्तथोक्तं । अजामिलादिवद्वृषलसंसर्गदूषितमिति

भावः भूत्वा ; पक्षे अन्ते स्वचरमभागे प्रतीपा प्रतिलोमा वर्णगतिः वर्णयोः ककारतकारयोः स्थितिः यस्य तत्तथोक्तं भूत्वाऽपि । मरकतमिति पदं मरतकं भूत्वाऽपीत्यर्थः । हरौ भगवति रुच्या निरतिशयप्रीत्या 'यमेवैष वृणुते' इत्युक्तरीत्या भगवत्कृतस्वविषयकप्रीत्या वा । पक्षे भगवत्तुल्यरुच्या उपलक्षितमिति शेषः । स्वार्थतः स्वाभीप्सितनिःश्रेयसरूपनिरतिशयपुरुषार्थात् न विभ्रष्टं न प्रच्युतं । किंतु साधितवदेवेति भावः । पक्षे स्वाभिधेयाद्वारुत्मतमणिलक्षणात् न विभ्रष्टं मरकतपदस्य यादृशार्थप्रत्यायकता मरतकमित्यस्यापि पदस्य तादृशार्थप्रत्यायकताया एव प्रसिद्धत्वान्न स्वार्थविभ्रंश इति भावः । अत्रापि पूर्वोदाहरणवदेव सर्वमनुसन्धेयम् ॥

यथावा—

**आदिमवर्णत्रितयत्यक्तोऽपि त्वद्रुचेर्बलाढ्यतया। वर्णान्तरगोऽपि जहौ न स्वार्थं वारिवाहको भगवन् ॥ १६९७ ॥**

हे भगवन् ! वारिवाहकः अम्बुवाहः वारिवाहकशब्दश्च आदौ भवं आदिमं यत् वर्णत्रितयं ब्राह्मणादिवर्णत्रयं । पक्षे वारिवा इति वर्णत्रयं तेन त्यक्तोऽपि ; त्वद्रुचेः त्वयि प्रीतिसद्भावाद्धेतोः त्वदनुग्रहसद्भावाद्वा । बलाढ्यतया विवेकादिसाधनसप्तकान्तर्गतानवसादलक्षणमनोबलवत्त्वेन ईदृशबलासद्भावे विवक्षितपुरुषार्थलाभायोगात् । यच्छ्रूयते 'नायमात्मा बलहीनेन लभ्यः' इतीति भावः । पक्षे । त्वद्रुचेः त्वत्तुल्यद्युतिसद्भावादित्यर्थः । यद्वा । त्वदभिप्रायानुरोधादित्यर्थः । बलाढ्यतया बला इति वर्णद्वययुक्ततया त्वदिच्छानुसारात् 'न गिरा गिरा, इति न्यायात् वारिवा

इति वर्णत्रयनिषेधेन तत्स्थाने विधीयमानं यत् बला इति वर्णद्वयं तादृशवर्णवत्त्वेन वर्णान्तरगोऽपि अवरवर्णं प्राप्तोऽपि पक्षे बला इत्याकारकवर्णाभिन्नवर्णान्तरसंबन्धोऽपीत्यर्थः । बलाहक इति निष्पन्नोऽपीत्यभिप्रायः । पृषोदरादिगणे वारिवाहकशब्द एव बलाहक इति पठितः । स्वार्थं स्वाभीष्टं परमपुरुषार्थं न जहौ । भगवत्प्रीतिसद्भावे पुरुषार्थसाधनविषये अवरवर्णसंबन्धोऽपि न प्रतिबन्धक इति भावः । पक्षे स्वाभिधेयं न जहौ वारिवाहक शब्दस्य बलाहकशब्दत्वेऽपि तुल्यार्थकत्वादिति भावः । अत्रापि भगवद्गुणेन बलाहकस्य गुणधानम् । अन्यत्प्राग्वत् ॥

अन्यदोषेणान्यदोषाधानं यथा—

बहुधाऽपि च यतमानास्तव धामगतिं कदाऽप्यलभमानाः । मशकतया वाऽत्र स्वानसृष्टवन्तं विधिं विनिन्दन्ति ॥ १६१८ ॥

अत्र भगवद्भक्तानां श्रीनिवासनिवासगमनाभावदोषेण तद्दिव्यालये मशकतया वाऽपि स्वानसृष्टवतो विधेर्निन्दारूपदोषाधानम् ॥

यथावा—

तुष्टूषुस्तव भगवन्ननन्तमद्भुततमं च महिमानम् । एकामेव रसज्ञां निर्मितवन्तं विधिं विनिन्दामि ॥ १६१९ ॥

अत्र तुष्टूषारकरसज्ञत्वदोषेण अनेकरसना अनिर्मितवतो विधेर्निन्द्यत्वरूपदोषाधानम् ॥

अच्युतपदनिगळितमप्यसारविषयेषु मदविदि-
तमेव । धावददान्तं हृन्मम धात्रा सृजता प्रता-
रितोऽस्मि मुधा ॥ १७०० ॥

इदं भूयसाऽपि यत्नेन दुश्शाकमनोनिग्रहतया निर्विद्यमानस्य कस्यचित्प्रपन्नस्य वचनम् । तथाहि—अच्युतस्य भगवतः पदे चरणे निगळितमपि निश्चलतया स्थापितमपि, पक्षे दुर्मोचकारारूपस्थानविशेषश्रृङ्खलितमपि मदविदितं मया अज्ञातमेव यथा स्यात्तथा असारेषु विषयेषु देशेषु च 'विषयो गोचरे देशे तथा जनपदेऽपि च' इति मेदिनी । धावत् रुचिभेदाद्विषयरसानेवास्वादयदिति भावः । पक्षे कारागृहाद्विश्रृङ्खलतया स्वैरं देशाद्देशं धावमानमिति भावः । अदान्तं स्वरूपतोऽशिक्षितं मम हृत् चेतः सृजता धात्रा, अनेन स्वतः पोषकस्वभावेनापीति व्यज्यते । मुधा प्रतारितोऽस्मि व्यर्थमेव वञ्चितोऽस्मि । ईदृगतिदुर्दान्तचपलचेतस्सर्जनपूर्वकमद्वञ्चनेन न किंचिदस्य प्रयोजनं विमृशन्नपि पश्यामीति भावः । अत्र प्रपन्नमनसश्चापल्यरूपदोषेण तत्स्रष्टुर्धातुः प्रतारकत्वरूपदोषाधानम् । प्रकृते प्रपन्नमनोवृत्तान्ते उच्छृङ्खलकारागृहस्वैरनिस्सृतचेतोवृत्तान्तप्रतीतिरूपसमासोक्त्युपस्कृतमिदम् । पूर्वोदाहरणे तु उभे अपि शुद्धे इति विवेकः ॥

यथावा—

अधिनाथो भवतु विधिर्ननु नाथ त्वयि मना-
कपराचीने । भगवन्ननाथ एव हि भविता कश्चिन्न
कोऽपि विशयोऽत्र ॥ १७०१ ॥

ननु नाथ हे भगवन्! कश्चित् अधिनाथः यःकश्चिदैश्वर्यशाली जनः विधिर्भवतु ब्रह्मैव भवत्विति लोकोक्तिः। किं तावतेति भावः। त्वयि मनाक् पराचीने पराङ्मुखे सति अनाथ एव भविता। त्वय्युदासीने कोऽन्यो नाथस्स्यादिति भावः। पक्षे अधिनाथशब्दः विधिः विगतधिवर्णश्चेत् अनाथ इति संपद्येतेत्यर्थः। अत्र मनाग्भगवत्पाराङ्मुख्यदोषेणाधिनाथस्य विधेरपि कस्यचिदनाथत्वरूपदोषाधानम्। उपदर्शितश्लेषचमत्कारस्तु पूर्वेभ्यो विशेषः॥

अन्यगुणेनान्यस्य दोषाधानं यथा—

**अतिवेलसहनशीला विपुलेव तवान्तरङ्गरीतिरिति। वारंवारं मनुजास्स्वैरं विधदति किलांहसां भारम्॥ १७०२॥**

अत्र आत्यन्तिकभगवत्क्षमागुणेन दुर्दान्तानां स्वैरदुरितभारकरणरूपदोषाधानम्॥

यथावा—

**आद्यन्ताक्षरवैरं त्वय्यखिलसुहृत्तमे रमेश विभो। वैश्वानरमप्यन्तश्श्वानं को नाम भुवि न जानाति॥ १७०३॥**

हे विभो रमेश! अखिलसुहृदि 'सर्वस्य शरणं सुहृत्' इति श्रुत्युद्घोषितसर्वसौहार्दे त्वयि आद्यन्तावभिव्याप्य आद्यन्तं यावच्छरीरपातमित्यर्थः। अक्षरं अक्षय्यं वैरं विरोधः यस्य तं तथोक्तं वैश्वानरमपि वह्नितुल्यमपीति यावत्, अतिपवित्रमपीति भावः। श्वानं सारमेयसदृशं अन्तः मनसि को नाम भुवि न

जानाति। दाक्षिण्येन प्रकाशं शुनकतुल्यं वक्तुमनीशोऽपि चेतसि तथा जानीयादेवेति भावः। पक्षे आद्यन्ते प्रथमचरमे अक्षरे वर्णे वैररूपे यस्य तं तथोक्तं आद्ये वै इति वर्णेन अन्ते र इति वर्णेन च युक्तमित्यर्थः। वैश्वानरं वैश्वानरशब्दं अन्तश्श्वानमिति समस्तं पदम्। अन्तः वैर इत्याकारकवर्णद्वयमध्ये श्वान इत्याकारकवर्णद्वयं यस्य तं तथोक्तं को नाम न जानाति; सर्वोऽपि वैश्वानरशब्दः ईदृगिति जानात्येवेति भावः। अत्र भगवतोऽखिलसुहृत्त्वादिगुणेन तद्वैरस्य दोषत्वानुवर्णनम्॥

यथावा—

त्वदपाङ्गविपर्यासान्नहुषो नाके महाशयोऽपि भवन्। अन्तेच्युत ऊर्जिततां प्राप्तोऽपि महाशयुर्बभूवाम्ब ॥ १७०४ ॥

हे अम्ब! नहुषः नाके महाशयः महेच्छः भवन्नपि त्रैलोक्यैश्वर्यं भजन्नपीति यावत् 'महेच्छस्तु महाशयः' इत्यमरः। अप्रतिहतेच्छो भवन्नपीत्यर्थः। ऊर्जिततां सर्वप्रकारबलवत्त्वं प्राप्तोऽपि त्वदपाङ्गविपर्यासात् अन्ते पर्यवसाने च्युतः स्वर्गाद्भ्रष्टस्सन् महांश्चासौ शयुश्च महाशयुः अजगरो बभूव। 'अजगरे शयुर्वाहस इत्युभौ' इत्यमरः। अन्यत्र महाशयशब्दः अन्ते अच्युतः च्युताकारः ऊर्जिततां उवा उकारेण ऊर्जिततां प्राणिततां उकारघटिततामिति यावत्। प्राप्तोऽपि अपिस्समुच्चये। न केवलमन्ते अकारच्युततामेव किंतु तत्रैव उकारसंबन्धतां च प्राप्त इत्यर्थः। महाशयुरिति निरपद्यतेति भावः। अत्र श्रीकटाक्षनिष्ठमहोदारत्वादिगुणेन तद्विपर्यासहेतुकमहाशयुत्वदोषो नहुषस्य निबद्धः॥

अन्यदोषेणान्यगुणाधानं यथा—

दण्डधरस्त्वमिति हरे चण्डकरादिस्स्वकृत्यमधिकुर्वन् । भद्राय भवति जगतां निद्रात्यलसे प्रभौ जनस्स्वैरम् ॥ १७०५ ॥

प्रभौ अलसे सति जनः स्वैरं निद्रातीति योजना । अत्र भगवतो दण्डधरत्वसूचितक्रौर्यदोषेण चण्डकरादेः स्वस्वाधिकारनिर्वर्तनमूलकजगत्क्षेमनिष्पादनलक्षणगुणाधानम् । अयं च व्यतिरेकमुखप्रवृत्तेन तुरीयपादगतार्थान्तरन्यासेन समर्थितः । अत्र 'भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः' इत्यादिश्रुत्यर्थोऽनुसंधेयः । इदं भगवतो दण्डधरत्वं क्रौर्यमिति लोकदृष्ट्योक्तम् । वस्तुतस्तु तस्यापि गुणत्वमेवेत्यभाषि भगवद्भाष्यकारैः । एवं सत्यन्यगुणेनान्यगुणाधानस्यैवोदाहरणं भविष्यति ॥

यथावा—

चक्रेण व्यलुनास्त्वं चैद्यस्य शिरोधरां सरोजाक्ष । किं छिन्नमस्य तावत्त्वत्सायुज्यं परं त्वनेनाप्तम् ॥ १७०६ ॥

अत्र भगवतश्चक्रस्य चैद्यस्य शिरोधराच्छेदहेतुभूतक्रौर्यदोषेण तस्य तत्सायुज्यलाभरूपगुणाधानम् । इदं शुद्धम् ॥

यथावा —

त्वदनुग्रहस्य विषयश्शरीरभृद्धरणिभास्वरः प्रभवेत् । त्वन्निग्रहस्य विषयो निस्स्वोऽच्युत धरणिभार एव भवेत् ॥ १७०७ ॥

धरण्या धरणौ वा भास्वरः तेजस्वी सन् प्रभवेत् प्रभुर्भवेत् निस्स्वः दुर्गतस्सन् धरणिभारः भुवो भारभूत एव भवेत् । न किंचिदपि प्रयोजनं तेन भवेदिति भावः । पक्षे धरणिभास्वरशब्दः निस्स्वः स्ववर्णरहितस्सन् धरणिभार इति निष्पन्नो भवेदित्यर्थश्चमत्कारी । अत्र भगवतोऽनुग्रहो गुणः तेन शरीरभृतो धरणिभास्वरप्रभुत्वरूपगुणाधानं पूर्वार्धे । तन्निग्रहो दोषः तेन तस्य निस्स्वतावाप्तिपूर्वकभूभारत्वरूपदोषाधानमुत्तरार्धे इत्युभावपि प्रकारौ दर्शिताविति पूर्वेभ्यो विच्छित्तिविशेषः । एवं प्रदर्शयिष्यमाणेष्वप्युदाहरणेषु ॥

**शर्वस्स्थाणुस्सन्नपि सर्वज्ञस्त्वत्कृपावशादासीत् । स्यादितरथा स पशुपः पतन्नधश्शीर्षमपि पशुप एव ॥ १७०८ ॥**

अत्र भगवत्कृपामहिमगुणेन स्थाणोरपि सर्वज्ञत्वरूपगुणः, तद्वैपरीत्येन दोषेण पशुपस्य पशुपत्वरूपदोषश्चाहित इत्युभयम् ॥

यथावा

**कृपया त्वयेक्षितो यदि भवत्यसभ्योऽपि खलु सभास्तारः । अत एव सभासारो विपरीतत्वे भवेद्रसाभासः ॥ १७०९ ॥**

हे भगवन्! त्वया कृपया ईक्षितः दृष्टो यदि असभ्योऽपि सभानर्हः अनार्योऽपि 'माहाकुलकुलीनार्यसभ्यसज्जनसाधवः' इत्यमरः । सभास्तारः सभ्यो भवति खलु । अतः अस्मादेव कारणात् एषः सभासारः भवतीत्यनुपज्यते । सभायां श्रेष्ठो

भवतीत्यर्थः । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः । पक्षे यः सभास्तार इति शब्दः अतः अविद्यमानतकारस्सन् सभासार इति निष्पद्यते विपरीतत्वे त्वत्कटाक्षवैपरीत्ये विलोमतया पठने च रसाभासो भवेत् । अविद्यमानः भासः भासनं यस्य सः अभासः रसेन अभासः रसाभासः नीरस इत्यर्थः । यद्वा रसायां भुवि अभासः अप्रकाश इत्यर्थः । यद्वा अस्यते निरस्यत इत्यासः कर्मणि घञ् रसश्च आभा च रसाभे ताभ्यां निरस्त इत्यर्थः । पक्षे सभासारशब्दः रसाभास इति परिणमतीत्यर्थः । अत्र भगवत्कटाक्षस्य कृपार्द्रतागुणेन असभ्यस्यापि सभास्तारतादिगुणाधानं, तद्वैपरीत्येन सभासारस्यापि रसाभासत्वरूपदोषाधानं च ॥

यथावा—

सद्यस्त्वयेक्षितोऽग्रे स वीश्वरोऽपि द्यवीश्वरोऽम्ब भवेत् । आदौ द्यवीश्वरोऽपि ह्युपेक्षितो वीश्वरोद्यस्स्यात् ॥ १७१० ॥

हे अम्ब! विगतः ईश्वरो यस्य सः वीश्वरः अनाथोऽपीत्यर्थः । त्वया अग्रे पुरस्तात् ईक्षितश्चेत् सः पुमान् सद्यः तत्क्षणमेव द्यवि दिवि द्योशब्दस्य सप्तम्येकवचनम् । ईश्वरः अधिनाथः भवेत् 'स्वामीश्वराधिपति' इत्यादिना ईश्वरशब्दयोगाद्द्योशब्दस्य सप्तमी । इन्द्रो भवेदित्यर्थः । यद्वा सद्य इत्यत्र सत् यः इति छेदः । यः त्वया सत् प्रशस्तं यथा स्यात्तथा ईक्षितः इति योजना । अन्यत्तुल्यम् । अथवा द्यवि 'त्रिपादस्यामृतं दिवि' इति श्रुतेः परमे व्योम्नि ईश्वरः 'स स्वराड्भवति' इत्युक्तरीत्या

अकर्मवश्यः मुक्तैश्वर्यभाक् भवेदित्यर्थः । किञ्च आदौ प्रथमं यवीश्वरोऽपि इन्द्रो भवन्नपि अथ अधुना त्वया उपेक्षितश्चेत् वीश्वरः अनाथ एव स्यात्। त्वदीक्षणान्वयव्यतिरेकावेव ऐश्वर्यदारिद्र्य-प्रयोजकानीति भावः। स्यादित्यत्र सकारस्य 'अनचि च' इति वैकल्पिकं द्वित्वम्। पक्षे वीश्वरशब्दः आदौ प्रथमवर्णात्पूर्वं सद्यः यवर्णसहितश्चेत् यवीश्वर इति निष्पद्यते। न केवलमेतावदेव। आदौ यवीश्वरः यवीश्वरशब्दस्सन्नपि अथः यवर्णरहितः वीश्वर इति भवतीत्यर्थोऽपि चमत्कारी। अत्र लक्ष्मीकटाक्षस्य सानुग्र-हत्वरूपगुणेन तदीक्षितस्य स्वाराज्यैश्वर्यलक्षणगुणः। तदुपेक्ष-णलक्षणदोषप्रयुक्तः इन्द्रस्यापि अनाथत्वरूपदोषश्चेत्युभयम्॥

यथावा –

**व्यासविभीषणबलिवत्त्वदुपगतौ नाथ वर्धते पूर्णायुः। पूर्णायुरप्यपगतावूर्णायुरिवेह वध्यते बत मनुजः॥ १७११॥**

नाथ्यते आयुरारोग्यादिसर्वपुरुषार्थान् जनैरिति नाथः, तस्य संबुद्धिः हे नाथ! त्वदुपगतौ त्वच्छरणागतौ सत्यां व्यासवि-भीषणबलिवत् पूर्णायुस्सन् वर्धते।

अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः।
कृपः परशुरामश्च सप्तैते चिरजीविनः॥

इत्युक्तं तेषां चिरजीवित्वं भगवत्प्रपदनमहिम्नैवेति भावः। पूर्णायुरपि निमित्तान्तरेण पूर्णायुरपि अपगतौ त्वत्तो वैमुख्ये सति ऊर्णायुः मेष इव वध्यते हन्यते। दुर्गादिबलिप्रदैर्मांसार्थिभिर्वा विभिर्वा जनैरिति शेषः। त्वद्वैमुख्यं ब्रह्मणोऽप्यायुर्भङ्गहेतुरिति

भावः 'आयुः क्षिणोत्युपचिनोति च सर्वदोषान्द्वेषो मुकुन्दविषयो विषयोगतुल्यः' इत्युक्तेः। भगवदुपगतः पूर्णायुर्वर्धते तदपगतस्तु ऊर्णायुरिव बध्यत इति संपिण्डितोऽर्थः। पक्षे पूर्णायुश्शब्दोऽपि पस्य पकारस्य गतिः प्राप्तिः न पगतिः अपगतिः तस्यां पकारराहित्ये इत्यर्थः। ऊर्णायुस्सन्बध्यते बवयोरभेदात् बध्यते पदसमुदाये ग्रथ्यत इत्यर्थः। इवशब्दो वाक्यालंकारे। अत्र भगवतस्सकलफलप्रदत्वादिगुणेन तत्प्रपन्नस्य पूर्णायुष्ट्वगुणाधानं तदपगत्या तदन्यस्य ऊर्णायुवद्बध्यत्वरूपदोषाधानं च निबद्धम्। उपमासंकीर्णत्वं विशेषः॥

यथावा—

**तव पदि लग्ना जनता पूर्णा लक्ष्येत सर्वथाऽपि हरे। पूर्णाऽपि पच्युता चेदूर्णालक्ष्या भवेन्न सन्देहः॥ १७१२॥**

हे हरे! तव पादि लग्ना त्वच्चरणे सक्ता जनता सर्वथा सर्वप्रकारेणापि पूर्णा सती लक्ष्यते जनैरिति शेषः। तव पच्युता पदः चरणात् च्युता जनता स्वतः पूर्णाऽपि ऊर्णालक्ष्या ऊर्णेव मेषादिलोमेव अलक्ष्या अनादरणीया भवेत्। यद्वा ऊर्णा तत्प्राया लक्ष्या दृश्या भवेत्। 'ऊर्णा मेषादिलोम्नि स्यात्' इत्यमरः। पक्षे पूर्णाऽपि पूर्णेति शब्दव्यक्तिरपि पच्युता पकारेण च्युता। पः पकारः च्युतो यस्या इति वा' पकारविधुरा सती ऊर्णा ऊर्णेत्यानुपूर्वीमती लक्ष्या दृश्या भवति। अत्र भगवतो माहात्म्यगुणेन तत्पदलग्नाया जनतायाः पूर्णायुष्ट्वलक्षणगुणाधानम्। तादृशमहिमवत्वं भगवतो गुणः। तेन तत्पादच्युतिहेतुकोर्णालक्ष्यत्वरूपो दोष इत्युभयं पूर्वेभ्यो विच्छित्तिशालि॥

यथावा—

घनसारस्स्मितदास्यात्तवाघवान्प्राङ्नसार एवा-
म्ब । कथमप्यनोऽथ सारो रसानघश्चास सकल-
विपरीतः ॥ १७१३ ॥

हे अम्ब! घनसारःकर्पूरः तव स्मितदास्यात् प्राक् मन्द-हसितदास्यलाभात्पूर्वं अघवान् दास्यालाभप्रयुक्तदुःखवान् 'अंहो-दुःखव्यसनेष्वघम्' इत्यमरः। अतएव नसार एव। असार एव नशब्देन नञर्थकेन समासः। कथमपि अतिप्रयासेन अनितीत्यनः 'अन प्राणने' पचाद्यच्। जीवन्नित्यर्थः। अथ स्मितदास्यलाभा-नन्तरं सकलविपरीतः पूर्वोक्ताघवत्त्वादिसर्वगुणविपर्यासं गत-स्सन् रसानघः रसायां भुवि अनघः रसेन अनघश्च सन् सारः श्रेष्ठः बलवान्वा आस दिदीपे। अस्यतेः दैवादिकाद्दीप्त्यर्थका-ल्लिट्। अघवत्त्वनसारत्वयोर्वैपरीत्येन सारो रसानघश्चेति सार-त्वरसानघत्वयोः प्रतिद्वंद्विनोर्निर्देशः। पक्षे घनसारशब्दः प्राक् प्रथमं घवान्न भवतीत्यघवान् घवर्णविधुरस्सन् नसार एव नसार इति संपद्यमानः अथ अनः नवर्णरहितः सार इति निष्पन्नः। एवं वर्णवैकल्यहेतुकं शब्दस्वरूपमुक्तम्। अथ सर्ववर्णसाकल्येन वैप-रीत्ये शब्दस्वरूपमाह—अथेति। अथ सकलविपरीतः वर्णवैक-ल्याभावेन विलोमपठितसर्ववर्णः रसानघ इति निष्पद्यत इत्यर्थः। अत्र श्रीस्मितगतधावळ्यतापहारित्वादिगुणेन घनसारस्य तदला-भमूलकाघवत्त्वरूपदोषः। तद्दास्यलाभप्रयोज्यसारत्वादिगुणश्चे-त्युभयं पूर्वोदाहरणेभ्यो वैलक्षण्येन निबद्धम्। शब्दार्थतादात्मा-दिचमत्कृतिस्तु व्यक्तैव॥

यथावा—

**अम्ब प्राक्त्वदहृष्टेरमरकदम्बमपि विष्टपत्य-क्तम् । नष्टमधुना त्वनन्तोदयं तव दयादृशा विप-त्यक्तम् ॥ १७१४ ॥**

हे अम्ब! प्राक् पूर्वं अमरकदम्बमपि किमुत मर्त्यकदम्ब-मिति भावः । त्वदहृष्टेः त्वत्कटाक्षालाभाद्धेतोः विष्टपेन त्यक्तं विष्टपं त्यक्तं येन तत्तथोक्तमिति । विसृष्टस्वस्वभुवनावस्थानमिति यावत् । नष्टं क्वाप्यदर्शनं प्राप्तं निलीनमित्यर्थः । अधुना तु तव दयादृशा विपत्त्यक्तं आपद्भ्यां परित्यक्तम् । न केवलमनिष्टनिरास एव, किन्त्वतिवेलमिष्टलाभश्चास्येत्याह—अनन्तोदयं अपरिच्छिन्नसर्वविधा-भ्युदयं च भवति । अत्र—

त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ।
विनष्टप्रायमभवत्त्वयेदानीं समेधितम् ॥

इति श्रीविष्णुपुराणानुसारिणा 'ईषत्त्वत्करुणानिरीक्षणसुधा-संधुक्षणाद्रक्ष्यते नष्टं प्राक्तदलाभतस्त्रिभुवनं संप्रत्यनन्तोदयम्' इति श्रीयामुनार्यश्रीसूक्तिरनुसंहिता ॥

पक्षे विष्टपत्यक्तमिति पदं नष्टं न विद्यते ष्ट इति वर्णः यस्य तत् नशब्दपूर्वको बहुव्रीहिः । भ्रष्टष्टवर्णं सत् विपत्यक्तं विपत्य-क्तामिति पदं अनन्तात् शेषावतारात्पतञ्जलेः उदयः आविर्भावो यस्य तत्तथोक्तं भवति । सर्वेषामपि शब्दानां तन्निष्पादितत्वादिति भावः । अत्र श्रीकटाक्षमहिमगुणेन तदविषयस्यामरकदम्बस्य विष्टपत्यागादिदोष इत्येक उल्लासः, तत्कटाक्षमहिमगुणेन तद्वि-षयस्य तस्य विपत्तिपरित्यागादिगुण इत्यन्य उल्लासः पूर्ववदेव ॥

यथावा—

वानरनिशिचरराजौ तयोरवरजौ च तव रवि-कुलेन्दो। कोपकृपाभ्यां नृपतेराज्यादरमेत्य हन्त निर्ववतुः ॥ १७१५ ॥

हे रघुकुलेन्दो! वानरनिशिचरराजौ वालिदशाननौ नृपते-स्तव कोपात् आज्यात् युद्धात् 'समित्याजिसमिद्युधः' इत्यमरः। दरं भयं एत्य निर्ववतुः निर्वाणं प्राप्तौ अस्तं गताविल्यर्थः। तदव-रजौ सुग्रीवविभीषणौ, नृपते इति संबुद्ध्यन्तं पदं हे रघुकुले-न्दो इत्यस्य विशेषणम्। राज्यादरं राज्ये आदरं एत्य कुलक्र-मागतराज्यलाभात्तत्रातिमात्रादरं प्राप्येति भावः। निर्ववतुः नि-र्वाणं सुखं प्राप्ताविल्यर्थः। निःपूर्वकाद्वातेरुपपादितोभयार्थकताया दर्शनात्। तथाच मेदिनी 'निर्वाणमस्तंगमने निर्वृतौ गजम-ज्जने। सङ्गमेऽप्यपवर्गे च' इति। अत्र श्रीरघुनन्दनगताभ्यां कोपकृपाभ्यां दोषगुणाभ्यां वालिदशाननयोस्सुग्रीवविभीषणयोश्च आज्यादरस्य राज्यादरस्य च प्राप्तिपूर्वकं विनाशसुखलक्षणदोषगु-णयोराधानमित्युभयं यथासंख्यश्लेषतुल्ययोगितासंकीर्णमिति पूर्वे-भ्यो वैलक्षण्यम्॥

अत्र प्रथमचतुर्थयोरुल्लासोऽन्वर्थः। मध्ययोश्छत्रिन्योयन लाक्षणिकः। काव्यलिङ्गेन चरितार्थोऽयं नालंकारान्तरभूमिमारूढी-कृत इत्येके। लौकिकार्थमयत्वादनलंकार एवेत्यपरे॥

इत्यलंकारमणिहारे उल्लाससर एकसप्ततितमः.

## अथावज्ञालंकारसरः (७२)

न स्यातां यदि ते ताभ्यां साऽवज्ञालंकृतिर्भवेत् ॥

ताभ्यां अन्यगुणदोषाभ्यां ते अन्यगुणदोषाधाने कस्यचिद्गुणेन कस्यचिद्गुणाधानं दोषेण दोषाधानं वा न स्यातां चेत् अवज्ञालंकारः ॥

यथावा—

करुणाजलधिरिति त्वां श्रितोऽस्मि करुणालवोऽपि मयि न कृतः । पापी गच्छतु जलधिं पादतलं वाऽप्यमुष्य नार्द्रं स्यात् ॥ १७१६ ॥

अत्र भगवन्निष्ठाश्रितवत्सलत्वजलधिनिष्ठजलपौष्कल्यरूपगुणाभ्यां शरणागतपापिनोः कृपापादतलार्द्रतयोर्गुणयोरनाधानम् ॥ अत्र महावाक्यार्थो दृष्टान्तरूपः बिम्बप्रतिबिम्बवाक्यार्थाभ्यां अवज्ञारूपाभ्यां संकीर्णः ॥

यथावा—

अमृतमये निवसन्नपि सुमनोनिवहे जनो भवद्विमुखः । विशदत्वं नैति हरे शशधरबिम्बे चिरं कलङ्क इव ॥ १७१७ ॥

अत्र विद्वन्निवहशशधरबिम्बयोरमृतमयत्वलक्षणगुणेन भगवद्विमुखकलङ्कयोर्विशदत्वरूपगुणस्यानाधानं श्लेषकृतसमानधर्मवदुपमासंकीर्णोऽयमिति पूर्वस्माद्विशेषः ॥

यथावा—

**गच्छतु गयां वितनुतां विलोमतन्नामवाच्यमपि यदिवा। विन्देदरविन्देक्षण कथं तव पदं त्वया विवदमानः॥ १७१८॥**

यथावा—

विलोमतन्नामवाच्यं प्रतिलोमगयाशब्दवाच्यं यागमित्यर्थः। गयागन्ता वा यष्टा वा भवतु। स पुमान् हे अरविन्देक्षण! त्वया विवदमानः 'त्वं मेऽहं मे' इत्युक्तरीत्या विवादकर्ता कथं तव पदं विन्देत।

यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः।
तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः॥

इति तत्पदमरार्पणरूपाविवादवत एव निश्श्रेयसप्राप्त्यभिधानादिति भावः। अत्र वक्तव्यांशस्सर्वोऽपि समासोक्तिप्रकरणे सप्रपञ्चं न्यरूप्यत। अत्र गयायागयोः पवित्रतादिगुणेन भगवत्पदलाभगुणानाधानम्॥

दोषेण दोषानाधानं यथा—

**का तव हानिर्भगवन् कश्चिदभाग्यः पराङ्मुखस्त्वयि चेत्। नलिनसुहृदो भवेत्किं नयनरुजा चेन्निमीलितः कश्चित्॥ १७१९॥**

नयनरुजेत्युपलक्षणतृतीया। अत्र भाग्यहीननयनरोगिणोः पराङ्मुखत्वनिमीलितत्वाभ्यां दोषाभ्यां भगवन्नलिनसुहृदोर्हानिरूपदोषानाधानम्। इयमपि दृष्टान्तसंकीर्णा आद्योदाहरणवत्॥

यथावा—

यश्श्रीनिवास इति भुवि विदितोऽहिगिरौ चकास्त्यसौ कैश्चित्। उक्तोऽपि विप्रतीपं कदाऽपि भविता स वा निश्श्रीः ॥ १७२० ॥

यः भगवान् श्रीनिवास इति भुवि विदितः अहिगिरौ चकास्ति। सः वा निश्श्रीः इति छेदः। सोऽसौ कैश्चित् भगवत्पारम्यासहिष्णुभिश्शैवैः विप्रतीपं विरुद्धं यथा तथा उक्तोऽपि नायं श्रीनिवासः किंतु कुमार इत्युक्तोपीति भावः। कदाऽपि यदाकदाचिद्वा निश्श्रीः श्रीविधुरः 'निवातपद्म' इत्यादाविव नीत्युपसर्गपूर्वको बहुव्रीहिः। भविता वा इति योजना स्यात्किमित्यर्थः। श्रियो वक्षस्येवावस्थानात्कदाऽपि नित्यश्रीत्वं न जहातीत्यर्थः। यथोच्यते श्रीमति रामायणे—'श्रीवत्सवक्षा नित्यश्रीः'। इति। पक्षे श्रीनिवासशब्दः कदाऽपि यदाकदावा विप्रतीपमुक्तः प्रातिलोम्येन पठितः सवानिश्रीरिति भवितेत्यर्थोऽपि चमत्कारी। अत्र नायं श्रीनिवास इति शैवोक्तिदोषेण भगवतो निश्श्रीत्वरूपदोषानाधानम्। चमत्कृतिविशेषस्तु व्यक्त एव॥

यथावा—

सर्वेश्वरं हरे त्वां भूयश्श्रुत्यैककण्ठ्यतो विद्मः। पर्वतमात्रपतिं त्वां स्थविरगवी वदतु काऽपि का हानिः ॥ १७२१ ॥

भूयसीनां श्रुतीनामैककण्ठ्यात् एकार्थप्रतिपादनात्। स्थविरगवी वृद्धप्रलपितम्। स्थविरेत्यनेन तस्य मतिभ्रंशो द्योत्यते। जरद्गवी वा। वस्तुतस्तु स्थविरगवी 'विष्णुः पर्वतानामधिपतिः'

इति श्रुतिः। काऽपीत्यनेन तस्याः श्रुत्यन्तरानैककण्ठ्यं द्योत्यते। अत्र उदाहृतश्रुत्या भगवतश्श्रीनिवासस्य पर्वतमात्राधिपत्यप्रयुक्तन्यूनतारूपदोषवर्णनेन हानिरूपदोषानाधानवर्णनम् ॥

यथावा—

**अस्थिरजयोऽनवन इत्यभिधत्तां विप्रतीपमेव जनः। नवतोयजलोचन इह नचलोजयतोवनश्च न भवेत्किम् ॥ १७२२ ॥**

जनः पामर इत्यर्थः। 'जनो लोके महर्लोकात्परलोकेऽपि पामरे' इति विश्वमेदिन्यौ। अयं स्थिरः नित्यः जयो यस्य सः स्थिरजयः स न भवतीत्यस्थिरजयः। अनवनः अरक्षकः आभ्यां विशेषणाभ्यामनिष्टनिवारणेष्टप्रापणाक्षमत्वं सूचितम्। इति विप्रतीपं भगवत्स्वभावविरुद्धमेव अभिधत्तां कथयतु इत्यनादरोक्तिः। नवतोयजलोचनः अभिनवनलिननयनो भगवान्. जयतः जयात् नचलः अचलः स्थिरजय इति यावत्। अवनः रक्षकश्च न भवेत्किम्। आभ्यां पूर्वोक्तविशेषणाभ्यां पूर्वोक्तविशेषणप्रतिद्वंद्विभ्यामनिष्टनिराकरणेष्टप्रापणधुरीणत्वं सूचितम्। अयमस्थिरजयः अनवन इति कश्चित्पामरो ब्रूयाच्चेत् तावतैवायं स्थिरजयो रक्षकश्च कथं न स्यादिति भावः। पक्षे नवतोयजलोचन इति शब्दः प्रतीपं कथितश्चेत् नचलोजयतोवनः कथं न स्यात् तथैव तन्निष्पत्तेरिति भावः। अत्र पामरजनकर्तृकविप्रतीपवर्णनदोषेण भगवति तादृशदोषानाधानमुपपादितचमत्कारोपस्कृतम् ॥

यथावा—

**मूर्खस्त्वां निन्दति चेज्जातं किं तव हरे तदि-**

दमास्ताम् । तं त्वं नाद्रियसे चेच्छातं तस्यापि किमपि बत न भवेत् ॥ १७२३ ॥

किं छातं किं छिन्नं 'छो छेदने' क्तः । 'आदेचः' इत्यात्वम् । 'छिन्न छातं लूनम्' इत्यमरः । तं निन्दितारं मूर्खं त्वं नाद्रियसे चेत् तस्यापि न किमपि छातं छिन्नमित्याश्चर्यम् । परिहारस्तु चेत् शातं इति उत्तरार्धे छेदः । किमपि शातं सुखं न भवतीति । 'शर्मशातसुखानि च' इत्यमरः 'शो तनूकरणे' दैवादिकादस्माद्बाहुलकात्क्तः । 'आदेचः' इत्यात्वम् । इयत्यशुभमिति विग्रहः । अत्र मूर्खकृतनिन्दनप्रयुक्तस्य भगवन्न्यूनतारूपदोषस्यानाधानम् । भगवत्कर्तृकानादरदोषप्रयोज्यमूर्खदोषानाधानमिति भवत्यवज्ञालंकारद्वयम् । अत्राद्यं शुद्धं, द्वितीयं तु श्लेषोज्जीवितमिति विवेकः ॥

अत्र केचित् अवज्ञोदाहरणेषु 'स्वल्पमेवाम्बु लभते प्रस्थः प्राप्यापि सागरम्, मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः' इत्यादिषु नावज्ञाख्यमलंकारान्तरमभ्युपेयं, तत्रान्यगुणदोषयोरन्यगुणदोषजननसमर्थयोस्सतोरपि तदजननवर्णनेन विशेषोक्तेरेव युक्तत्वाद्वक्तुम् । सागरसलिलसमृद्धिसत्त्वेऽपि प्रस्थे तत्समृद्ध्यभावस्य पद्मसंकोचेऽपि चन्द्रगतदोषाभावस्य च वर्णनेन तल्लक्षणस्याविकलत्वादिति वदन्ति । वस्तुतस्तु नात्र विशेषोक्तिस्सुवचा । 'हार्दस्नेहक्षयो नाभूत् स्मरदीपे ज्वलत्यपि' इत्यादेतदुदाहरणेषु दीपज्वालास्नेहक्षययोरिवात्र सागरसलिलसन्निधानप्रस्थगमनाम्बुसमृद्ध्यभावयोः कार्यकारणभावस्य लोकासिद्धस्याभावेनोक्तविशेषोक्तिलक्षणविरहादित्याहुः ॥

इत्यलंकारमणिहारे अवज्ञासरो द्विसप्ततितमः.

## अथानुज्ञासरः (७३)

अनुज्ञा सा गुणौत्सुक्याद्दोषस्याप्यर्थना यदि ।

उत्कटगुणविशेषलालसया दोषत्वेन प्रख्यातस्यापि वस्तुनः प्रार्थनमनुज्ञालंकारः ॥

यथावा—

भवहर फणिशिखरीश्वर भवतात्तव विप्रकर्ष एव मम । स ह्यादरस्य कारणमनादरस्यैव सन्निकर्षस्तु ॥ १७२४ ॥

अत्र श्रीवेंकटगिरिनाथविप्रकर्षो दोषः । तदभ्युपगमे हेतुरादरणकारणत्वं गुणः । स च सामान्येन विशेषसमर्थनरूपेणार्थान्तरन्यासेन दर्शितः ॥

यथावा—

तावकशैलेऽच्युत मे स्थावरता जङ्गमत्वमपि वाऽस्तु । किं मुक्तिदोऽसि न पुरा कोसलजनपदचराचराणां त्वम् ॥ १७२५ ॥

अत्र तरुलतादिरूपस्थावरत्वेन वा भुजगविहगमृगादितिर्यग्जन्तुतया वा जन्मनः प्रार्थनं दोषः । तदाशासनं तादृशरूपेण वेंकटाद्र्यवस्थानस्यापि मुक्तिहेतुत्वं गुणः । स च कोसलजनपदचराचरनिःश्रेयसवितरणोदाहरणेन दर्शितः ॥

यथावा—

मा भूत्त्वय्यनुरागो मम चैद्यादेरिवास्तु वैरं वा ।
येन त्वय्यच्छिन्ना स्मृतिसन्ततिरच्युतावतिष्ठेत ॥

अत्र चैद्यादेरिव वक्तुः भगवद्विषयकवैररूपदोषाभ्यर्थनम-विच्छिन्नतत्स्मृतिसंतानकारणत्वलक्षणगुणलालसयेति ध्येयम् ॥ अत्र 'द्वेषाच्चैद्यादयो नृपाः' इत्येतदनुसंधेयम् ॥

यथावा—

**यत्र क्वचा निहाका तावकतीर्थे भवत्वसावा-त्मा । तावकयोगादच्युत का हानिस्स्यात्ततः प्रस-व्यगतेः ॥ १७२७ ॥**

हे अच्युत! असावात्मा अयं चेतनः यत्रक्वचा तावके तीर्थे स्वामिपुष्करिण्यादौ निहाका गोधिकाख्यो जलजन्तुविशेषः 'नि-हाका गोधिका समे' इत्यमरः भवतु । ततः निहाकात्वप्राप्तावपि तावकयोगेन त्वदीयध्यानेन त्वदीयानां त्वदीयेन वा संबन्धेन वा तन्महिम्नेति यावत् । प्रसव्यगतेः अनुकूलसद्गतेः । 'प्रसव्यं वाच्यलिङ्गं स्यात् प्रतिकूलानुकूलयोः' इति मेदिनी । आत्मन इति शेषः । का हानिस्स्यात् न काऽपि हानिः किंतु श्रेय एव भवेदिति भावः । त्वत्संबन्धप्रभाव ईदृश इति तात्पर्यम् । पक्षे निहाकाशब्दः तावकेन योगेन उपायेन युक्त्या वा प्रसव्या प्रति-कूला गतिः स्थितिः तस्या इति पञ्चमी । युक्त्या उपायेन वा प्रातिलोम्येन पठनादिति यावत् । काहानि काहानीत्यानुपूर्वीमत् स्यात् । अस्मिन् पक्षे स्यादित्यत्र 'अनचि च' इति द्वित्वम् । अत्राप्यनुज्ञालंकारः पूर्ववदेव ॥

यथावा—

**संसारमेव दित्ससि कंसारे यदि तथैव भूया-न्नः । अपि जातु स एव स्यात्सारो ननु देवसंप-द्वियुक्तः ॥ १७२८ ॥**

हे कंसारे! त्वं नः संसारमेव अनादिकालादनुभूतमेवेति भावः। दित्ससि यदि इतःपरमपि दातुमिच्छसिचेत् तथैव भूयात्। अनतिलङ्घनीयं हि नियन्तुरशासनं नियन्तव्यवर्गेणेति भावः। तदाऽपि न किंचिदनिष्टमित्याह—अपि जात्विति। स एव संसार एव देवसंपदा—

"द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः॥

इत्युक्तप्रकारा दैवी संपत्। या हि 'अभयं सत्त्वसंशुद्धिः' इत्यादिना 'दैवी संपद्विमोक्षाय' इत्यगीयत। तया अवियुक्तः संयुक्तः अपि जातु सारस्स्यात् जातुसारस्स्यादपीति वा योजना। अपिस्संभावनायाम्॥

कर्मभिर्भ्राम्यमाणानां यत्रक्वापीश्वरेच्छया।
मङ्गलाचरितैर्दानैर्मतिर्नः कृष्ण ईश्वरे॥

इत्याद्युक्तरीत्या यदाकदाचा यत्रकचः तादृशयादृच्छिकादिसुकृतपरिणतिवशात्त्वयि भक्तिरुदियादेवेति तस्यापि सारत्वं संभवेदेवेति भावः। स ह्यपवर्गतुल्यकक्ष्यतयोच्यते—

त्वं चेत्प्रसीदसि तवास्मि समीपतश्चेत्
त्वय्यस्ति भक्तिरनघा करिशैलनाथ।
संसृज्यते यदि च दासजनस्त्वदीयः
संसार एष भगवन्नपवर्ग एव॥

इति। पक्षे हे देवेति संबोधनम्। स एव संसारशब्द एव संपद्वियुक्तः सं इत्याकारकपदेन विघटितः सारशब्द एव स्यादित्यर्थोऽपि चमत्कृतेरुपस्कुरुते। अत्र दोषरूपसंसाराभ्यर्थनं तत्र यदा

कदाचा दैवसंपदभिजातत्वादिगुणसंभवसंभावनयेति ध्येयम् । इयमप्यलंकृतिर्दीक्षितोपज्ञमेव ॥

इत्यलंकारमणिहारे अनुज्ञालंकारसरस्त्रिसप्ततितमः.

---

## अथ तिरस्कारसरः (७४)

---

**गुणस्य दोषसंबन्धाद्द्वेषश्चेत्सा तिरस्कृतिः ॥**

दोषविशेषानुबन्धाद्गुणत्वेन प्रसिद्धस्यापि द्वेषश्चेत् स तिरस्कारो नामालंकारः ॥

यथावा—

**मधुसूदन मम जात्वपि माहेन्द्रयस्संपदोऽपि मा भूवन् । यासु निमग्नो नर्छति यदृच्छया वाऽपि तावकस्मरणम् ॥ १७२९ ॥**

अत्र भगवद्विस्मरणदोषसंबन्धान्माहेन्द्रसंपत्सु गुणत्वेन प्रसिद्धास्वपि द्वेषः । अयमलंकारः पण्डितराजोपज्ञम् । स हि—"दोषविशेषानुबन्धादित्याद्युक्तरीत्या अमुं लक्षयित्वा अमुं च तिरस्कारमलक्षयित्वा अनुज्ञां लक्षयतः कुवलयानन्दकृतो विस्मरणमेव शरणं, अन्यथा—

भजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं
किमित्यमरसंपदः प्रमथनाथ नाथामहे ।

भवद्भवनदेहलीविकटतण्डुदण्डाहति-

स्फुटन्मकुटकोटिभिर्मघवदादिभिर्भूयते ॥

इति तदुदाहृते पद्ये तिरस्कारस्य स्फुरणानापत्तेः" इत्यभाणीत् ॥

इत्यलंकारमणिहारे तिरस्कारसरश्चतुस्सप्ततितमः.

---

## अथ लेशालंकारसरः (७५)

---

**गुणो दोषतया दोषो गुणत्वेनाथवा यदि ।**
**वर्ण्यते तमलंकारं लेशमाहुर्मनीषिणः ॥**

यत्र गुणोऽनिष्टसाधनतया दोषत्वेन, दोषश्चेष्टसाधनतया गुणत्वेन वर्ण्यते स लेशो नामालंकारः ॥

यथा—

**भूयस्सु समुल्लासिषु भूभृत्सु धरातले निरातङ्कम् । हरिधृतिफलमिदमहिधर तव यत्सर्वे शिरोऽधिरोहन्ति ॥ १७३० ॥**

अत्र प्रथमार्धे शैलान्तराणां भगवद्धारणाभावदोषस्य निरातङ्कोल्लासानुकूलतया गुणत्वं कल्पितम् । द्वितीयार्धे श्रीनिवासधारणगुणस्य सर्वजनकर्तृकशिरोधिरोहणकारणतया दोषत्वं कल्पितम् । अयं च निर्गुणेषु भूयस्सु भूपालेषु सुखवत्तयाऽवस्थितेषु निरतिशयौदार्यादिसुगुणशालिनो राज्ञः अर्थिजनकर्तृकसंमर्दादिक्लेशो भविष्यतीत्यप्रस्तुतव्यवहारपरिस्फूर्तिरूपसमासोक्त्यास्तुल्या

निन्दाभिव्यक्तिरूपया निन्दया स्तुत्यभिव्यक्तिरूपया व्याजस्तुत्या च पूर्वोत्तरार्धगतया संकीर्यते ॥

असहनमेव ज्यायस्सहिष्णुतावैभवं धिगस्तु रमे । सुखिनोऽन्ये तव तु सखी सर्वैस्सर्वंसहेत्यधः क्रियते ॥ १७३१ ॥

अत्रापि दोषगुणयोर्गुणदोषत्वेन वर्णनं, अर्थान्तरन्यासपरिष्कृतत्वं तु विशेषः ॥

यथावा—

सर्वगुणानां निधिरिति गर्वं मा गाः पयोनिधेस्तनये । यैरेव स्वजनयितुस्स्वच्छतमस्यापि मथनहेतुरभूः ॥ १७३२ ॥

अत्र गुणस्य दोषत्वेन वर्णनं शुद्धम् । न चायमलंकारः व्याजस्तुत्या उभयरूपया गतार्थ इति शङ्क्यं, मुखप्रतिपादितार्थवैपरीत्येनात्र सर्वत्र पर्यवसानविरहात् । न हि 'सर्वगुणानां निधिः' इत्यस्मिन् पद्ये दारिद्र्यात् खिन्नस्य कस्यचिल्लक्ष्मीगुणोपालम्भरूपे श्रियस्स्तुतौ तस्य तात्पर्यम् । अपितु स्वजनकमथनहेतुत्वेन निन्दायामेव । एवं 'असहनमेव ज्यायः' इति श्लोके भूमीतरेषां निन्दा न विवक्षिता किंतु सुखावस्थानं, सर्वसहाखेददर्शनदुःखितस्य वाक्येऽस्मिन् तदन्येषां निन्दाया अवक्तव्यत्वात् । प्रत्युत स्तुतेरेव वक्तुमुचितत्वात् । 'भूयस्तु समुल्लासिषु' इति श्लोके व्याजस्तुतिरस्तिचेदस्तु नाम, तस्यास्सावकाशत्वेन एतद्बाधनायोगात् ॥

प्रियतम एव भवत्यास्त्रिभुवनभिक्षौ स्थिते कुचेलसखे। सर्वजगद्दुर्विधतानिर्वापगतोऽम्ब गर्वितासि कथम्॥ १७३३॥

अत्र पर्यन्ते प्रतीयमानस्य भगवद्व्यतिरिक्तसकलजगद्दारिद्र्यनिर्वापणरूपस्य गुणस्य दोषत्वेनावर्णनात् दोषत्वेन वर्ण्यमानस्य भगवतस्त्रैलोक्यभिक्षुत्वकुचेलसखत्वानिराकरणदोषस्य गुणत्वेनाकल्पनाद्गुणदोषयोर्भिन्नविषयतयाऽवस्थानेन लेशस्य लेशरहिता व्याजस्तुतिरिति व्यक्तमेव साधकाशत्वम्। अतएव लेशोऽपि न व्याजस्तुतेर्बाधक इति प्रागुदाहृते 'भूयस्तु समुल्लासितु' इति पद्ये द्वयोरपि समावेश इत्यवधातव्यम्॥

इत्यलंकारमणिहारे लेशसरः पञ्चसप्ततितमः.

---

## अथ मुद्रालंकारसरः (७६)

---

### प्रकृतार्थपरैश्शब्दैर्मुद्रा सूच्यार्थसूचनम्।

विवक्षितार्थप्रतिपादनपरैश्शब्दैस्सूचनीयस्यार्थस्य सूचनं मुद्रालंकारः। अयमपि दीक्षितोपज्ञमेव। प्रकृतार्थपरेण पदेन तदेकदेशेन वा पदसमुदायेन पदैकदेशसमुदायेन वा तदुभयसमुदायेन वा याथाकथंचित् ज्ञापनीयार्थविशेषस्य ज्ञापनं मुद्रेति निर्गलितोऽर्थः। पदैकदेशस्तु प्रकृते अर्थवान्वा निरर्थकोवाऽस्तु। सूच्यार्थश्च प्रकृतोऽप्रकृतोवाऽस्तु। न तत्राभिनिवेष्टव्यम्॥

यथावा—

**भजमनसागोपेता नियतर्षिगणाः पदोर्भजन्ते याम् । भृगुजगणजां यतीड्यां विद्यामविषमजयां सुगीतिमिमाम् ॥ १७३१ ॥**

अत्र लक्ष्मीवर्णनपरे पद्ये गीतिवृत्तपरतयाऽर्थान्तरमपि विवक्षितम् । तत्र लक्ष्मीपरत्वे एवमर्थः—नियतर्षिगणाः नियताः नियमितेन्द्रिया एकाग्रमानसा इति यावत् । एकान्तिन इति वा । ये ऋषिगणाः आगोऽपेताः आगसः अपराधात् अपेताः निरपराधास्सन्त इत्यर्थः । 'अपेतापोढ' इति पञ्चमीसमासः । यां श्रियं पदोः चरणयोः भजन्ते सेवन्ते । भृगुजगणजां भृगुजः भृगुनाम्नः ऋषेः जातः यो गणः धातृविधातृप्रभृतितत्पुत्रपौत्रप्रमुखस्संतानवर्गः तस्मिन् जातां प्रादुर्भूतां—

देवौ धातृविधातारौ भृगोः ख्यातिरसूयत ।
श्रियं च देवदेवस्य पत्नी नारायणस्य या ॥

इति विष्णुपुराणोक्तेः । यतीड्यां यतिभिः मस्करिभिः ईड्यां स्तव्यां अविषमजयां अविषमः न्याय्यः सर्वसंप्रतिपन्न इति यावत् । जयः उत्कर्षो यस्यास्तां अतएव सुगीतिं गीयत इति गीतिः गानं शोभना गीतिः यस्यास्तां प्रशस्तकीर्तिमिति यावत् । इमां विद्यां आत्मविद्यां श्रियमित्यर्थः । 'आत्मविद्या च देवि त्वं विमुक्तिफलसाधनी । विद्यासहायवन्तं माम्' इत्यादिभिर्विद्याशब्देन श्रियेःऽभिधानात् । विद्येत्यत्र कार्यकारणयोरभेदोपचारः । मनसा भज उपास्वेति कस्यचिद्गुरोः कंचिदन्तेवासिनं प्रत्यनुशासनम् ॥

गीतिवृत्तपक्षे तु—यां गीतिं गोपेता: गसंज्ञकेन गुरुणा उपेताः युक्ताः अस्य अन्ते इत्येनद्यादि: अवसाने गुरुणा उपेता इत्यर्थः। ते च अनियताः क्रमनियमरहिताः यथायथं प्रयुक्ता इत्यर्थः।

ज्ञेयास्सर्वादिमध्यान्तगुरवोऽत्र चतुष्कलाः।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः॥

इति सर्वादिमध्यान्तगुरूणां चतुर्लघूपेतानां चतुर्लघुरूपगणान्तरसहितानामनियमेनार्यावृत्तेषु प्रयोगस्यानुशासनात्। अत्र द्विगुरुक एको गणः। आदिमध्यान्तगुरवः भगणजगणसगणास्त्रयः चतुर्लघुक एक इत्येवं पञ्चगणा यथासंभवमार्यादिषु प्रयोज्या इति कारिकार्थः। ते च कतीत्यत्राह—ऋषीति। ऋषिसंख्याका गणाः सप्तगणा इत्यर्थः। गोपेताश्च ते अनियतर्षिगणाश्चेति कर्मधारयः। ते च के इत्यत आह—भजसनला इति। भकारादिसंज्ञकाः। क च ते प्रयोज्या इत्यत आह—पदोरिति। पदोः श्लोकचतुर्थांशयोः पूर्वोत्तरार्धरूपयोरर्धयोः पादयोरित्यर्थः। 'पद्न्' इति पादशब्दस्य पदादेशः। भजन्ते अयन्ते। अथ चतुष्कलानां गणानामनियमेन यथायथं प्राप्तौ नियमयति—भृगुजेति। भृगुजः परशुरामः स च मत्स्यादिभगवदवतारेषु षष्ठतया गणितः। तेन षष्ठ इति लभ्यते। भृगुजः षष्ठः गणः जः जसंज्ञकः यस्यास्तां भृगुजगणजां जगणात्मकषष्ठगणामित्यर्थः। अनेन षष्ठेन जगणेन भाव्यमिति नियम उक्तः। अविषमजयां विषमे विषमांशे विषमगणस्थाने जं जगणं यातीति विषमजयाः यातेः क्विप्। सा न भवतीत्यविषमजया तां तथोक्तां प्रथमतृतीयादिविषमांशेषु जगणशून्यामित्यर्थः। अनेन विषमस्थानेषु जगणो न प्रयोज्य इति नियम उक्तः। यतिभिः विच्छेदैः 'विच्छेदो यतिसंज्ञकः' इत्यनुशासनात्। ईड्यां

रमणीयविच्छेदयुतामित्यर्थः । 'कृतयतिशोभाम्' इति तल्लक्षणे वक्ष्यमाणत्वात् । इमां सुगीतिं शोभनां गीतिं गीत्याख्यामार्यामित्यर्थः । विद्यां जानीयाम् । विदेर्लिङुत्तमैकवचनम् । अत्र—

लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः ।
षष्ठोयं न लघू वा प्रथमेऽर्धे नियतमार्यायाः ॥

इत्युक्तार्याप्रथमार्धलक्षणस्यैव उत्तरार्धेऽपि विद्यमानत्वात् ।

अर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः ॥

इत्युक्तं गीतिलक्षणं सर्वमपि सुस्पष्टम् ॥

अत्र श्रीलक्ष्मीवर्णनपरेण सुगीतिमिति पदेन अस्य वृत्तस्य गीतिनामतायाः भजमनसा इत्यादिना तद्गणनियमादीनां च सूच्यानामर्थानां सूचनमिति मुद्रालंकारः प्रकृताप्रकृतश्लेषोज्जीवितः । न चात्र प्रकृताप्रकृतश्लेष एव न मुद्रालंकार इति वाच्यं, श्लेषसद्भावेऽपि सूच्यार्थसूचनस्यापि स्फुटतया मुद्रालंकारस्य निरर्गलत्वात् । नाप्यस्य मुद्रालंकारस्य श्लेषतो विविक्तविषयदौर्लभ्यभ्रमः कार्यः, अनुपदमेव विविक्तस्य विषयस्य दर्शयिष्यमाणत्वात् । तस्मादत्र श्लेषमुद्रालंकारयोस्संकर एवेति दिक् ॥

यद्यप्यत्रालंकारग्रन्थे वृत्तनाम्नोऽवश्यं नास्ति सूचनीयत्वं, तथाऽप्यस्य पद्यस्य एवंविधलक्षणाभिन्नलक्ष्यघटितच्छन्दश्शास्त्रमध्यपाठे तस्य सूचनीयत्वं संभवतीति लक्षणानुगतिः कार्या । अत एव—

सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।
नित्यम्बगुर्वी तरुणी दृग्युग्मविपुला च सा ॥

अत्र नायिकावर्णनपरेण युग्मविपुलापदेन अस्यानुष्टुभो युग्मविपुलानामस्वरूपसूच्यार्थसूचनं मुद्रा । यद्यप्यत्र ग्रन्थे वृत्त-

नाम्नो नास्ति सूचनीयत्वं, तथाऽप्यस्योत्तरार्धस्य लक्ष्यलक्षणयुक्तच्छन्दश्शास्त्रमध्यपातित्वे तस्य सूचनीयत्वमस्तीति तदाभिप्रायेण लक्षणं योज्यम्" इति कुवलयानन्दग्रन्थस्संगच्छेत। अत्र छन्दश्शास्त्रमध्यपातित्वेनेति तृतीयान्ततया केषुचित्कोशेष्ववर्वाक्तनेषु दृश्यमानः पाठोऽस्वच्छः, भूयस्सु प्राचीनकोशेषु मध्यपातित्वे इति सप्तम्यन्तपाठस्यैव दर्शनात् तथैव तद्व्याख्यायां रसिकरञ्जन्यां व्याख्यातत्वाच्च। तथाच तद्ग्रन्थः—"नन्वत्र तरुणीवृत्तान्तवर्णनप्रस्तावे वृत्तस्यालक्षणीयतया तन्नाम्नस्सूचनीयत्वाभावान्नेह मुद्रालंकार इत्याक्षिपति—यद्यपीति। सत्यं, नात्र वृत्तनाम सूचनीयं, तथाऽपि 'यस्यां लस्सप्तमो युग्मे सा युग्मविपुला मता' इति विपुलालक्षणोत्तरार्धे यदि 'नितम्बगुर्वी तरुणी' इत्युत्तरार्धमुदाहरणं भवेत् तदा तत्र वृत्तस्य सूचनीयत्वमस्तीत्यभिप्रेत्यात्र मुद्रालंकारोदाहरणमिति परिहरति—तथाऽपीति"। एतेन छन्दश्शास्त्रमध्यपातित्वेनेति तृतीयान्तपाठमेव बहुमन्यमानाः 'नितम्बगुर्वी' इत्याद्युत्तरार्धस्य लक्ष्यलक्षणयुक्तच्छन्दश्शास्त्रमध्यपातिन एवात्र लक्ष्यतयोदाहृतत्वात्तादृशस्यैव प्रस्तुतसूच्यार्थसूचिनो मुद्रालंकारत्वं न तु तदन्यकाव्यान्तर्गतस्याप्रस्तुतसूच्यार्थसूचनस्यापीत्याग्रहाना: केचित्परास्ताः। सति च तृतीयान्ततया पाठे उपदर्शितरीत्या व्याख्यानव्याख्येययोरन्योन्यमुखानवलोकनापत्तेः।

येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः।
प्रायस्त एव तेषामितरेषामभिनवा विरच्यन्ते॥

इति जयदेवप्रणीतचन्द्रालोकादृश्यमानानामलंकाराणां कुवलयानन्दकारैरेव लक्ष्यलक्षणयुक्तश्लोकप्रणयनस्य प्रतिज्ञाततया अत्र

ग्रन्थान्तरगतपद्यघटनावाचोयुक्तेरयुक्तत्वात्। तादृशलक्ष्यलक्षणयुक्तच्छन्दोग्रन्थस्याप्रसिद्धेश्च। वस्तुतस्तु प्रकृतार्थस्यैव सूचनं मुद्रालंकार इति परमाग्रहः। प्रकृतस्य वा अप्रकृतस्य वा सूच्यस्यार्थस्य सूचनं मुद्रालंकार इत्येव ग्राह्यम्। 'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः' इति हि तच्छरीरम्। तथाच कवि संरम्भानुरोधेन तादृशलक्ष्यलक्षणयुक्तप्रबन्धानन्तःपातित्वेऽपि तदतिरिक्तकाव्येषु यत्रयत्र 'कृत्वा हाटकताटकेयहरिणे शार्दूलविक्रीडितम्। पर्यायेण स्तनकलशयोरङ्गुळीयं मदीयम्' इत्यादौ अप्रकृतवृत्तालंकारादिसूचनेऽप्यक्षत एवायमलंकारः। अन्यथा रामादिचरितं ग्रथयितॄणां कविकुलाग्रयातॄणां महता प्रयत्नेन यत्रक्वा वृत्तालंकारादिसूचकशब्दप्रयोगवैचित्र्यवैयर्थ्यापत्तेः। अलंकारकौस्तुभकृतो बुक्कपत्तनवेंकटार्यास्तु—

> प्रकृतार्थपरैश्शब्दैः कविनाऽप्रकृतं यदि।
> सूच्यं सूच्येत जगदुस्तदा मुद्रामलंकृतिम्॥

इत्यप्रकृतसूच्यार्थसूचनमेव मुद्रेत्यमुमलंकारं लक्षयन्तः—

> 'नीलश्रीरलकेषु शङ्खगरिमा कण्ठे कुचे माकरी
> रेखा कुन्दवरद्युतिस्स्मितसुधाकान्तेषु दन्तेषु च।
> पादौ कच्छपभूषितौ करयुगं यस्यास्सपद्मं महा-
> पद्माऽऽनन्दमयी मुकुन्दरमणी सद्यः प्रसद्यान्मम॥

इत्युदाहृत्य 'अत्र नीलादिशब्दैर्निधिनवकसूचनम्' इत्यप्रस्तुतं निधिनवकमेवासूसुचन्। न हि लक्ष्मीवर्णनप्रस्तावे निधिनवकसूचनं प्रस्तुतम्। अन्यत्सर्वं प्रपञ्चितं हंससंदेशरसास्वादिन्यां 'पर्यायेण स्तनकलशयोः' इत्यत्रास्माभिः॥

यथावा—

हारसमेतो भोगी राहोः कालो रविप्रवेकेषु ।
गगनचराणां वारेष्वास्तेऽन्तर एष सन्ततमरिष्टः ॥

हारेण वैजयन्तीरूपेण समेतः भोगी निरतिशयभोगवान् भूम्नि प्रशंसायामतिशयने वा मत्वर्थीयः । राहोः कालः शत्रुः भगवान् रविप्रवेकेषु आदित्यादिषु गगनचराणां दिविषदां ग्रहाणां च वारेषु समूहेषु वासरेषु च । अन्तरः अन्तस्स्थितः 'य एषोऽन्तरादित्ये । य आदित्ये तिष्ठन्नादित्यादन्तरः । सर्वान्तरः' इत्यादिश्रुतेः । आस्ते । एषः सर्वान्तर्यामितयाऽवस्थितोऽपि संततं नित्यं रिष्टं अशुभं तन्नास्त्यस्येत्यरिष्टः अपहतपाप्मेत्यर्थः । सर्वान्तर्यामित्वेऽपि तद्गतदोषगन्धासंस्पृष्ट इति भावः । अत्रादित्यादिवासरेषु राहुकाल-हारसमेतोभोगीति कचटादिवर्णज्ञाप्यसंख्याक्रमेणाऽष्टमद्वितीयाद्य-र्धयामपरिमाण आस्ते । तद्यथा रविवारे अष्टमोऽर्धयामो राहुः कालः । इन्दुवारे द्वितीयोऽर्धयामस्स इत्यादि द्रष्टव्यम् । स च संततमरिष्टः कार्येष्वशुभद इति ज्योतिश्शास्त्रमर्यादायास्सूच्याया-स्सूचनम् ॥

यथावा—

नतसमनवनिर्निद्रां नलिनेक्षणहृदयवसतिम-क्षुद्राम् । कामपि करुणामुद्रां पथ्यामार्यां श्रये भद्राम् ॥ १७३६ ॥

अत्र पथ्यामार्यामिति पदाभ्यामर्थबद्धचामस्य पद्यस्य—

त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्याश्छन्दोविद्भिस्समाख्यातम् ॥

इत्युक्तलक्षणपथ्यार्यानामत्वरूपसूच्यार्थसूचनम् ॥

एवं 'कामपि करुणामुद्राम्' इत्यत्र मुद्रापदेनास्मिन् पद्ये प्रतिपादितस्यालंकारस्योक्तलक्षणमुद्रानामत्वसूचनमर्थवत्पदैकदेशेनेत्यन्याऽपि मुद्रा ॥

यथावा—

त्वद्दीप्तिधूतरोचिस्तटिल्लता क्वापि हन्त जीमूते । लीनाऽपि भीतिभारात्पयोधिनन्दिन्यभूच्चपला ॥ १७३७ ॥

क्वापि जीमूते जलदे पर्वते च 'जीमूतौ मेघपर्वतौ' इत्यमरः । अत्र चपलेत्यर्थवता श्लिष्टेन पदेन अस्य पद्यस्य—

उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ।
चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥

इति लक्षितगुरुद्वयमध्यगजगणात्मकद्वितीयचतुर्थगणवदुभयार्धशालिचपलाख्यार्यानामतालक्षणसूच्यार्थसूचनम् ॥

यथावा—

यस्य न करुणालेशस्तस्यानन्तं वृषाचलेश सुखम् । भजसि कृपाविवशस्त्वं परदुःखनिराचिकीर्षया क्लेशम् ॥ १७३८ ॥

अत्र करुणालेशवैधुर्यरूपदोषस्यानन्तसुखवत्त्वरूपगुणत्वकल्पनं कृपापारवश्यरूपगुणस्य परदुःखनिराचिकीर्षानिमित्तक्लेशवत्तारूपदोषत्वकल्पनं चेत्यनुपदोक्तलक्षणलेशालंकारः । स च अनर्थकपदैकदेशरूपलेशशब्देन तन्नाम्नो ज्ञापनीयस्य ज्ञापनम् ॥

यथावा—

नवनलिनाक्षः फणिगिरिदुर्गनिवासे निसर्गतः कुतुकी। कृष्णघनजिष्णुरुचिराकृतिस्स लक्ष्मीपतिश्चिरं जीयात् ॥ १७३९ ॥

अत्र पादचतुष्टयाद्यवर्णयुग्मरूपार्थवत्पदैर्मिलितैः—
'नवदुर्गकृष्णकृतिः' इति प्रबन्धकर्तृनाम्नस्सूचनीयस्य सूचनम्॥

अत्र नक्षत्रमालादिस्तुतिनिवहकेनाप्यक्षुण्णचरी काऽपि श्रीहयग्रीवदेवदिव्यमहिषीविषया अलंकरणमालिकाख्या बवबालवादिकरणनामसूचनी अस्माभिरेव प्रणीता स्तुतिरुदाह्रियते। तस्या इमे आद्ये पद्ये—

कमलवनावलिभोग्यं कलशपयोराशिराजसौभाग्यम्। किमपि हयाननभाग्यं कलयतु मां स्वगुणविनुतिकृतियोग्यम् ॥ १७४० ॥

हरणायाखिलविपदां करणान्येकादशापि विनियम्य। श्लोकैरेकादशभिर्लोकेशित्रीं स्तुवे प्रसीदतु सा ॥ १७४१ ॥

एकादशसंख्याकानि करणानि इन्द्रियाणि। पक्षे बवबालवेत्यादिचरस्थिरसंज्ञकानि करणानि तान्यप्येकादशसंख्याकान्येव। विनियम्य विषयेभ्यः प्रत्याहृत्य। पद्यानामेकदेशेषु ग्रथित्वा च। अत्र करणान्येकादशापि विनियम्येति पदैः श्लिष्टैरर्थवद्भिः वक्ष्यमाणस्तुतिपद्येषु क्रमेण करणनाम्नां सूचनं भविष्यतीति सूचितम्॥

अंब वधूमणि भवतीमम्बुरुहाक्षोऽपि वक्षसि बिभर्ति । किं बहुनाऽखिलजगतां त्वं बहुमान्या सुधाम्बुनिधिकन्या ॥ १७४२ ॥

अत्र अंबवधू इतिपदैकदेशाभ्यां अनर्थकाभ्यां बवकरणनामरूपसूच्यार्थस्य प्रत्यायनम् ॥

निरुपमवरतमसुगुणाङ्कुरनिकुरुंबालवालभूतां त्वाम् । तुरगवदनस्य तरुणीं तरुणाम्बुजलोचनां श्रये शरणम् ॥ १७४३ ॥

अत्र निकुरुम्बालवालेत्यनर्थकपदैकदेशाभ्यां बालवकरणनामसूचनम् ॥

शुभदायकौ लवणिमप्रभवौ ननु जननि तव विदितविभवौ । पादौ वितीर्णमोदौ श्रीदौ स्यातां ममाब्जदायादौ ॥ १७४४ ॥

लवणिमा लावण्यं 'लवणिमगुणनार्णायस्तराम्भोधिवेणी' इति शृङ्गारतरङ्गिणीप्रयोगात् । अत्र दायकौ लवणिमेत्यनर्थकपदैकदेशाभ्यां कौलवकरणनामसूचनम् ॥

हरिदर्शनसविकसनं हारि ममामोदि षट्पदोल्लसनम् । हृदयाम्बुजं शरण्या हयमुखदयितैतु ललितलावण्या ॥ १७४५ ॥

हरेः भगवतः भानोश्च दर्शनेन सविकसनं उन्निद्रं उल्लासि च । हारि मनोहरं आमोदि प्रमोदवत् सुरभि च । उल्लसन्त्यस्मिन्नि-

-युल्लसनम् । षड्घ्रिरूपस्य शरणागतिमन्त्रस्य षट्पदानां भ्रमराणां च उल्लसनम् । अन्यत्सुगमम् । अत्र दायैतेतु ललितेत्यर्थवाद्भिरर्थकप-दैकदेशसमुदायेन तैतुलकरणनामसूचनम् ॥

शिशिरमयूखावरजं वशितहयग्रीवममृतसाग-रजम् । भजतां भवभरतापं नयतां नः किमपि धाम तल्लोपम् ॥ १७४६ ॥

शिशिरमयूखः अवरजः यस्य तत्, भवभरतापं लोपं नयता-मित्यन्वयः । अत्र सागरजमित्यनर्थकेन पदैकदेशेन गरजकरणना-म सूचितम् ॥

कश्चित् वणिग्जन इव न्यासधनी मौग्ध्यमम्ब तव वीक्ष्य । त्वयि विक्रीयाणुतमं स्वमहो लभते महाविभूतिं त्वत् ॥ १७४७ ॥

न्यासधनी भरन्यासधनवान् न्यासरूपधनवांश्च । न्यासो नाम केनचित् रक्षणायान्यवशे उपनिहितं वस्तु 'पुमानुपनि-धिर्न्यासः' इत्यमरः । न्यस्यत इति न्यासः कर्मणि घञ् । मौग्ध्यं सौन्दर्यं मौढ्यं च अणुतमं अणीयस्स्वरूपं अत्यल्पं च । स्वं आत्मानं धनं च । विक्रीय विनिमितं कृत्वा च महाविभूतिं श्रीनि-वासं महतीं सम्पदं च लभते । अत्र वणिग्जेत्यनर्थकेन पदैक-देशेन वणिग्जकरणनामसूचनम् ॥

भुवनावननिर्निद्रा सचलाशननाथकृतनतिकृ-पार्द्रा । ध्रुवतात्काचिन्मुद्रा भवतापं भव्यदायिनी भद्रा ॥ १७४८ ॥

अत्र भद्राशब्देनार्थवता भद्रकरणनामसूचनम्। मुद्रेति मुद्रालंकारस्यापि सूचनमिति विशेषः ॥

शकुनिध्वजाविभाज्यं सकलं तत्किमपि तस्य साम्राज्यम्। दत्तां विभवं प्राज्यं तत्तादृशमखिलविबुधपरिपूज्यम् ॥ १७४९ ॥

अत्र शकुनीत्यर्थवत्पदैकदेशेन शकुनिकरणनाम्नस्सूचनम् ॥

सुचतुरमतिरपि यस्ते न चरणकमलद्वयं नमेज्जातु। अचतुष्पात्खर एव स न च विशेषोऽत्रास्ति वचननिचयैः किम् ॥ १७५० ॥

अत्र चतुष्पादिति पदैकदेशेनार्थवता चतुष्पात्करणनामसूचनम् ॥

नागवरभोगबाहौ रागवती भगवतीह वागीशे। द्रागवतात्प्रचुरभवोद्वेगवतोऽस्मान् कृपाङ्करी काऽपि ॥ १७५१ ॥

अत्र नागवरेति पदैकदेशभूतेन नागवेति वर्णत्रयेण नागवालयकरणनामसूचनम् ॥

भवभरतपर्तुतापा भवन्ति तेऽमी चिरं न साटोपाः। कमलापाङ्गा मानसकेकिंस्तु घ्नन्त्यमून् घनस्मेराः ॥ १७५२ ॥

हे मानसकेकिन्! चित्तमयूरेति संबुद्धिः। तेऽमी भवभरतपर्तुतापाः ग्रीष्मागमोष्माणः चिरं साटोपाः सावष्टम्भाः न भवन्ति। कुत इत्यत आह—कमलेति। घनस्मेराः प्रावृषेण्यजलदमनोहराः। इदं विशेषणं तापाटोपलोपनैपुण्याभिप्रायगर्भम्।

कमलायाः श्रियः अपाङ्गाः कटाक्षाः अमून् तापान् घ्नन्ति। तुशब्दोऽवधारणे 'स्युरेवंतुपुनर्वैवेत्यवधारणवाचकाः' इत्यमरः। घ्नन्त्येवेत्यर्थः। अतस्ते न चिरं स्थास्यन्तीति भावः। अत्र केकिंस्तुघ्नन्तीत्यानुपूर्व्या अर्थवन्निरर्थकपदैकदेशोभयसमुदायरूपया किंस्तुघ्नेति करणनामसूचनम्॥

कल्याणगुणस्यूतां कान्त्याश्लेषेण सन्ततं स्फीताम्। तनुतां हृद्यां जगतां माताऽलंकरणमालिकामेताम्॥ १७५३॥

जगतां माता श्रीः कल्याणगुणैः सुवर्णतन्तुभिः पक्षे मङ्गलैः श्रियः गुणैः सौशील्यवात्सल्यादिभिः स्यूतां कान्तेः आश्लेषेण पक्षे कान्त्या 'अत्युज्ज्वलत्वं बन्धस्य काव्ये कान्तिरितीष्यते' इत्युक्तलक्षणेन श्लेषेण 'मिथस्संश्लिष्टपदता श्लेष इत्यभिधीयते' इत्युक्तलक्षणेन च काव्योत्कर्षहेतुभूतेन गुणेन स्फीतां एतां अलंकरणमालिकां भूषणमालात्वेनाध्यवसितां स्तुतिं हृद्यां वक्षस्स्थां हृदयप्रियां च तनुताम्। अत्र अलंकरणमालिकामिति पदेन अस्याः स्तुतेः बवबालवादिकरणमालानामघटितत्वरूपसूच्यार्थसूचनम्॥

अस्याः स्तुतेरयमन्तिमः श्लोकः—

एषा महिशूरेश्वरकृष्णक्ष्मापालरत्नवंशगुरोः। उदिता कृतिर्विजयतां श्रीकृष्णब्रह्मतन्त्रपरकालात्॥ १७५४॥

यथावा—

संयोगोऽग्रे पादे भवतो वर्णस्य कस्यचिद्वा

**यस्स्यात् । युक्तोऽयमहिगिरीश्वर क्रमोऽत्र पर-तस्तु गुरुरपि लघुश्च स्यात् ॥ १७५५ ॥**

हे अहिगिरीश्वर! अग्रे परार्थ्ये 'परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम्' इत्यमरः । कस्यचिद्वा यस्यकस्यापि वर्णस्य ब्राह्मणादेः भवतः पादे चरणे यः संयोगः प्रपत्तिकृतस्संबन्धः स्यात् । अयं अत्र अस्मिन् लोके युक्तः उचितः क्रमः श्लाघनीया परिपाटिः 'शक्तौ चरणविक्षेपे परिपाट्यामपि क्रमः' इति रत्नमाला । अयं क्रमः युक्तः इति वा योजना । परतस्तु त्वदितरस्मिन् देवे संबन्धस्तु गुरुरपि श्रमाधिक्येन महानपि लघुः अल्पश्च स्यात् । चशब्दोऽवधारणे । अश्लाघ्य एव भवेदित्यर्थः । पक्षे पादे पद्यचतुर्थांशे अग्रे आदौ भवतः विद्यमानस्य कस्यचिद्वा यस्यकस्यापि वा वर्णस्य ककारादेरक्षरस्य यस्संयोगः 'हलोऽनन्तरास्संयोगः' इत्युक्तलक्षणं संयुक्तत्वं स्यात् भवेत् । युक्तः संयुक्तः अयं संयोगः क्रमः क्रमसंज्ञकः । अत्र अस्मिन् क्रमसंज्ञके वर्णे परतस्तु परत्र विद्यमाने तु गुरुरपि 'संयोगे गुरु' इत्युक्तलक्षणसंयुक्तवर्णपरकत्वहेतुकगुरुत्वशाली पूर्ववर्णोऽपि लघुश्च 'ह्रस्वं लघु' इत्युक्तलक्षणलाघवशाल्यपि स्यात् । लघुश्चेत्यनेन क्वचिदेवेति ज्ञाप्यते । यथोक्तं—

पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः ।
परस्थितेन तेन स्याल्लघुताऽपि क्वचिद्गुरोः ॥

इति । यथा अत्रैव पद्ये चतुर्थपाद दिमवर्णे संयोगरूपे विद्यमानेऽपि तत्पूर्ववर्णस्य लघुत्वमवश्यमेष्टव्यम् । 'अल्पव्ययेन सुन्दरि ग्राम्यजनो मृष्टमश्नाति' इतिवत् । अन्यथा छन्दोभङ्गादिति

द्रष्टव्यम्। अत्र क्रम इति पदेन चतुर्थपादादिमभूतेन स्वादिभूतककाररेफसंयोगस्य एतत्पद्यप्रदर्शितलक्षणलक्षितस्य क्रम इति संज्ञेति सूचनीयोऽर्थस्स्वानतिरिक्तोदाहरणेन तादृशसंज्ञाप्रयोजनेन च सह सूचितः। इयं च प्रकृताप्रकृतगोचरश्लेषेण प्रागुक्तोल्लासेन च संकीर्यत इति विशेषः। तुरीयपादादिमवर्णस्य लघुतरप्रयत्नेनोच्चारणे पद्यस्य विसंष्ठुलताऽपि न दृश्यत इति ध्येयम्। एवं नवरत्नमालाप्रबन्धे तत्तद्रत्ननामनिवेशनेन तत्तद्रत्नजातिसूचनम्। नक्षत्रमालाप्रबन्धे अश्व्यादिदेवतानामभिर्नक्षत्रनामसूचनमित्यादावयमेवालंकारः। एवं नाटकेषु वक्ष्यमाणार्थसूचनेष्वपीति दीक्षिताः॥

इत्यलंकारमणिहारे मुद्रालंकारसरष्षट्सप्ततितमः.

---

## अथ रत्नावलीसरः (७७)

---

**प्रसिद्धसहपाठानामर्थानां न्यसनं यदि।**
**रत्नावली सा विख्याता सक्रमाक्रमताभिदा॥**

लोकवेदादिप्रसिद्धसहपाठानामर्थानां न्यसनं रत्नावलीनामालंकारः। सा च सक्रमत्वाक्रमत्वाभ्यां द्विप्रकारा। सक्रमत्वं च प्रसिद्धसहपाठानामर्थानां क्रमेण न्यसनम्। अक्रमत्वं च प्रसिद्धक्रमे केषांचिदर्थानां वैकल्येन कथनं वैपरीत्येन कथनं सहपाठसद्भावेऽपि क्रमप्रसिद्धिराहित्यं च। प्रकारद्वयेऽपि क्रमिकाणामर्थानां प्रकृतान्वयित्वतदभावाभ्यां प्रत्येकं द्वैधो। प्रकृतान्वयित्वं

च यथाकथंचित्प्रकृतोपमानोपरञ्जकतादिप्रकारेण। तदनन्वयित्वं च क्रमेण तत्तन्नाम्नां यथाकथंचित् श्लेषभङ्ग्या मुद्रालंकारविधया वा निवेशनेन भवति। सर्वमिदमुदाहरणेषु स्पष्टीभविष्यति' इयमपि दीक्षितोपज्ञमेव ॥

तत्र प्रकृतान्वयवती सक्रमा यथा—

विधिरिव सकलागमवान् हरिरिव पीताम्बरो विभाति तराम्। गिरिश इव शिरसि वहते सरसिजनयनाङ्घ्रिसरितमहिशैलः ॥ १७५६ ॥

सकलाः अगमा तरवः आगमाः वेदाश्च तद्वान्। पीतं अम्बरं येन स तथोक्तः 'निसर्गोदग्रेण प्रसभमुरसा पीतगगनः' इतिवत् स्वाभोगेनाक्रान्तगगन इत्यर्थः। सरसिजनयनः हरिः तदङ्घ्रिजां सरितं आकाशगङ्गां गङ्गांच। स्पष्टमन्यत्। अत्र सृष्टिस्थितिलयकर्तृतया पुराणादौ प्रसिद्धसहपाठानां ब्रह्मविष्णुमहेश्वराणां त्रयाणामुपमानविधया प्रकृतान्वयिनां क्रमेण न्यसनम् ॥

यथावा—

क्षितिरिव तितिक्षुरासीस्सलिलमिवाप्यायनोऽनल इव त्वम्। तेजस्वाननिल इव व्यापी वियदिव विनिर्मलश्शौरे ॥ १७५७ ॥

अत्र उपमानरीत्या प्रकृतान्वयिनां 'क्षित्यप्तेजोमरुद्व्योम' इति पुराणादौ सहपठितानां पञ्चानां महाभूतानां क्रमेण न्यासः ॥

सैव उपरञ्जकतया प्रकृतान्वयिनी यथा—

अङ्कुरिता सुकृतवशात्पल्लविता देव तव गुण-

श्रवणात् । सुमिता च तदामननात्फलिता दृष्ट्या च मामिका भक्तिः ॥ १७५८ ॥

सुमिता पुष्पिता । दृष्ट्या दर्शनेन । अत्र भक्तौ लतात्वारोपः । अत्राङ्कुरितेत्यादिना अङ्कुरपल्लवकुसुमफलानां चतुर्णां लोकसिद्ध-क्रमाणामुपरञ्जकतया विन्यासः ॥

स्वामी त्वं श्रीसचिवस्सकलसुहृत्सर्वहृद्यकोशस्थः । चक्रधर तदपि तव पदमतिदुर्गं त्वत्प्रसादबलविधुरैः ॥ १७५९ ॥

हे, चक्रधर! चक्रशब्देन राष्ट्रमपि गृह्यते 'चक्रं राष्ट्रेऽपि' इत्यमरः । त्वं स्वामी सर्वेश्वरः 'एष सर्वेश्वरः' इत्यादिश्रुतेः । अनेन परत्वमुक्तम् । पक्षे कश्चिद्राजेत्यर्थः । श्रीः लक्ष्मीः सचिवा सहायो यस्य स तथोक्तः 'मन्त्री सहायसाचिवौ' इत्यमरः । लक्ष्म्यास्सचिव इति वा । पक्षे श्रीयुक्तसाचिवो मन्त्री यस्य स तथोक्तः । अनेन पुरुषकारसांनिध्येन परमदयालुता सूचिता । सकलसुहृत् । 'निवासश्शरणं सुहृद्गतिर्नारायणः' इति श्रुतेः । अनेन सौलभ्यमुक्तम् । पक्षे सकलाः कलासहिताः राजनयनिपुणा इत्यर्थः । तादृशाः सुहृदो मित्राणि यस्य स इत्यर्थः । सर्वेषां हृद्यः हृदयस्थितः कोशः तस्मिन् तिष्ठतीति तथोक्तः 'पद्मकोशप्रतीकाशम्' इत्यारभ्य 'तस्मिन् सर्वं प्रतिष्ठितम्' इति श्रुतेः । अनेन वात्सल्यं व्यञ्जितम् । स एष वात्सल्याख्यो गुणः कठवल्ल्यामुक्तः—

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥

इति । अस्याश्श्रुतेरर्थश्च उक्तविशेषणैः प्रत्यभिज्ञाप्यते । वात्सल्यं नाम दोषतिरस्कारिणी प्रीतिः । पक्षे सकलजनहृदयंगमहिरण्यादिकोशमध्यवर्तीत्यर्थः । एवं सकलचेतनहृदयस्थोऽपि त्वं दुर्दर्श इत्याह—तदपीत्यादि । तदपि तथाऽपि तव पदं स्वरूपं त्वत्प्रसादबलविधुरैः जनैः दुर्गं अधिगन्तुमशक्यं 'तं दुर्दर्शं गूढमनुप्रविष्टं, तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुः' इत्यादिश्रुतिभ्यः । पक्षे तत् प्रसिद्धं तव पदं स्थानमपि त्वत्प्रसादेन बलेन सैन्येन च विधुरैः दुर्गं गन्तुमशक्यमित्यर्थः । अत्र 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च' इति प्रसिद्धसहपाठानां स्वाम्यादीनामुपरञ्जकतया प्रकृतान्वयिनां सप्तानां क्रमिको न्यासः ॥

यथावा—

**हरिरेष शुचिर्धर्मश्श्रितरक्षश्श्रीः पतिश्च भुवनानाम् । परिपाति जगत्प्राणः पुण्यजनेड्यश्शिवश्च माद्दक्षान् ॥ १७६० ॥**

एष हरिः इन्द्रः भगवांश्च । शुचिः वह्निः अपहतपाप्मा च । धर्मः यमः । पक्षे 'कृष्णं धर्मं सनातनम्' इत्युक्तरीत्या धर्मस्वरूपः । श्रिता रक्षसां श्रीः येन सः नैऋत इत्यर्थः । पक्षे श्रितान् रक्षतीति श्रितरक्षी । कर्मण्यणि 'टिड्ढ' इति ङीप् । तादृशी श्रीः लक्ष्मीः यस्य स तथोक्तः । अनदीसंज्ञकत्वान्न कप् । यद्वा भगवत्पक्षे धर्मश्श्रितरक्षश्श्रीरित्येकमेव पदम् । धर्मं न्यासरूपं श्रितान् रक्षतीति धर्मश्श्रितरक्षी तादृशी श्रीः यस्य सः । अस्मिन् पक्षे धर्मश्श्रितेत्यत्र शकारस्य 'अनचि च' इति वैकल्पिकं द्वित्वम् ।

भुवनानां अपां पतिः वरुणः। पक्षे लोकानामधिनाथः। जगत्प्राणः समीरणः जगदुज्जीवयिता च।

न प्राणेन नापानेन मर्त्यो जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुभौ श्रितौ॥

इति श्रुतेः। पुण्यजनेश्वरः कुबेरः सुकृतिजनस्तुतश्च। शिवः शर्वः मङ्गळमूर्तिश्च 'शाश्वतं शिवमच्युतम्' इति श्रुतेः। अत्र प्रसिद्धसहपाठानामष्टानामिन्द्रादिलोकपालानामुपरञ्जकतया प्रकृतान्वयिनां क्रमेण न्यसनम्। उपरञ्जकता चारोप्यमाणता। तदुक्तं— 'उपरञ्जकतामेति विषयी रूपकं तदा' इति। अत्र हि श्रीनिवासस्य इन्द्रादितया उपरञ्जनम्॥

यथावा—

**भास्वान् राजा पार्थिव एष बुधो वाक्पतिश्च काव्यप्रथितः। मैत्र्याख्यातश्चोत्तम उच्छ्रितजयकेतुराश्रितस्त्वां भगवन्॥ १७६१॥**

पृथिव्यां विदितः पार्थिवः 'तत्र विदितः' इत्यधिकारे 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यञ्। पक्षे पृथिव्यां जातः पार्थिवः। भौम इत्यर्थः। काव्येन प्रथितः स्वविषयकप्रबन्धप्रख्यातकीर्तिरित्यर्थः। स्वप्रणीतेन काव्येन प्रख्यात इति वा पक्षे काव्य इति प्रथितः। मैत्र्या सर्वभूतसुहृत्तया ख्यातः। अन्यत्र मित्रस्य भानोः अपत्यं मैत्रिः मैत्रिरिति आख्यातः रविसुतश्शनिरित्यर्थः। उत्तमः श्रेष्ठः। पक्षे उन्नतं च तत् तमः राहुरित्यर्थः। 'तमस्तु राहुः' इत्यमरः। उच्छ्रितः जयकेतुः जयध्वजो यस्य सः। पक्षे उच्छ्रितजयश्चासौ केतुश्च। शिष्टं स्पष्टम्। अत्र भास्वदादिपदैः वर्णनीयस्य

भगवदाश्रितस्य भास्वदाद्यात्मता प्रतीयत इति प्रसिद्धसहपाठानां भास्वदादीनां नवानां ग्रहाणां क्रमेण प्रकृतान्वयितया न्यासः ॥

यथावा—

जहि कामं क्रोधं जय जहीहि लोभं जहाहि मोहं च । जहिहि मदं मत्सरमपि विसृज हरेर्नेनु कटाक्षपात्रं स्याः ॥ १७६२ ॥

अत्र प्रसिद्धसहपाठानां कामादीनां षण्णां समुच्चयालंकारविधया प्रकृतान्वयिनां क्रमिकत्वम् ॥

प्रकृतान्वयशालिनी अक्रमा यथा—

यममार्जय नियमं श्रय जितासनो विन्दसे सखे ब्रह्म । प्राणायामप्रत्याहारी ध्यायन् सधारणसमाधिः ॥ १७६३ ॥

अत्र 'यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि' इति पातञ्जलसूत्रोदितक्रमाणां यमादीनां समुच्चयविधया प्रकृतान्वयिनां किंचित्क्रमविपर्यासेन न्यसनम् ॥

पृथ्वी संपत्तेजो निरवधिकं सर्वतोमुखं च यशः । भाति शुभस्पर्शनता तव गुणजातं त्वनन्तमेव हरे ॥ १७६४ ॥

पृथ्वी महती 'ओतो गुणवचनात्' इति ङीष् । पक्षे भूरित्यर्थः । तेजः प्रभावः, पक्षे अग्निः । सर्वतोमुखं विश्वतः प्रसृमरं पक्षे जलम् । शुभस्पर्शनता शुभं स्पर्शनं दानं यस्य स तथोक्तः । तस्य भावः । अन्यत्र शुभः यः स्पर्शनः वायुः

तस्य भावः। अनन्तं अपरिच्छिन्नं, अन्यत्र आकाशः। अत्र पृथिव्यादिमहाभूतानां पञ्चानां किंचित्क्रमव्यत्ययेन प्रतिपादनमुपरञ्जकतया प्रकृतान्वयित्वं च ॥

यथावा—

**धृष्टिं जयन्तमच्युत विजयं सिद्धार्थमर्थसाधकताम्। गतमाहुरशोकं तव गिरा सुमन्त्रं च मन्त्रपालं च ॥ १७६५ ॥**

हे अच्युत! धृष्टिं धैर्यं जयन्तं अभिभवन्तं समरारम्भे स्वजनान् योद्धुमवस्थितानभिवीक्ष्य शोकेन त्यक्तधैर्यमित्यर्थः। इदं च 'सीदन्ति मम गात्राणि' इत्यादौ स्पष्टम्। विजयं अर्जुनं तव गिरा गीतारूपया 'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः' इत्यारभ्य 'मोक्षयिष्यामि मा शुचः' इत्यन्तया अशोकं त्यक्तशोकम्। शोभनो मन्त्रः आलोचनं यस्य तथाभूतं मन्त्रं चरमश्लोकरूपं पालयतीति तथोक्तं 'निधिपायाप्रमादिने' इत्युक्तरीत्या मन्त्रं गोपायितारम्। अर्थस्य शत्रुविजयरूपप्रयोजनस्य साधकतां गतं प्राप्तं अत एव सिद्धः अर्थः प्रयोजनं यस्य तं तथोक्तं आहुः जना इति शेषः। गीतोपदेशेन त्यक्तमोहतया यथावत् क्षत्रधर्ममनुष्ठाय लब्धविजयमित्यर्थः। अत्र—

धृष्टिर्जयन्तो विजयस्सिद्धार्थो ह्यर्थसाधकः।
अशोको मन्त्रपालश्च सुमन्त्रश्चाष्टमोऽभवत् ॥

इति श्रीरामायणे प्रसिद्धसहपाठानां रघुकुलसचिवभूतधृष्ट्यादीनामष्टानां यत्किंचित्क्रमविपर्यासेन प्रकृतान्वयिनां वर्णनमुपरञ्जकतयेति ध्येयम् ॥

इन्द्र इव पालितस्वस्थेमा शमन इव दक्षिणानुगतः। धनद इव राजराजो भवदीयो वरुण इव घनरसेशः ॥ १७६६ ॥

पालितः स्वस्थेमा स्वर्गस्थैर्यं स्वस्य धनस्य स्थैर्यं च। दक्षिणा दक्षिणादिक् तया अनुगतः तद्दिश इति यावत्। दक्षिणैः उदारैर्जनैः अनुगतश्च। राजराजः राजराजनामा राजाधिराजश्च। घनरसस्य सलिलस्य ईशः। रसायाः ईशः भूपतिः घनश्चासौ रसेशश्चेति विग्रहः। स्पष्टमन्यत्। अत्रेन्द्रादीनां चतुर्णां लोकपालानां किंचित्क्रमव्यत्ययेन कथनं उपमानविधया प्रकृतान्वयित्वं च। इदमेवाष्टानां लोकपालानां मध्ये चतुर्णामेव निबन्धनात् क्रमवैकल्यस्याप्युदाहरणम् ॥

द्विरदमुखसत्त्वहृद्यो भुजगाह्वयभूषणो भुवि गिरीशः। वनमाली च विचित्रं भाति सरोजातभावितभ्युदयः ॥ १७६७ ॥

द्विरदमुखैः गजप्रभृतिभिस्सत्त्वैः जन्तुभिः। अन्यत्र द्विरदमुखः विघ्नराजः तस्य सत्वेन स्थित्या हृद्यः। भुजग इति आह्वयः नाम भूषणं यस्य। अन्यत्र भुजगाह्वयानि फणिरूपाणि भूषणानि यस्य स तथोक्तः। गिरीशः शैलराजः शिवश्च। वनमाली काननपङ्क्तिमांश्च भगवानपीति च। सरोजातेन कासारनिवहेन पक्षे सरोजाते पद्मे भावितः अभ्युदयः उच्छ्रयः आविर्भावश्च यस्य स तथोक्तः। अत्र प्रसिद्धक्रमाणां ब्रह्मविष्णुशिवानां सर्वथा वैपरीत्येन कथनम्। उपरञ्जनविधया प्रकृतान्वयित्वं च ॥

गारुत्मतकरसेव्यं मुक्तालम्बं प्रवाळसुकुमारम्।
पश्येम पद्मरागं चरणं श्रीशस्य वज्रपाणिनुतम्॥

अत्र सहपाठसद्भावेऽपि क्रमप्रसिद्धिरहितानां गारुत्मतादीनां पञ्चानां रत्नानां उपरञ्जनादिविषया यथाकथंचित्प्रकृतान्वयिनां वर्णनामितीयमपि रत्नावळी अक्रमरूपैव॥

यथावा—

घनशृङ्गसङ्गताङ्गाश्चटुलकलिङ्गास्तथा पृथुलवङ्गाः। प्रचुरमहाच्छविदर्भास्सुसंनिवेशाः फणीशगिरिदेशाः॥ १७६९॥

घनानि शृङ्गाणि तैः। पक्षे घनं शृङ्गं प्राधान्यं तेन संगतं अङ्गं येषां ते। पक्षे घनशृङ्गसंगताः अङ्गाः तन्नामानो देशाः येषां ते 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः। देशेषु मध्ये अङ्गस्य प्रथमपरिगणनात्प्राधान्यम्। चटुलाः कालिङ्गाः खगविशेषाः कलिङ्गदेशाश्च येषु ते पृथवः महान्तः लवङ्गाः लवङ्गतरवो येषु ते। पृथुलाः विशालाः वङ्गाः तन्नामानो देशविशेषाश्च येषु ते। स्पष्टमन्यत्। अत्राङ्गादिदेशतादात्म्यं फणिगिरिदेशानां प्रतीयत इति क्रमप्रसिद्धिरहितानामङ्गादिदेशानां न्यसनं प्रकृतान्वयि॥

प्रकृतानन्वयवती सक्रमा रत्नावली यथा—

घनघृणिमणिप्रभावति कामं त्रातुं जगन्ति तापेभ्यः। आविरभूर्हरिभूभृति यत्रोत्सा हस्तिवरद भान्ति हिमाः॥ १७७०॥

हे हस्तिवरद ! घनाः सान्द्राः घृणयः किरणाः येषां तेषां मणीनां प्रभा अस्मिन्नस्तीति तथोक्ते जलदच्छविरत्नप्रभावतीति वा हरिभूभृति वेंकटाद्रौ जगन्ति कामं तापेभ्यः त्रातुं आविरभूः । यत्र गिरौ हिमाः शिशिराः उत्साः प्रस्रवणानि 'उत्सः प्रस्रवणम्' इत्यमरः । भान्तीति तद्गिरौ भगवत आविर्भावस्य तापनिवर्तनौपयिकत्वमुक्तम् । अत्र प्रभावमन्त्रोत्साहानां त्रयाणां प्रसिद्धसह पाठानां मुद्रालंकारविधया प्रकृतानन्वयिनां क्रमेण न्यसनम् । एवमुत्तरोदाहरणेष्वपि ॥

यथावा—

नलिनाक्ष यः फणीश्वरशिखरिस्थानन्त तावकीनानाम् । चरणाब्जरेणुविशमितकलुषो नीवृद्धि स खलु वासार्हः ॥ १७७१ ॥

नीवृत् जनपदः । अत्र क्षयस्थानवृद्धीनां प्रागुक्तरीत्या क्रमेण न्यासः ॥

यथावा—

आनर्चाब्जभवोऽयं विनयजुषा मानसेन साम्नायम् । सोऽव्यादृगादिरूपो भव्यात्मा दिव्यसैन्धवो भगवान् ॥ १७७२ ॥

साम्नायं ससंप्रदायं 'अथाम्नायस्संप्रदाये' इत्यमरः । ऋगादिरूपः 'ऋग्यजुस्सामरूपाय' इति तन्मन्त्रवर्णात् । दिव्यसैन्धवः श्रीहयग्रीवः अत्र 'ऋचो यजूंषि सामानि योऽधीते सकृदन्वहा' इत्यादिशास्त्रप्रतीतसहपठनानामृग्यजुस्साम्नां क्रमेण न्यसनम् । ऋगादिरूपपदेन उक्तविधक्रमनिबन्धोऽत्र सूचनीयस्सूचित इति मुद्रालंकारशिरस्कता तु विशेषः ॥

यथावा—

अरिदमनदक्षिणाहव नीयन्ते स्म द्विषोऽपि तव धाम परम् । अहमेव गार्हपत्ये भव इह कियदवधि नाथ भवताऽऽयास्ये ॥ १७७३ ॥

अरिदमने दक्षिणः चतुरः आहवः युद्धं यस्य तस्य संबुद्धिः हे नाथ ! द्विषोऽपि चैद्यादयोऽपि भवता तव परं धाम नीयन्ते स्म । अहमेव सर्वात्मना त्वां प्रपन्न एव । इह भवे संसारे गार्हपत्ये गृहस्थधर्मोपलक्षिते तत्तदाश्रमकर्मणि गृहपतेः कर्म गार्हपत्यमिति विग्रहः । 'पत्यन्तपुरोहितादिभ्यो यक्' इति कर्मरूपार्थे यक् । कियदवधि भवता आयास्ये आयासितो भवामि वा न जाने इति भावः । अत्र दक्षिणाहवनीयगार्हपत्यानां क्रमिकत्वम् ॥

यथावा—

कृतमच्युत तीर्थगणैः कृतं च नक्त्रेतयाऽपि सेवितया । स्याद्वा परोऽत्र भवतो भवतोयधितारणे कलितदीक्षः ॥ १७७४ ॥

कृतं अलम् । अत्र कृतादीनां युगानां चतुर्णां क्रमेण मुद्रालंकाररीत्या प्रकृतानन्वयिनां न्यसनमिति विशेषः ॥

यथावा—

देवोभिरामलक्ष्मणवक्षा रक्षार्थमहिगिरौ जगताम् । अवतीर्य कृपाभरतः स्फुरति हरिर्विनतनित्यशत्रुघ्नः ॥ १७७५ ॥

अभिरामं रमणीयं लक्ष्मीरस्मिन्नस्तीति लक्ष्मणं, पामादित्वान्मत्वर्थीये नप्रत्यये 'लक्ष्म्या अच्च' इति लक्ष्मीशब्देकारस्य अत्वं ततो णत्वं च। ईदृशं वक्षो यस्य स तथोक्तः। कृपाभरतः दयाभारात्। सार्वविभक्तिकस्तसिः। विनतानां नित्यशत्रवः कामादयः तान् हन्तीति विनतनित्यशत्रुघ्नः मूलविभुजादित्वाद्धन्तेः कप्रत्ययः। अत्र रामादीनां चतुर्णां श्लेषोत्तम्भितमुद्रालंकाररीत्या प्रकृतानन्वयिनां क्रमेण न्यसनम्॥

यथावा—

लसति हसितातसीता पवनोल्ललनोर्मिळाग्रसरसीका। ब्रह्माण्डव्यापिशिरा विश्रुतकीर्तिर्वृषाद्रिवरमूर्तिः॥ १७७६ ॥

अत्र प्रतीतपाठसाहित्यानां सीतोर्मिळामाण्डवीश्रुतकीर्तीनां पूर्ववदेव प्रथनम्॥

यथावा—

नित्यविभवासु देवासुरनरसंकर्षणोऽहिगिरिभूषु। प्रद्युम्नदो नतेभ्यो विहरत्यनिरुद्धशासनश्शौरिः॥ १७७७ ॥

देवासुरनराणां संकर्षणः गुणभूम्ना आकर्षकः नतेभ्यः प्रद्युम्नदः प्रकृष्टविभवप्रदः अनिरुद्धशासनः अप्रतिहताज्ञः शौरिः नित्यविभवासु अहिगिरिभूमिषु विहरति। अत्र वासुदेवसंकर्षणप्रद्युम्नानिरुद्धानां न्यसनम्॥

यथावा—

धन्यश्चातकधर्मा यस्तत्प्रीत्यर्थमेव कृतकर्मा ।
कामं तमम्बुजाक्षं ध्यायति सानन्दबाष्पपरिमो-
क्षम् ॥ १७७८ ॥

चातकस्य धर्म इव धर्मः ऐकान्त्यरूपो यस्य स तथोक्तः । पुमान् चातकवृत्तिः प्रपन्न इत्यर्थः । 'प्रपन्नश्चातको यद्वत्' इति स्मरणात् । धन्यः । अन्यत्सुगमम् । अत्रापि चतुर्षु चरणेषु क्रमेण धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानां पूर्ववदेव प्रतिपादनम् ॥

यथावा—

सामजवरदो दानवभेदपटुर्दितिसुतेषु धृतद-
ण्डः । भगवन्नुपायभूतो भव त्वमेवादरात्तव प्राप्तौ ॥

अत्रापि सामदानभेददण्डानां प्रकृतान्वयं विना क्रमेण न्यसनम् । उपायभूत इति प्रकृतार्थपरेण पदेनास्मिन् पद्ये उपदर्शितोपायनामानि निबद्धानीति सूच्यार्थस्यापि सूचनान्मुद्रालंकारश्चेति तच्छेखरितेयं रत्नावलीति विशेषः ॥

यथावा—

ब्रह्मनुतो नलिनाक्ष त्रासहरस्फाटिकत्विषा त्वं
श्येतः । आशूद्रावितदुरितश्चातुर्वर्ण्यं धराधरः प्रथ-
यति ते ॥ १७८० ॥

हे नलिनाक्ष ! ब्रह्मणा चतुर्मुखेन नुतः । त्रासहरः भयहारी । स्फाटिकत्विषा श्येतः श्वेतः । 'शुक्लशुभ्रशुचिश्वेतविशदश्येत-

पाण्डुराः' इत्यमरः। आशु उद्रावितं प्रद्रावितं 'प्रद्रावोद्राव सन्द्रावाः' इत्यमरः। दुरितं येन सः।

वें पापमिति संप्रोक्तं कटस्तस्य तु दाहकः।
पापानां दाहकत्वाद्धि वेंकटाद्रिरितीर्यते ॥

इति तस्य पापहारित्वप्रसिद्धेः। ते भवतः धराधरः शेषाद्रिरित्यर्थः। 'चातुर्वर्ण्यं चतुरक्षरत्वं धराधरशब्दस्य तथाविधत्वादिति भावः। प्रथयति। अत्र ब्रह्मक्षत्रवैश्यशूद्राणां क्रमेण न्यसनम्। चातुर्वर्ण्यपदेन उपपादितब्रह्मक्षत्रादिसूचनान्मुद्रा च पूर्ववदेव ॥

यथावा—

त्वद्दिव्यचरितवर्णी न्यासेन त्वां गृहीतवान्मतिमान्। त्वद्भावनस्थितोऽयति परमं धामाश्रमान्वितो भगवन् ॥ १७८१ ॥

हे भगवन्! तद्दिव्यचरितं वर्णयतीति तथोक्तः। न्यासेन भरन्यसनेन त्वां गृहीतवान् वशीकृतवान् गृहीतवानित्यनेन 'उप याम गृहीतोऽसि ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत' इति न्यासकरणमन्त्रगतं गृहीतपदं प्रत्यभिज्ञाप्यते। तव भावने स्थितः मतिमान् अश्रमेण उपायान्तरानुष्ठानप्रयासराहित्येनैव परमं धाम अयति प्राप्नोति 'इटकिटकटि' इत्यत्र प्रश्लिष्टस्य इधातोः लट्। अत्र ब्रह्मचारिगृहस्थवनस्थयतीनामाश्रमिणां स्मृत्यादिषु सहपठितानां क्रमिको न्यासः। अयमेवाश्रमेणेति पदेन सूच्योऽर्थस्सूचित इति पूर्ववदेव सर्वम्। वर्णिगृहिशब्दाभ्यां ब्रह्मचारिगृहस्थौ गृह्येते ॥

यथावा—

**भूयांसमन्वयं त्वयि दधतं भवभाविरोधपरि-हृत्यै । शुभसाधनफललिप्सुश्चतुरध्यायी श्रये हरिं कमले ॥१७८२ ॥**

हे कमले! त्वयि भूयांसं अन्वयं संबन्धं दधतं हरिं शुभानां साधनं यत्फलं निश्श्रेयसरूपं प्रयोजनं लिप्सुस्सन् अत एव भवेन संसारेण जन्मना वा भावी यो रोधः निर्बन्धस्तस्य परिहृत्यै शान्त्यै चतुरं निपुणं यथातथा ध्यायतीति चतुरध्यायी सन् श्रये। अत्र समन्वयाविरोधसाधनफलानां ब्रह्ममीमांसाचतुरध्यायीप्रतिपाद्यानां क्रमेण सूचनम् । चतुरध्यायीति सूच्यार्थसूचनान्मुद्रा च । तच्छिरस्का रत्नावलीयं पूर्ववदेव। किंच भूयांसमन्वयं त्वयि दधतं हरिमित्यनेन प्राप्यस्य ब्रह्मणस्स्वरूपं, श्रये इत्यनेन प्राप्तुः प्रत्यगात्मनस्स्वरूपं, चतुरध्यायीति प्राप्त्युपायः, शुभसाधनफलेति फलस्वरूपं, भवभाविरोध इत्यनेन स्वरूपोपायफलप्राप्तिविरोधस्वरूपं च किंचित्क्रमवैपरीत्येन वर्णितमिति विशेषश्चात्र विभावनीयः ॥

**सत्यं धर्मं विन्दति स भीमसेनो रणे विजयशाली । व्रजति सुशोभनकुलतां लक्ष्म्या सह देव सेवते यस्त्वाम् ॥ १७८३ ॥**

अत्र श्लेषोपश्लिष्टमुद्रालङ्काररीत्या युधिष्ठिरादीनां पञ्चानां पाण्डवानां प्रसिद्धक्रमेण प्रतिपादनमिति पूर्वोदाहरणेभ्यो विच्छित्तिविशेषः ॥

यथावा—

कामं दारादिमजुषमपारिजातं श्रितं ससन्तानसुखम्। सामोदं कल्पयसे हरिचन्दन दैवतरुचिरश्रीदस्त्वम् ॥ १७८४ ॥

हे हरिचन्दन! हरिरेव चन्दनः तस्य संबुद्धिः। त्वं दैवतानामपि रुचिरा रमणीया तैरपि श्लाघ्येति यावत्। या श्रीः संपत् शोभा वा तां ददातीति तथोक्तस्सन्। हरिचन्दनेत्यनेन देवतरुविशेषोऽपि गृह्यते। तदा दैवतानां रुचिरां श्रियं ददातीति तथोक्त इत्यप्युपस्कार्यम्। श्रितं स्वाश्रितं जनं कामं पर्याप्तं यथातथा दारादिमान् जुषतीति तं तथोक्तं आदिमशब्देन बन्ध्वादिर्गृह्यते। अपास्तं अरिजातं वैरिबृन्दं येन तं अपारिजातं संतानसुखेन सह वर्तत इति ससंतानसुखं अतएव सामोदं सानन्दं ससौरभं च। हरेश्चन्दनतया रूपितत्वादिति भावः। कल्पयसे रचयसि। स्वोपासितारं सर्वप्रकारविभवजुषं तनोषीति भावः। अत्र मन्दारपारिजातादीनां पञ्चानां देवतरूणां क्रमेण न्यसनम्। दैवतरु इति पदैकदेशेन श्लोकघटितदेवतरुरूपसूच्यार्थस्यापि सूचनान्मुद्रालङ्कारावतंसितेयमिति पूर्ववदेवानुसंधेयम् ॥

यथावा—

चरणारविन्दशरणगमशोकयन्नात्मचरमवचसा पार्थम्। कृतसहकारश्रीमल्लीलो नीलोत्पलोज्ज्वलोऽवतु स पुमान् ॥ १७८५ ॥

चरणारविन्दशरणगं पार्थं आत्मचरमवचसा 'सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इति वचनेन अशोकयन् कृतः सह-

कारः साचिव्यं यया सा तथोक्ता श्रीमती लीला सारथ्यलीला यस्य स तथोक्तः नीलोत्पलोज्ज्वलः स पुमान् अवतु । मामिति शेषः । अत्र 'अरविन्दमशोकं च' इत्यादिप्रसिद्धक्रमपञ्चबाणन्यसनम् ॥

यथावा—

**प्राणयितारं स्वकथापानविधातॄन्पिशङ्गसंव्यानम् । कलयेय मुदाऽनन्तम् समानयन् हृदयपुण्डरीकं तम् ॥ १७८६ ॥**

स्वकथापानविधातॄन् जनान् प्राणयितारं । पिशङ्गसंव्यानं पीताम्बरोत्तरीयं 'संव्यानमुत्तरीयं स्यात्' इत्यमरः । तं सकललोकवेदप्रसिद्धं अनन्तं भगवन्तं हृदयपुण्डरीके समानयन् प्रापयन् सन् मुदा कलयेय इति योजना । अत्र श्रुत्यादिप्रसिद्धानां प्राणापानव्यानोदानसमानानां क्रमिको न्यासः ॥

यथावा—

**शब्दैकगम्यमुज्झितदोषस्पर्शं निरूपणातिगसुगुणम् । तामरसनयन तनुयां सुभगं धर्मेण चेतसो विषयं त्वाम् ॥ १७८७ ॥**

हे तामरसनयन! उज्झितदोषस्पर्शं निरूपणातिगाः वाङ्मनसाविषयाः सुगुणाः यस्य तं 'यतो वाचो निवर्तन्ते' इति श्रुतेः । अनेन पदत्रितयेन 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी स एष सर्वेभ्यः पाप्मभ्य उदितः । स एव ये चास्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानाम्' इत्यन्तरादित्यविद्योक्तं दिव्यमङ्गळविग्र-

होपलक्षकं पुण्डरीकाक्षत्वं अपहतपाप्मत्वं सर्वलोककामेशितृत्वा-दिगुणाकरत्वं चोक्तं भवति। अत्र 'अपहतपाप्मा' इत्यादि 'सत्यसंकल्पः' इत्यन्ताः निरवद्यंनिरञ्जनम्। यस्सर्वज्ञः' इत्यादिश्रुतयोऽप्यनुसंधेयोः। अतएव सुभगं शोभनः भगः—

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥

इत्युक्तं षाड्गुण्यं यस्य तं तथोक्तं भगवच्छब्दवाच्यमिति यावत्। शब्दैकगम्यं 'तं त्वौपनिषदं पुरुषम्' इति श्रुतेः 'शास्त्रयोनित्वात्' इति सूत्राच्च। उपदर्शितमस्य रूपादिकं शास्त्रैकसमधिगम्यमिति भावः। ईदृशं त्वां धर्मेण—

सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिः।
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा॥

इत्युक्तेन अर्चनवन्दनस्तवनाद्युत्तमधर्मेण चेतसः विषयं तनुयां विशुद्धेन मनसा गृह्णीयां 'मनसा तु विशुद्धेन' इति श्रुतेः। अत्र शब्दस्पर्शरूपरसगन्धानां लोकवेदप्रसिद्धानां पञ्चानां विषयाणां प्रकृतानन्वयिनां क्रमिक उपन्यासः। विषयमित्यनेन क्रमविन्यस्ता इमे विषया इति सूच्यस्यार्थस्य सूचनान्मुद्रालंकारश्च। तदुक्तंसितेयं रत्नावळीति ध्येयम्॥

यथावा—

**शुभकृत्तद्धितदायी समासहस्त्वं त्वदेकशेषं माम्। कल्याणवृत्तिमच्युत कलय सनाद्यन्तधातुरूपस्त्वम्॥ १७८८॥**

हे अच्युत! शुभकृत् मङ्गळकारि तत् शास्त्रप्रसिद्धं यत् हितं उपायरूपं तत् ददातीति तथोक्तः सकलकल्याणास्पदभक्तिप्रपत्तिरूपं त्वत्प्राप्त्युपायं वितरन्नित्यर्थः । 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति गानात् । न विद्येते आद्यन्तौ यस्य सः नाद्यन्तः नशब्देन समासः। उत्पत्तिनाशविधुरः यः धातुः धाता 'सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुन्' इत्यनेन औणादिकस्तुन्प्रत्ययः। उदन्तोऽयं शब्दः। एतच्च 'धातुप्रसादान्महिमानम्' इति श्रुतिव्याख्यानावसरे श्रुतप्रकाशिकोपनिषद्भाष्ययोर्व्यक्तम्। तद्रूपः जन्मनाशोपलक्षितभावविकारराहित्येन सर्वजगतां धर्ता पोष्टा चेत्यर्थः। सः त्वं समानां वत्सराणां सहस्रं बहुतिथं कालमिति यावत्। त्वदेकशेषं यावदात्मभावि तवैव शेषभूतमिति भावः। मां कल्याणी श्रेयस्करी वृत्तिः कैङ्कर्यरूपा यस्य तं तथोक्तं कलय। अत्र स्वरूपोपायपुरुषार्थाः यथास्थानमनुसन्धेयाः । अत्र 'कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः' इति शाब्दिकगोष्ठीप्रसिद्धानां पञ्चानां वृत्तीनां क्रमेण कथनम्। कल्याणवृत्तिशब्देन उपासादितवृत्तयोऽत्र निबद्धा इति सूच्यस्यार्थस्य सूचनं च पूर्ववदेव । अत्र सनाद्यन्तेत्यादेस्सौत्रनिर्देशानुवादरूपत्वान्न कुमुडागमप्रसक्तिरित्यवधेयम् । अतएव "द्वादशामी सनादयः। एतच्छास्त्रमुणादिषु। धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्' इत्यादयो कुमुडघटिताः प्रयोगास्संगच्छन्ते ॥

यथावा—

यत्तु स्वार्थं द्रव्यं नालिङ्गति तव पदाब्जमब्जाक्ष । संख्यातिगमपि नृणां तन्न स्यात्प्रीतिकारकं विदुषाम् ॥ १७८९ ॥

हे अब्जाक्ष! नृणां यद्द्रव्यं स्वार्थमेव सत् तव पदाब्जं नालिङ्गति त्वच्चरणाम्भोजार्पितं न भवतीत्यर्थः। तद्द्रव्यं संख्यातिगं अपरिमितमपि विदुषां ब्रह्मविदां प्रीतिकारकं न स्यात्। व्यर्थमेव तदिति भावः। अत्र स्वार्थद्रव्यलिङ्गसंख्याकारकाणां प्रातिपदिकार्थानां शाब्दिकगोष्ठीप्रसिद्ध्यनुसारतः क्रमिकत्वम्॥

यथावा—

**अविषयमविशयमागमवचसामपि पूर्वपक्षमिह तमसाम्। लोकोत्तरफलदं त्वां जगतामधिकरणमाश्रये भगवन्॥ १७१०॥**

हे भगवन्! आगमवचसामपि अविषयं अगोचरं तमसां अज्ञानानामेव तिमिराणां पूर्वपक्षं शुक्लपक्षं तन्निर्मूलयितारमिति भावः। लोकोत्तरं यत्फलं निश्श्रेयसरूपं तद्ददातीति तथोक्तं जगतां अधिकरणं आधारं त्वां अविशयं निस्संदेहं यथा तथाऽऽश्रये। अत्र—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
प्रयोजनं च पञ्चैते प्राञ्चोऽधिकरणं विदुः॥

इति पूर्वोत्तरमीमांसाप्रसिद्धाधिकरणाङ्गपञ्चकस्य क्रमेण न्यासः। अधिकरणमित्यनेन सूचनीयार्थसूचनं च॥

यथावा—

**कामं जितशक्रो धनविभवैस्सुकलो भयं क्षमो हर्तुम्। भानुमदंशुश्रीमत्सरोजलोचन भवेद्भवद्दृष्टः॥ १७११॥**

सुकलः दाता भोक्ता च 'सुलको दातृभोक्तरि' इत्यमरः। भयं स्वस्य स्वाश्रितानां च त्रासं हर्तुं क्षमः शक्तः भीताभयदातेत्यर्थः। भानुमदंशुभिः श्रीमत् उज्ज्वलं यत्सरसिजं तदिव लोचनं यस्य तस्य संबुद्धिः। अत्र कामक्रोधलोभमोहमदमत्सराणां षण्णां क्रमेण न्यास इति पूर्वाभ्यो विच्छित्तिशालिनीयम् ॥

यथावा –

**काममवक्रो धर्मैर्विमलो भगवन् भवेत्तमोहतिशीलः। श्रमदमन नमत्सरसिजभव तव भक्तो जितारिषड्वर्गश्च ॥ १७९२ ॥**

श्रमदमनः सांसारिकखेदविमोचनः तस्य संबुद्धिः। नमन् सरसिजभवः ब्रह्मा यस्य सः तस्य संबुद्धिः हे भगवन्! तव भक्तः कामं अवक्रः अकुटिलशीलः। धर्मैः सामान्यैर्विशेषैश्च धर्मैः विमलः निर्मलः 'धर्मेण पापमपनुदति' इति श्रुतेः। अतएव तमसः तमोगुणस्य हतिः निरासः तस्यां शीलं यस्य स तथोक्तः। जितः अरिषड्वर्गः कामादिः येन स तथोक्तश्च भवेत्।

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥

इत्युक्तेरिति भावः। अत्रापि प्रकारान्तरेण कामक्रोधादीनामेव क्रमेण ग्रथनम्। ईदृशविशेषरूपसूच्यार्थस्य जितारिषड्वर्ग इत्यनेन सूचनान्मुद्रा चेति विशेषः ॥

यथावा—

**सुश्लिष्टसंधिविग्रहमिभपतियानं शरासनसनाथम्। राममभिवीक्ष्य तेन प्रेप्सन्तोऽद्वैधमाश्रयन्मुनयः ॥ १७९३ ॥**

सुश्लिष्टाः संधयः संधिबन्धाः यस्य तादृशो विग्रहो यस्य तम्। अनेन वक्ष्यमाणमुनिजनमानसाकर्षकस्सौन्दर्यातिशयस्सूचितः। यथोच्यते—

अङ्गप्रत्यङ्गकानां स्यात्संनिवेशो यथोचितम्।
सुश्लिष्टसन्धिबन्धो यस्तत्सौन्दर्यमितीर्यते ॥

इति। इभपतेः यानमिव यानं यस्य तम्। शरासनसनाथं रामं अभिवीक्ष्य मुनयः तेन रामेण सह अद्वैधं गाढालिङ्गनेनैकीभावं प्रेप्सन्तस्सन्तः। तं आश्रयन् दण्डकारण्यं प्रविष्टस्य भगवतो दाशरथेस्सौन्दर्येण मोहिताः वनिता इव मुनयस्तमालिङ्गितुमुत्सुका बभूवुरिति पद्मपुराणकथाऽत्रानुसंधेया। यद्वा तेन अद्वैधं अविवादं प्रेप्सन्तस्तमाश्रयन् 'अविवादस्तु तस्यैव पदयोरात्मनोऽर्पणम्' इत्युक्तरीत्या तच्चरणारविन्दे आत्मरक्षाभरार्पणमभीप्सन्त आश्रयन्नित्यर्थः। अत्र 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः' इति प्रसिद्धसहपाठानां संध्यादीनां क्रमेण षण्णां न्यसनम् ॥

यथावा—

**सुरभीतिहरभुजोष्मा शरवर्षासारविशमिताशरदावः। परमहिमानीको यो दिशिदिशि शिरसा नमामि तं दाशरथिम् ॥ १७१४ ॥**

यः सुरभीतिहरः भुजोष्मा बाहुप्रतापः यस्य शरवर्षासारः बाणवर्षासार एव जलवर्षासारः तेन विशमितः आशराः निशिचरा एव दावा यस्य परमहिमा अनीकः सैन्यं यस्य पक्षे परमा हिमानी हिमसंहतिः यस्य सः परमहिमानीकः। 'नद्यृतश्च' इति कप्। तं दाशरथिं दिशिदिशि शिरसा नमामि 'नमः

पुरस्तादथ पृष्ठतस्ते नमोनमस्सर्वत एव सर्व' इत्युक्तप्रक्रियया प्रतिदिशं प्रणमामीत्यर्थः । अत्र सुरभीत्यादिपदैकदेशैः ऊष्मेत्यादिशब्दश्लेषेण च वसन्तादीनां षण्णामृतूनां क्रमेण वर्णनम् ॥

यथावा—

**सृष्ट्यादिकर्मकर्ता करणनियन्ता त्वया विनाऽच्युत कोऽन्यः । सकलशुभसंप्रदानं कुरुते पादानताधिकरणहार्तिं च ॥ १७९५ ॥**

हे अच्युत! सृष्ट्यादीनां जगत्सर्जनादीनां कर्मणां कर्ता अनेन 'यो वै वालाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वै वेदितव्यः' इति श्रुतिः प्रत्यभिज्ञाप्यते । करणानां इन्द्रियाणां नियन्ता 'श्रोत्रस्य श्रोत्रम्' इत्यादिश्रुतेः । पादानतानां चरणप्रणतानां आधिः मनोव्यथा तस्य करणाः कर्तारः करणानि साधनानि वा तेषां हार्तिं क्षतिं, सकलशुभसंप्रदानं तेषामेव सर्वकल्याणवितरणं च । आभ्यामिनिष्टनिरासेष्टप्रापणे अभिहिते । त्वया विना कोऽन्यः कुरुते इति योजना । अत्र—

कर्म कर्ता च करणं सप्रदानं तथैव च ।
अपादानाधिकरणे इत्याहुः कारकाणि षट् ॥

इति शाब्दिकोक्तानां षण्णां कारकाणां क्रमेण न्यसनम् ॥

यथावा—

**लवणाशाली क्षुभितासुरेन्द्रराज्योदधीशभुजदण्डः । नलिनाक्षीराजितहृज्जलजाक्षो जयतु सप्तभुवननिधिः ॥ १७९६ ॥**

लवणाशब्दः स्वाभाव्यात् स्त्रीलिङ्गः लावण्यवाची । 'लवणैव लावण्यम्' इति 'लावण्यश्रिय इव शेषमङ्गनायाः' इत्यादौ मल्लिनाथादिभिस्तत्रतत्र व्याख्यातत्वात् । 'लवणो रसरक्षोऽब्धिभेदेषु लवणा त्विषि, इति विश्वः । तया शालत इति लवणाशाली । क्षुभितः असुरेन्द्राणां हिरण्यकशिपुनरकप्रभृतीनां राज्यमेव उदधीशः समुद्रराजः येन तादृशो भुज एव दण्डः मन्थानदण्डो यस्य सः नलिनाक्ष्या श्रिया राजितं हृत् वक्षः यस्य सः सप्तसंख्याकानां भुवनानां भूरादिलोकानां निधिः जलजाक्षः जयतु । अत्र 'लवणेक्षुसुरासर्पिर्दधिक्षीरजलार्णवाः' इति पुराणादिप्रसिद्धसहपाठानां सप्तानामुदन्वतां क्रमेण प्रतिपादनमिति पूर्वोदाहरणेभ्यो विशेषः । सप्तभुवननिधिरिति पदेन सूच्यसमुद्रसूचनान्मुद्रा च ॥

यथावा—

भूरिदयं जलधिभुवः प्रियं सुवर्णाभमहरधिपबिम्बस्थम् । सुजनोग्रतपोगम्यं व्याहृतयो नोऽभिदधतु सत्यं देवम् ॥ १७९७ ॥

नः अस्माकं व्याहृतयः व्याहाराः भूरिदयं निरवधिककृपं, तत्र हेतुः जलधिभुवः प्रियमिति । अत्र 'नित्यश्रीर्ब्रह्मबिम्बे' इत्याचार्यश्रीसूक्तिस्स्मर्तव्या । अतएव सुवर्णाभं अहरधिपबिम्बस्थमिति तदुपस्कारकम् । अत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इत्यन्तरादित्यविद्योक्तं दिव्यात्मविग्रहरूपमनुसंहितम् । सुजनानां सतां उग्रेण तीव्रेण तपसा गम्यं प्राप्यं, सत्यं निरुपाधिकसत्तायोगिनं 'सत्यं ज्ञानम्' इति श्रुतेः । मुक्तामुक्तनियन्तारं वा 'अथ यत्सत्यं तदमृतं अथ यत्ति तन्मर्त्यं अथ यद्यं तेनोभे यच्छति' इति दहरविद्यायां श्रवणात् । देवं नारायणं अभिदधतु वदन्तु

अस्मद्वचनानि संततं दिव्यमङ्गळविग्रहं परं ब्रह्म पुरुषोत्तमं श्रीनिवासमेव परिष्वज्यताम् । तद्विषयकप्रबन्धानेव प्रणयन्तामिति भावः। अत्र श्रुतिप्रसिद्धसहपाठानां भूरादिसप्तव्याहृतीनां क्रमेण विन्यासः। व्याहृतय इत्यनेन तादृशसूच्यर्थसूचनं चेति पूर्ववदेव मुद्राशिरस्कत्वम् ॥

यथावा—

अरुणाब्जवर्णमङ्गळसौम्याङ्गि रसावभासितनुहसिते । असिताक्षि मातराहुर्लोकेऽतुल्याऽनवग्रहेति त्वाम् ॥ १७१८ ॥

अरुणाब्जस्य वर्ण इव वर्णो यस्य तत् 'पद्मवर्णाम्' इति श्रुतेः। तथोक्तं मङ्गळं सौम्यं सुन्दरं 'सौम्यं तु सुन्दरे सोमदैवते' इत्यमरः। तादृशं अङ्गं यस्यास्सा तथोक्ता तस्यास्संबुद्धिः 'अङ्गगात्र' इति ङीप्। रसेन शृङ्गाररसेन दयारसेन वा अवभासि प्रकाशमानं न तु 'स्मयन्निव नृपो हन्ति' इतिवत्परातिसंधायकं, तनुहसितं मन्दहासो यस्यास्सा तथोक्ता। अनेन भगवन्मन्दहसितादप्यस्या मन्दहसितं गुणवत्तरमिति द्योतितम्। तद्धि 'हासो जनोन्मादकरी च माया' इत्युक्तरीत्या जनोन्मादकारिमायारूपं तस्यास्संबुद्धिः रसावभासितनुहसिते। हे असिताक्षि! 'तं चेयमसितेक्षणा' इत्युक्तेः। हे मातः! त्वां अतुल्या असदृक्षा अनवग्रहा अप्रतिबन्धा सर्वव्यापिनीत्यर्थः। 'अवग्रहो हस्तिरोधे प्रतिबन्धे गजालिके' इति मेदिनी। यद्वा अनवग्रहा निरङ्कुशस्वातन्त्र्या अपर्यनुयोज्यस्य भगवत्स्वातन्त्र्यस्यापि तदधीनत्वात्। यथोक्तं 'यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्' इत्यादि। इति वदन्ति सन्त इति शेषः।

अत्र सूर्यादीनां नवानां ग्रहाणां प्रकृतान्वयं विना क्रमेण न्यासः । नवग्रहेत्यनेन सूच्यार्थसूचनान्मुद्रा च । प्रागुदाहृतं 'भास्वान् राजा' इत्यादिपद्यं तु प्रकृतान्वयि भगवद्विषयश्चेति वैलक्षण्यम् ॥

यथावा—

**भुजगाचलशृङ्गारो वीरः करुणाद्भुतो महास्यरुचिः । स्वभया न कं नु वशयेद्बीभत्सितरौद्ररिपुरयं शान्तः ॥ १७९९ ॥**

करुणया अद्भुतः विस्मयावहकृप इत्यर्थः । महती आस्यरुचिः मुखप्रभा यस्य बीभत्सिताः विकृताः कृताः रौद्राः दारुणाः रिपवः येन सः । शान्तः ऊर्मिषट्कप्रतिभटः स्वभया निजप्रभया कं नु न वशयेत् सर्वमपि स्वतेजसैव वशीकुर्यादित्यर्थः । अत्र—

शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः ।
बीभत्सरौद्रशान्ताश्चेत्येते नव रसाः स्मृताः ॥

इति कविप्रसिद्धक्रमाणां नवानां रसानां क्रमेण न्यासः । क्वचित्तु—

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्च रसाः पूर्वैरुदाहृताः ॥

इति क्रमः पठ्यते । तदनुसारे तु वक्ष्यमाणक्रमवैपरीत्यादेरुदाहरणं भविष्यति ॥

यथावा—

**मधुहर माधव तनुयाच्छुक्रशुचिं ननु नभस्सदामपि मान्यम् । भाद्राश्वयुजोर्जस्वलसहायतैषं समाघनतपस्यं त्वाम् ॥ १८०० ॥**

इदं कस्यचिदैहिकापवर्गिकपुरुषार्थं प्रार्थयितुर्भक्तस्य वचनम् । हे मधुहर मधुवैरिन् ननु माधव हे श्रीनिवास! सः त्वं घना तपश्चर्या यस्य तं मा मां भद्राणां गजविशेषाणां समूहो भाद्रं अश्वानां समूहः आश्वं उभयत्र सामूहिकोऽण् । ताभ्यां युज्यत इति भाद्राश्वयुजः इगुपधलक्षणः कः । ऊर्जस्वलः बलिष्ठश्च सहायः यस्य स तथोक्तः । तस्य भावः तत्ता तां इष्यते गच्छतीति भाद्राश्वयुजोर्जस्वलसहायतैषः तं 'इष गतौ' दिवादिः तस्मात्कर्मण्यण् । चतुरङ्गसेनायुक्तमहासहाय शालिनमित्यर्थः । एतेन ऐहिकसमृद्धिरर्थिता । शुक्रः वह्नि 'शुक्रस्स्याद्भार्गवे ज्येष्ठमासे वैश्वानरे पुमान्' इति मेदिनी। तमिव शुचि शुद्धं अनेनापवर्गसाधनसर्वप्रकारशुद्धिमत्ता सूचिता। 'शुचिश्शुद्धेऽनुपहते शृङ्गाराषाढयोस्सिते' इति विश्वः । नभःस्सदां अर्चिरादिकानामातिवाहिकानां देवानां मान्यं पर्यवसाने तैस्सेव्यमपि तनुयाः । 'भुक्त्वा च भोगानखिलानन्ते हरिपदं व्रजेत्' इत्युक्तरीत्या ऐहिकसाम्राज्यानुभवपूर्वकमन्ते निश्श्रेयससाम्राज्यानुभवशालिनमपि कुर्वीथा इति भावः । अत्र 'मधुश्च माधवश्च शुक्रश्च शुचिश्च' इत्यादिश्रुतिस्मृत्यादिपठितानां मधुमाधवादीनां द्वादशानां मासानां क्रमो निबद्धः ॥

यथावा—

**स्यामेष वृषाद्रिस्थं मिथुनमकर्क्यङ्कजारिरमणीड्यमहम् । अतुलाळिकं विचापलमसमकरं वीक्ष्य विनतसकलशमीनम् ॥ १८०१ ॥**

अत्र ज्यौतिषादिप्रसिद्धसहपाठानां मेषवृषादिमीनान्तानां द्वादशानां राशीनां मुद्रालङ्कारविधया क्रमेण वर्णनम् । अङ्कजारिः

कामवैरी तस्य रमणी गौरी तया ईड्यं स्तुत्यं अतुलं असदृशं अळिकं ललाटं यस्य तत् विचापलं अचञ्चलशीलं वीक्ष्येति क्रियाया विशेषणं वा । असमौ असदृशौ करौ पाणी यस्य तत् । शम एषा मस्तीति शमिनः तेषां इनाः प्रभवश्शान्ताग्रण्य इत्यर्थः । विनताः सकला शमीनाः यस्य यस्मिन्वा तत्तथोक्तं वृषाद्रिस्थं मिथुनं श्रीश्रीनिवासरूपं स्त्रीपुंसात्मकं द्वंद्वं वीक्ष्य दृष्ट्वा ध्यात्वा वा कर्कं कल्कं रलयोरभेदात्पापं 'कल्कोऽस्त्री शमलैनसोः' इत्यमरः । तदस्यास्तीति कर्की स न भवतीत्यकर्की विनष्टाश्लिष्टपूर्वोत्तराघः एषः अहं स्यामिति योजना । भवेयमित्यर्थः ॥

प्रकृतानन्वयवती अक्रमा यथा—

मधुरामा यास्तासां दाता कांचिच्छुचं विजितकाशी । सदयो ध्यातोऽस्तु वहन् हृदि नतसद्वारकामवन्तीं लक्ष्मीम् ॥ १८०२ ॥

याः मधोः तन्नाम्नोऽसुरस्य रामाः स्त्रियः तासां कांचित् शुचं वैधव्यप्रयुक्तं शोकं दाता । ददातेस्तृन् । मधुदैत्यसंहर्तेति भावः । विजितेन विजयेन भावे क्तः काशत इति विजितकाशी काशतेर्णिनिः 'वानरा जितकाशिनः' इतिवत् । नताः सतां वाराः निवहाः यस्यां सा नतसद्वारका तां अवन्तीं सर्वलोकपालयित्रीं लक्ष्मीं हृदि वहन् अतएव सदयः पुमान् परमपुरुषः श्रीनिवास इति भावः । ध्यातः अस्तु । मयेति शेषः । अत्र—

अयोध्या मथुरा माया काशी काञ्चिरवन्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥

इति प्रसिद्धक्रमपाठानां क्रमव्यतिक्रमेण न्यसनम् ॥

यथावा—

पुष्कलशाल्मलिजम्बूप्लक्षः क्रौञ्चकुशमेदुरः फणिशैलः। आक्रान्तमहाशाकस्सप्तद्वीपाधिको जयत्ययमेकः ॥ १८०३ ॥

पुष्कलाः अतिशोभनाः 'पुष्कलस्स्यात्सत्तमश्चातिशोभने' इत्यमरः। शाल्मलिजम्बूप्लक्षाः वृक्षविशेषाः यस्मिन् सः। क्रौञ्चैः पक्षिविशेषैः कुशैः दर्भैः जलैर्वा मेदुरः आक्रान्ताः स्वाभोगेन व्याप्ताः महत्यः आशाः दिशः येन स तथोक्तः 'शेषाद्विभाषा' इति कप् 'के णः' इति प्राप्तस्य ह्रस्वस्य 'आपोऽन्यतरस्याम्' इति विकल्पितत्वादाशाशब्दस्य न ह्रस्वः। अयं फणिशैलः एक एव सप्तद्वीपाधिको जयति। अत्र 'जम्बूप्लक्षकुशक्रौञ्चशाकशाल्मलिपुष्कलाः' इति पुराणादिषु सहपठितस्य द्वीपसप्तकस्य क्रमातिक्रमेण न्यसनम्। सप्तद्वीपपदेन सूच्यार्थसूचनं च॥

यथावा—

स्तुवताङ्गिरस्सदा मे मरीचिमत्त्रियुगसपुलहर्षकरम्। विपुलस्त्यानक्रतुभुग्वसिष्ठसुखदं तवाम्ब नयनयुगम् ॥ १८०४ ॥

हे अम्ब! मरीचिमत् अंशुमत् त्रियुगस्य भगवतः सपुलहर्षकरं सपुलकप्रमोदावहं 'पुलस्स्यात्पुलके पुंसि विपुले वाच्यलिङ्गकः' इति मेदिनी। विपुलं विशालं स्त्यानानां स्निग्धानां 'स्त्यानं स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि' इति मेदिनी। क्रतुभुजां वसिष्ठाः वसीयांसः श्रेष्ठाः तेषां लोकपालानामित्यर्थः। वसुशब्दः प्रशस्तवाची। तत आतिशायनिके इष्ठनि वसिष्ठ इति रूपम्।

एतच्च 'श्वसो वसीयश्श्रेयसः' इति सूत्रे कौमुदीग्रन्थे स्पष्टम् । सुखदं 'लोकेशेशविभूतीनां कारणं यन्निरीक्षणम्' इत्युक्तेः । विपुलं च तत् स्त्यानक्रतुभुग्वासिष्ठसुखदं चेति विशेषणोभयपदकर्मधारयः । यद्वा विपुलं अतिशयितं स्त्यानं आलस्यं दुर्वासश्शापजनितस्वाराज्यभ्रंशप्रयुक्तमपाटवं यस्य स तथोक्तः क्रतुभुग्वसिष्ठः इन्द्रः तस्य सुखदमिति तव नयनयुगं मे मम गिरः सदा स्तुवता स्तुवन्तु । अत्र—

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
वसिष्ठं च महातेजास्सोऽसृजत्सप्त मानसान् ॥

इति पुराणोक्तानां महर्षीणां किंचित्क्रमातिलङ्घनेन न्यसनम् ॥

यथावा—

**यशसैष सार्वभौमेनैरावतकुमुदपुष्पदन्तरुचा ते । लोकोऽञ्जननायक सुप्रतीक वामन सुपुण्डरीकाक्ष सितः ॥ १८०५ ॥**

हे वामन ! स्वेच्छागृहीतवामनावतार । हे सुप्रतीक 'आ प्रणखात्सर्व एव सुवर्णः' इत्युक्तप्रकारदिव्यमङ्गळविग्रह ! हे सुपुण्डरीकाक्ष ! शोभनं यत्पुण्डरीकं तदिव अक्षि यस्य तस्य संबुद्धिः । सुशब्देन गम्भीराम्भस्समुद्भूतसुमृष्टनाळरविकरविकसितत्वरूपः 'तस्य यथा कप्यासम्' इति श्रुतिस्थकप्यासशब्दार्थस्सर्वोऽपि संगृहीतः । अञ्जननायक अञ्जनाख्यगिरिनेतः ऐरावतः कुमुदपुष्पं दन्तः गजदन्तः तेषां रुगिव रुक् प्रभा यस्य तथोक्तेन सार्वभौमेन सर्वभूमौ विदितेन ते यशसा जगत् सितं शुभ्रमिति योजना । अत्र 'ऐरावतः पुण्डरीकः' इत्युक्तानां दिग्गजानां क्रमातिलङ्घनम् ॥

प्रलयसरस्वति वटदलशायितस्त्वमदीदृशस्स्व-
महिमानम् । मार्कण्डेयमुनेरश्रुतिसुभगङ्गेयं पुरा
फणिगिरीन्दो ॥ १८०६ ॥

इदमुपाख्यानमरण्यपर्वणि प्रसिद्धम् । अत्र 'इमं मे गङ्गे यमुने सरस्वति' इति संबुद्ध्यन्ततया क्रमेण श्रुतौ पठितानां गङ्गा-यमुनासरस्वतीनां सर्वात्मना व्युत्क्रमेण न्यसनं पूर्वेभ्यो विशेषः ॥

यथावा—

दुरितोपसंहृतिचणा रविमर्शविकासिपद्मगर्भे-
न्धे । तटगान्प्रति मुखरमुखभ्रमरा सौखातिकी
वृषाद्रिनदी ॥ १८०७ ॥

रवेः मर्शः स्पर्शः तत्करस्पर्श इति यावत् । तटगान् तीर-स्थान् प्रति सौखातिकी सुखातप्रष्ट्री 'पृच्छतौ सुस्नातादिभ्यः' इति ठक् । सुखातान् पृच्छतीति विग्रहः । अत्र " मुखं प्रतिमुखं गर्भस्तावमर्शोपसंहृतिः ' इति प्रसिद्धक्रमपाठानां मुखादीनां पञ्चा-नां नाटकसन्धीनां सर्वात्मना व्युत्क्रमेण न्यसनम् । रम्योत्प्रेक्षा-संकीर्णमिति च विशेषः ॥

यमनियमासनदक्षप्राणायामा हरे भवत्पारि-
षदाः । प्रत्याहरन्ति यमभटगृहीतमपि नामधा-
रणादेव ॥ १८०८ ॥

हे हरे! अनेन—

ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च ।
प्रसह्य हरते यस्मात्तस्माद्धरिरितीर्यते ॥

इत्युक्तप्रकारेण यमोपसंहरणशक्तिमत्ता प्रकृतार्थोपस्कारिणी द्योतिता। 'हरिर्हरति पापानि' इत्युक्तपापनिराकरणशक्तता च। तव पारिषदाः सुनन्दनन्दप्रभृतयः पारिषद्याः। तान्विशिनष्टि—यमेत्यादिना। यमस्य समवर्तिनः नियमः नियमनं 'पातकिनो मत्सकाशमानेयाः' इत्याज्ञा तस्य असने निरासे दक्षः प्राणस्य शक्तेः 'शक्तिः पराक्रमः प्राणः' इत्यमरः। आयामः दैर्घ्यं येषां ते कृतान्तकृताज्ञानिराकरणधुरीणविपुलपराक्रमा इत्यर्थः। अत एव यमभटैः गृहीतमपि नरं अजामिळतुल्यमिति भावः। तव नाम्नः धारणादेव ग्रहणादेव एवकारेण तदितरोपायलेशस्पर्शः तस्यापि बुद्धिपूर्वकत्वं च व्युदस्यते। प्रत्याहरन्ति यमभटहस्तादाच्छिद्य स्ववशं नयन्तीति भावः। अत्र—

अयं हि कृतनिर्वेषो जन्मकोट्यंहसामपि।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः॥

इत्यादिप्रमाणशतं स्मर्तव्यम्। अत्र योगशास्त्रप्रसिद्धसहपाठानां यमनियमासनप्राणायामप्रत्याहारधारणानां ध्यानसमाधिविकलानां क्रमेण न्यसनम्॥

यथावा—

**मधुरां गिरं रमायाश्शृण्वन्कांचिदथ भवदवं तीव्रं त्वम्। सुगुणमयो ध्यातुर्मे शमय दृशा नाथ कालिकाशीतलया॥ १८०९॥**

मधुरां 'किमेवं निर्दोषः क इह जगति' इत्याद्युक्तप्रकारतयाऽतिरमणीयां कांचित् यांकांचित् न तु भूयसीमिति भावः। तावतैवं तत्परतन्त्रस्य तव चित्तप्रसादस्सुकर इति भावः। रमायाः त्वद्वासिपुरुषकारभूतायाः इति भावः। गिरं शृण्वन् अथ श्रव-

णानन्तरमेव हे नाथ! सुगुणमयः कारुण्यवात्सल्यादिगुणप्रचुरः त्वं कालिका मेघरेखा सेव शीतला तया दृशा ध्यातुः मे तीव्रं उग्रं भवदवं शमय। तीव्रं शमयेति वा योजना। अत्र 'अयोध्या मथुरा' इत्यादिप्रसिद्धस्य पुरीसप्तकस्य किंचिद्वैकल्येन क्रमातिक्रमेण च वर्णनम्॥

यथावा—

शुभभा रतीशजननी जलधिभवा नीरजातवनभवना। क्रोधवशचीरवासश्शापध्वस्तेन्द्रविभवदा जयतात्॥ १८१०॥

अत्र पुराणादौ सहपठितानामपि भारतीभवानीशचीनां क्रमप्रसिद्धिरहितानां न्यसनम्॥

यथावा—

विधिवामदेववनिताविनुतौ सुभगौ तमोविजयनिपुणौ। चरणौ मूर्ध्नि निधत्तां ममाब्धिजा बालिकाऽतिसुकुमारौ॥ १८११॥

अत्र--

वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः।

कात्यायनो गौतमश्च सुयज्ञो विजयस्तथा॥

इति प्रसिद्धसहपाठानामपि क्रमप्रसिद्धिविधुराणां वामदेवगौतमविजयजाबालीनां चतुर्णां वर्णनम्॥

इत्यलंकारमणिहारे रत्नावलीसरः सप्तसप्ततितमः.

---

## अथ तद्गुणसरः (७८)

स्वगुणस्य परित्यागात्तद्गुणोऽन्यगुणग्रहः ।

स्वगुणस्य परित्यागपूर्वकं स्वसन्निहितवस्त्वन्तरसंबन्धिगुणग्रहणं तद्गुणः । तस्य गुणोऽस्यास्तीत्यन्वर्थसंज्ञोऽयम् ॥

यथावा—

इन्दीवरसुषमाभरमन्दीकृतिनिपुणतावकाङ्गरुचा । रञ्जित इह वृषगिरिरयमञ्जननामानुरूपमुल्लसति ॥ १८१२ ॥

यथावा—

मरकतनिभनिजरुचिविच्छुरितं गरुडं जनास्स्नमारूढम् । सकलं जगद्विजेतुं शुकमधिरूढं स्मरं हरिमजानन् ॥ १८१३ ॥

यथावा—

अधररुचाऽधोऽरुणतमममसितमुपर्यक्षितारकारुचिभिः । नासामौक्तिकमेतद्भासा गुञ्जायतेऽम्ब भवदीयम् ॥ १८१४ ॥

यथावा—

सरसि निविशमानायां सलिलविहारे हिरिण्यवर्णायाम् । त्वय्यापः प्रणयन्ति श्रुतिकथितं स्वं हिरण्यवर्णात्वम् ॥ १८१५ ॥

'हिरण्यवर्णाश्शुचयः' इत्यादिश्रुत्युक्तं हिरण्यवर्णात्वमित्यर्थः। पयूदाहरणेषु स्वगुणत्यागपूर्वकान्यगुणग्रहणं स्पष्टमेव। आद्ये समालंकारेण द्वितीये भ्रान्तिमता तृतीये उपमया तुरीये गम्योत्प्रेक्षया चायं परिष्कृत इति परस्परं वैलक्षण्यं बोध्यम् ॥

इत्यलंकारमणिहारे तद्गुणसरोऽष्टसप्ततितमः.

---

## अथ पूर्वरूपसरः (७९)

---

**स्वगुणस्य पुनः प्राप्तिः पूर्वरूपमितीर्यते ।**

पूर्वं स्वगुणत्यागेन गृहीतान्यगुणस्य पुनर्निजगुणप्राप्तिः पूर्वरूपं नामालंकारः ॥

यथावा—

**जलधेरधिरूढाया हृदयं स्वरुचा श्रियोऽतिनैल्यजुषः । वैलक्ष्यं वीक्ष्य हरिर्व्यधाद्यथापुरमिमां स्वमणिभासा ॥ १८१६ ॥**

वैलक्ष्यं हिरण्यवर्णाया अपि मम वल्लभहृदयपरिष्वङ्गसंभ्रमेण निरतिशयो नीलिमा समजनीति त्रपाविशेषः। स्वमणेः कौस्तुभस्य भासा इमां श्रियं यथापुरं पूर्ववदेव हिरण्यवर्णां व्यधात्। न चात्र हिरण्यवर्णत्वेन श्रुतायाश्श्रियः पीतवर्णतया कौस्तुभभासोऽरुणतया च विभिन्नत्वात्कथं पूर्वरूपप्राप्तिरिति वाच्यं, पीतारुणवर्णयोरैक्यवर्णनस्य कविसमयसिद्धत्वात्। तथाचोक्तमलंकारशेखरे

कविसंप्रदायरत्ने षोडशमरीचौ—'कमलासंपदोः' इत्युपक्रम्य 'नीललोहितयोस्स्वर्णपरागाग्निशिखादिषु' इत्युक्त्वा 'ऐक्यमेवाभिसंहितम्' इत्यन्तेन ॥

यथावा—

**नीलायितं निजरुचा वृषाचलनाथ मौक्तिकाकल्पम् । उरसि तव धवलयन्ती सरसिजनयना स्मितैः क्रियात्कुशलम् ॥ १८१७ ॥**

उदाहरणद्वयेऽपि पूर्वं परित्यक्तस्य स्वगुणस्य पुनः प्राप्तिस्स्पष्टैव ॥ अयमेव तद्गुण इति केचिद्व्यवाहार्षुः । तन्न चतुरस्रं, अत्र तद्गुणानवकाशात् । स्वगुणत्यागेनान्यदीयगुणपरिग्रहे हि तस्य प्रवृत्तिः । न चेह तत्संभवः श्रियो मौक्तिकाकल्पस्य च प्रथमं स्वगुणत्यागेनान्यदीयगुणग्रहणसद्भावेऽपि पश्चात् स्वगुणत्यागान्यदीयगुणग्रहणयोरभावात् । अतएव स्वगुणत्यागादिति तद्गुणलक्षणे स्वगुणेत्यत्र समासान्तर्हितगुणगुणिसंबन्धमात्रमागन्तुकानागन्तुकसाधारणं विवक्षितम् । ततश्च 'विभिन्नवर्णा गरुडाग्रजेन' इत्यादौ गृहीतस्यारुणवर्णस्यापि स्वगुणतया तत्परित्यागेनान्यदीयगुणस्वीकारसद्भावात्तद्गुण एवेति निरस्तम् । तथाऽपि स्वकीयस्यैव गुणस्य आप्त्या अन्यदीयगुणाभावेन तद्गुणस्य दुर्वचत्वात् । किं च अयमेव तद्गुण इत्युक्ते 'पद्मरागायते नासामौक्तिका तेऽधरत्विषा' इत्यादिप्रसिद्धतद्गुणालंकारोदाहरणेषु तद्गुणालंकारो न स्यात् । न चेष्टापत्तिः, अनुभवसिद्धायाश्चमत्कृतेर्निरवलम्बनतापत्तेरिति दिक् ॥

**यत्तु स्यात्विकृतेऽप्यर्थे पूर्वावस्थानुवर्तनम् ।**
**पूर्वरूपं तमप्याहुरलंकृतिविशारदाः ॥**

पूर्वावस्थापेक्षया विजातीयतां प्राप्तेऽप्यर्थे पूर्वावस्थानुवृत्तिरपि पूर्वरूपमलंकारः ॥

यथावा—

चित्रमिदं त्वत्कृपया बन्धविमोक्षं गतोऽपि पद्माक्ष । प्राप्नोति महाशुद्धप्रकृतिगुणामोचनं यदात्माऽयम् ॥ १८१८ ॥

अयमात्मा जीवः त्वत्कृपया बन्धस्य प्रकृतिसंबन्धस्य विमोक्षं गतोऽपि महाशुद्धाः अतिमात्राशुच्यः ये प्रकृतेर्गुणाः तमःप्रभृतयः तेषां आमोचनं बन्धं प्राप्नोतीति चित्रम् । तत्त्वं तु महाशुद्धाः अतिवेलनिर्मलाः ये प्रकृतिगुणाः स्वभावगुणाः अपहतपाप्मत्वादयः स्वाभाविका गुणा इत्यर्थः । 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः' इति मेदिनी। तैः अमोचनं अविनाभावं आमोचनं संबन्धं वा प्राप्नोति आविर्भूतस्वाभाविकगुणाष्टको भवतीत्यर्थः । अत्र बन्धमोक्षेण पूर्वावस्थातो विलक्षणस्य प्रत्यगात्मनः श्लेषमहिम्ना महाशुद्धप्रकृतिगुणामोचनरूपपूर्वावस्थानुवृत्तेर्लक्षणानुगतिः ॥

यथावा—

जगतां सवितस्तावकदिव्यालोकेन तमसि गळितेऽपि । भूयोऽपि सत्तमश्रीर्भजतामनुवर्तते विचित्रमिदम् ॥ १८१९ ॥

हे जगतां सवितः जगज्जनक ! पक्षे जगतामित्येतत् भजतामित्यस्य विशेष्यतया योज्यम् । हे सवितः भानो ! तावकेन दिव्येन आलोकेन दर्शनेन तेजसा च । तमसि अज्ञाने तदुपलक्षितप्रकृतौ वा । अन्यत्र तिमिरे विगळितेऽपि भूयोऽपि भजतां सत्तमसः अधि-

काशानस्य अतिशयिततिमिरस्य च श्रीः विभवः अन्यत्र सत्तमा अतिशोभना 'सत्तमश्चातिशोभने' इत्यमरः । श्रीः ज्ञानादिसंपत् मुक्तैश्वर्यं वा अनुवर्तते । अत्रापि श्लेषमहिम्ना तमसि गळितेऽपि तदनुवृत्तिर्दर्शिता ॥

यथावा—

प्रागम्ब तव कटाक्षाद्येषां कण्ठेषु सतरळा-
हाराः । पश्चादपि हन्तासंस्तेषां कण्ठेषु सतरळा
हाराः ॥ १८२० ॥

हे अम्ब! तव कटाक्षात्प्राक् कटाक्षप्रसरणात्पूर्वं येषां जनानां कण्ठेषु गळबिलेषु सतरळाः तरळया यवाग्वा सहिताः आहाराः निहीनाभ्यवहारा इत्यर्थः । आसन् पश्चादपि त्वत्कटाक्षप्रसरेण संपदुत्कर्षलाभादनन्तरमपि तेषां कण्ठेषु सतरळाहाराः उक्ताभ्यवहारा एव । पक्षे ग्रीवासु सतरळाः मध्यमणिसहिताः हाराः मुक्तावळ्यः आसन् । हन्तेत्याश्चर्ये 'तरळं चञ्चले षिद्गे भास्वरेऽपि त्रिलिङ्गकम् । हारमध्यमणौ पुंसि यवागूसुरयोस्स्त्रियाम्' इति मेदिनी । अत्रापि सतरळाहारा इति श्लेषेण पूर्वावस्थानुवृत्तिर्दर्शिता ॥

यथावा—

दशमुखशमनात्त्रिदिवक्षोभे दशरथसुतेन शमि-
तेऽपि । संकुलिता द्यौर्वित मदविशृङ्खलैरावणो-
द्भटविलासैः ॥ १८२१ ॥

द्यौः स्वर्गः मदेन विशृङ्खलैः निरर्गळैः रावणस्य दाशाननस्य उद्भटविलासैः संकुलिता संबाधिता । पक्षे मदेन विशृंखलः विग-

ळितनिगळः ऐरावणः ऐरावतः तस्य उद्भटविलासैः दशमुखाव-स्थानावसरे तद्दोर्दण्डप्रतापशोषितमदतयाऽवस्थित ऐरावतस्त-स्मिन्नस्तमिते प्ररूढमदतया निरर्गळप्रचारोऽजनीति भावः। अत्र दशमुखशमनेऽपि दिवः पूर्वावस्थानुवृत्तिश्श्लेषोज्जीविता ॥

यथावा—

**असमाधिक एव भवन् पुरा मुरारेऽथ तव पदं प्रेप्सुः। दधदपि समाधिमुच्चैरसमाधिक एव भवति बत मनुजः ॥ १८२२ ॥**

असमः आधिर्यस्य सः अविद्यमानस्समाधिर्यस्य स इति च। असमाधिक एव असदृशाधियुक्त एव। समाधिरहित एव। निस्स-माभ्यधिक एवेति च। अत्रापि असमाधिकत्वरूपपूर्वावस्थानुवृ-त्तिश्श्लेषगर्भिता ॥

यथावा—

**प्रविसरति तव कटाक्षे विश्राणयतेऽन्नमम्ब सुगुणो यः। अपि तस्मिन्विकले बत विश्राण-यतेऽन्नमेष सुगुणतया ॥ १८२३ ॥**

हे अम्ब! तव कटाक्षे प्रविसरति सति यः पुमान् सुगुणः—

स श्लाघ्यस्स गुणी धन्यस्स कुलीनस्स बुद्धिमान्।
स शूरस्स च विक्रान्तो यं त्वं देवि निरीक्षसे ॥

इत्युक्तरीत्या कल्याणगुणवान् सन् अन्नं विश्राणयते वितरति 'श्रण दाने' चौरादिकादस्मात्स्वार्थे ण्यान्ताल्लट्। एष पुमान् तस्मिन् तव कटाक्षे विकलेऽपि स्वस्मिन् परावृत्तेऽपि सुगुणतया

अन्नं विश्राणयते । बतेत्याश्चर्ये । परिहारस्तु गुणस्य सूदस्य भावः गुणता सुष्ठु गुणता सुगुणता । पाकशिक्षितसूदत्वमित्यर्थः तया 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागशौर्यादिसत्वादिसंध्यायावृत्तिरज्जुषु' इति मेदिनी । अन्नं विश्राणयति विस्राविता श्राणा यावागूः यस्य तत्तथोक्तं करोति परगृहे अन्नविस्रावयिता पाचको भवतीति भावः ॥ 'यवागूरुष्णिका श्राणा' इत्यमरः । अत्रापि पूर्वावस्थाऽनुवृत्तिश्श्लेषेण वर्णिता ॥

यथावा—

कश्चिद्द्विजाग्रगण्यो मनुष्यधर्माधिकाश्रियं शौरे । अवलम्ब्य तव कटाक्षाद्भूयस्सुखगोऽभवत्किल विचित्रम् ॥ १८२४ ॥

द्विजाग्रगण्यः विहगश्रेष्ठः विप्राग्रणीः कुचेल इति तत्त्वम् । मनुष्यधर्मैः मनुजधर्मैः अधिकां कुबेरादप्यधिकामिति वस्तुस्थितिः भूयः पुनः सुखगः शोभनो विहगः भूयः भूरि यत् सुखं तद्गच्छतीति तथोक्त इति वास्तवार्थः । अभवत् । किलेत्यैतिह्ये । स्पष्टमन्यत् । अत्रापि पूर्वावस्थाऽनुवृत्तिर्दर्शिता ॥

यथावा—

विध्वस्तदशमुखश्रीर्विभीषणवशंगताऽपि बत लङ्का । अभिवृद्धबहुमुखश्रीरासीद्रघुवीर तेजसा भवतः ॥ १८२५ ॥

अभिवृद्धा बहुमुखस्य दशाननस्य श्रीः यस्याः नानाविधा समृद्धिरस्या इति तु तत्त्वम् । सर्वं प्राग्वत् ॥

यथावा—

विपरीतदशायामपि विशिष्टवर्णा गिरां तव समानाः। सारसरसास्सुधाम्बुधिसुते न जहति स्ववर्णपरिपाटीम् ॥ १८२६ ॥

हे सुधाम्बुधिसुते! इदं तद्वाचोमाधुर्यातिशयं द्योतयितुम्। विशिष्टः श्रेष्ठः वर्णः येषां ते ब्राह्मणवर्णा इत्यर्थः। प्रशस्ताक्षरा इति तु तत्त्वम्। अतएव तव गिरां समानाः मानसहिताः स्वद्वाचा बहुमानिता इति यावत्। माधुर्येण त्वद्वाकुल्या इति तत्त्वम्। सारसरसाः पद्मरसाः मकरन्दाः, साराः श्रेष्ठाः सरसाश्चेत्यप्युपस्कार्यम्। अतएव विपरीतदशायां धर्मविपर्याससमयेऽपि स्ववर्णपरिपाटीं ब्राह्मणवर्णोचितक्रमं न जहति। यथापुरमेव वर्तन्त इति भावः। वस्तुतस्तु प्रातिलोम्येन पठनावसरेऽपि स्ववर्णानां निजाक्षराणां परिपाटीं अनुक्रमं न जहति। सारसरसा इत्यस्यानुलोमविलोमपठनयोस्तुल्यानुपूर्वीकत्वादिति भावः। अत्र पूर्वावस्थानुवृत्तिरशब्दार्थतादात्म्यमूलकश्लेषोज्जीवितेति विशेषः॥

यथावा—

निखिलजगच्छेषिण इह संप्रति शौरेर्भवन् सदादासः। नैक्यं भजेत्कदाऽपि प्रतीकमुक्तोऽपि तादृगेव स्यात् ॥ १८२७ ॥

निखिलजगच्छेषिणः शौरेः संप्रति अधुना एतद्देहसंबन्धितादशायामिति यावत्। सदादासो भवन् जनः—

दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः।
अतोऽहमपि ते दास इति मत्वा नमाम्यहम्॥

इत्यादिप्रमाणादिति भावः । प्रतीकेन अवयवेन शरीरेणेति यावत् । मुक्तोऽपि प्रतीकान्मुक्तोऽपीति वा । एतद्देहप्रहाणपूर्वकं निश्श्रेयसं प्राप्तोऽपीति यावत् । ऐक्यं तस्य भगवतः अभेदं कदाचिदपि न भजेत् न प्राप्नुयात् । किंतु तादृगेव तत्सदृश एव स्यात् । 'निरञ्जनः परमं साम्यमुपैति' इति परमसाम्यश्रवणात् । अनेन—

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥

इति श्रुत्यर्थो वर्णितः । अस्याश्श्रुतेरयमर्थः—शुद्धे शुद्धं जलं प्रक्षिप्तं तत्सदृशमेव भवति न तु किंचिदपि विसदृशम् । एवं मनननिदिध्यासनशीलस्यात्माऽपि परमात्मसदृश एवेति न त्वभेदं प्राप्नोति, तादृक्छब्दश्रवणात् । तादृक्छब्दस्तत्सदृशवाची । सादृश्यं च भेदघटितमेवेति । किंच तादृगेव सदादास एव स्यात् न तु स्वयं सर्वशेषीति भावः । पक्षे सदादासशब्दः प्रतीकं प्रतिप्रतिलोमं यथास्यात्तथा 'प्रतिकूले प्रतीकं स्यात्' इत्यमरः । उक्तोऽपि पठितोऽपि तादृगेव सदादास एव स्यात् न तु विभिन्नानुपूर्वीक इति भावः । अत्रापि पूर्वावस्थानुवर्तनं पूर्ववदेव । इदं पूर्वरूपप्रकारद्वयमपि जयदेवोपज्ञम् ॥

इत्यलंकारमणिहारे पूर्वरूपसर एकोनाशीतितमः.

---

## अथातद्गुणसरः (८०)

---

### अतद्गुणं संगतान्यगुणानङ्गीकृतिं विदुः ।

गुणवत्सन्निधावपि तदीयगुणानङ्गीकारोऽतद्गुणालंकारः ॥

यथा—

विदलितवलरिपुमणिवरकान्ते फणिशैलनाथ-हृदयान्ते। अपि सततकृतनिवासा नासादयसेऽम्ब किंचिदपि नैल्यम् ॥ १८२८ ॥

यथावा—

शुचितरफणिवररुचिभरशोणफणामणिमरीचिनिचयेन। निचुलितरुचिरपि नितरां फणिशयन जहासि नासितत्वं स्वम् ॥ १८२९ ॥

यथावा—

परिहितमप्यनवरतं पीताम्बरमम्बुजाक्ष भवतेदम्। न जहाति पीततां स्वां परिदधदपि तद्भवानसिततां च ॥ १८३० ॥

यथावा—

अपि कमलानिलय हरे त्वद्रुचिकमलारुची मिथो मिळिते। प्रविविक्ते एव भृशं भातो यमुनासरस्वतीतुल्ये ॥ १८३१ ॥

अत्राद्योदाहरणे परगुणाग्रहणं शाब्दम्। स्वगुणत्यागाभाव अर्थः। अनन्तरयोरुदाहरणयोः स्वगुणत्यागाभावश्शाब्दः। परगुणाग्रहणं त्वार्थम्। अनयोरपि द्वितीयोदाहरणे पीताम्बरभगवतोः ते परस्परमिति विशेषः। तुरीयोदाहरणे तूभयमप्यार्थमित्यवधेयम् ॥

न चान्यगुणेनान्यत्र गुणोदयानुदयरूपाभ्यामुल्लासावज्ञालंकाराभ्यां तद्गुणातद्गुणयोर्गतार्थतेति वाच्यम्। उल्लासावज्ञालक्षणघटको गुणशब्दो दोषप्रत्यनीकवाची। अन्यगुणेनान्यत्र गुणोदयानुदयौ च न तस्यैव गुणस्य संक्रमासंक्रमौ। किंतु सदाचार्योपदेशेन सदसच्छास्त्रयोर्बोधोदयानुदयवत्तद्गुणजन्यतया संभावितयोर्गुणान्तरयोरुदयानुदयौ। तद्गुणातद्गुणयोस्तु गुणशब्दो रूपरसगन्धादिवाची। तत्रान्यदीयगुणग्रहणाग्रहणे च रक्तस्फटिकवसनमालिन्यादिन्यायेनान्यदीयगुणेनैवानुरञ्जनानुरञ्जने विवक्षिते तथैव च दर्शितान्युदाहरणानि। एवंच प्रदर्शयिष्यमाणे उदाहरणे नातद्गुणालंकारः। किंत्ववज्ञालंकार एव॥

शतकोटितोऽपि शतकोट्यधिककठोरे फणीन्द्रगिरिशिखरे। निवसन्नप्यविरतमिह नैष्ठुर्यं नाथ नाश्रये क्वापि॥ १८३२॥

अत्र कठोरतारूपगुणस्यानुपरञ्जकत्वात्तदनङ्गीकारो नातद्गुणः॥

यथावा—

निहिताऽपि विधौ प्रसभं न हि तादृशशुद्धिमेति चपला धीः। वृद्धाऽपि समानतया न सैरिभी भजति सौरभीवृत्तिम्॥ १८३३॥

विधौ भगवति चन्द्रे च। निहिताऽपि धीः तादृशीं तत्प्रासत्त्यनुगुणां विशुलदृशीं च शुद्धिं नैर्मल्यं विजातीयप्रत्ययासंवलितत्वमिति यावत्। पक्षे धवलिमानं नैति हि। कुत इत्यत्राह—चपलेति। चपलत्वादेवेति भावः। समानतया वृद्धाऽपि सौर-

भीमिस्सहाभिवृद्धाऽपि सैरिभी महिषी। जातिलक्षणो ङीष्। सौरभी सुरभिः गौः सुरधेनुर्वा 'सुरभिर्गवि च स्त्रियाम्' इत्यमरः तस्या इयं सौरभी, अण्णन्तलक्षणो ङीप्। तत्संबन्धिनी वत्सतरी तस्याः वृत्तिं स्थितिं न भजति। वत्सतर्या एव वृत्तिं न भजति किंपुनस्साक्षात्सुरभिवृत्तिमिति भावः। पक्षे समानतया सौरभीशब्देन सह तुल्यतया वृद्धा वृद्धसंज्ञां प्राप्ताऽपि उभयोरप्यचामादेर्वृद्धत्वात् 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इतिह्यनुशासनम्। सैरिभी सैरिभीति शब्दः। अर्थगतस्त्रीत्वस्य शब्दे आरोपः। सौरभीवृत्तिं सौरभीशब्दस्य स्थितिं न भजति। उभयोरपि शब्दयोर्वृद्धत्वेऽपि तयोरन्योन्यं विजातीयत्वादिति भावः। किंच सैरिभीशब्दः सौरभीशब्दस्य वृत्तिं न भजति। सुरभेरियं सौरभीति तद्धितवृत्तिमत्त्वात्तस्य, स्वस्य च केवलरूढतया तादृशवृत्तिमत्त्वाभावादिति भावः। अत्र दृष्टान्तरूपो महावाक्यार्थः, बिम्बप्रतिबिम्बभावापन्नत्वात्। तत्र दार्ष्टान्तिकवाक्यार्थः विधुप्रभृतिशब्दप्रतिपाद्यभगवच्चन्द्रादिरूपार्थद्वयश्लेषभित्तिकाभेदाध्यवसायानुप्राणितातद्गुणालंकाररूप एव। दृष्टान्तवाक्यार्थस्तु पूर्वोक्तरीत्याऽवज्ञालंकाररूप इति पूर्वोदाहरणेभ्यो विच्छित्तिविशेषः॥

अत्र गुणग्राहकापेक्षया सन्निहितस्य गुणवत उत्कृष्टत्वसमत्वाभ्यां द्वैविध्यमिति सर्वस्वकारः। तस्यायमाशयः—अपकृष्टसंबन्धिगुणाग्रहणस्य स्वाभाविकत्वेन वैचित्र्यानाधायकत्वादनलंकारतैवेत्यपकृष्टत्वेन तृतीयः प्रकारस्तु न संभवतीति। अन्ये अवान्तरचमत्कारविशेषविरहात् द्वैविध्यमपि नेति वदन्ति। यद्यपि गुणवद्वस्तुसांनिध्यलक्षणकारणसद्भावेऽपि गुणानुदयस्यावज्ञालंकारातद्गुणयोस्सद्भावादिमौ विशेषोक्तितो नातिरिच्येते 'कार्या-

जनिर्विशेषोक्तिस्सति पुष्कलकारणे' इति तत्सामान्यलक्षणाक्रान्तत्वात् । तथाऽपि उल्लासतद्गुणप्रतिद्वंद्विना विशेषाकारेणालंकारान्तरतया परिगणिताविल्याहुः ॥

इत्यलंकारमणिहारे तद्गुणसरोऽशीतितमः.

## अथानुगुणसरः (८१)

स्वसजातीयगुणवदन्यसांनिध्यतो यदि ।
उत्कर्षः पूर्वसिद्धस्य गुणस्यानुगुणं हि तत् ॥

स्वसमानगुणवदन्यसन्निधानात्प्राग्विद्यमानस्वकीयगुणोत्कर्षवर्णनमनुगुणालंकारः । अयं च जयदेवोपक्रमम् ॥

यथावा—

संसिद्धित इन्दीवरसंसद्धितरुचि ततोऽञ्जनेनाक्तम् । त्रिगुणाञ्जनमिव रमणावलोकने तद्दुचाम्ब तव नयनम् ॥ १८३४ ॥

संसिद्धितः स्वभावतः 'संसिद्धिप्रकृती समे' इत्यमरः । इन्दीवराणां संसत् सभा समूहः तस्याः हितं तत्सदृशमिति यावत् । अत्र प्रकृत्यैव सिद्धस्य लक्ष्मीनयनश्यामलिम्नः अञ्जनादिना उत्कर्षः ॥

यथावा—

नवपद्मरागकाञ्चीछविमसृणितकनकवसनजनितरुचा । छुरितं तव जगदम्ब स्फुरति वपुर्दिव्यमतिपिशङ्गतया ॥ १८३५ ॥

इत्यलंकारमणिहारे अनुगुणसर एकाशीतितमः.

## अथ मीलितसरः (८२)

**न दृश्यते भेद एव सादृश्याद्यदि मीलितम् ।**

सदृशयोर्वस्तुनोस्सादृश्याद्भेदानभिव्यक्तौ मीलितं नामालंकारः ॥

यथा—

**काञ्चन्यनुलेपनमिह काञ्चनगौरे मुहुस्तव कपोले । विदधानं तददर्शनखिन्नं स्विन्नं पतिं हससि पद्मे ॥ १८३६ ॥**

हे पद्मे ! काञ्चनी हरिद्रा 'निशाख्या काञ्चनी पीता हरिद्रा' इत्यमरः । तच्चूर्णमिति यावत् । तस्याः अनुलेपनं परिणयोत्सवादाविति भावः । काञ्चनगौरे तव कपोले मुहुः विदधानं तस्यानुलेपनस्यादर्शनेन सावर्ण्याद्विविच्याग्रहणेन खिन्नं वृथैव मम प्रयासोऽजनीति खेदशालिनं अतएव स्विन्नं पतिं हससि । अत्र कमलाकपोलफलकहरिद्राचूर्णानुलेपनयोर्गौरगुणसाम्याद्भेदानध्यवसायः ॥

यथावा—

**श्यामलविकसितकुवलयकोमलरूपे निसर्गसुरभिणि ते । अलिके मुरहर मृगमदतिलकमिदं केन नाम जानीयाम् ॥ १८३७ ॥**

अत्र श्यामलिमसौरभाभ्यां श्रीनिवासफालमृगमदतिलकयोस्साम्याद्भेदानध्यवसायः ॥

प्राचां मते त्वेवं लक्षणम् —

वस्तुतुल्येन लिङ्गेन निजेनागन्तुकेन वा । पिधीयते वस्तुना चेन्मीलितं तदुदाहृतम् ॥

यत्र प्रबलेन केनचिद्वस्तुना स्वाभाविकेनागन्तुकेन वा स्वनिगूह्यवस्त्वन्तरसाधारणेन स्वगतेन तुल्येन लिङ्गेन चिह्नेन वस्त्वन्तरं पिधीयते निगूह्यते तत्रोभयत्रापि मीलितं नामालंकारः। वस्तुद्वयस्य लक्षणसाम्यात्तयोः केनचिद्बलीयसा तदन्यस्य स्वरूपतिरोधानं मीलितमिति निष्कर्षः । न चात्र 'ताटङ्कवज्ररुचिभर' इत्यादिवक्ष्यमाणात्सामान्यान्न वैलक्षण्यमिति वाच्यं, यत्र वस्तुद्वयस्य लिङ्गसाम्ये सति तयोर्मध्ये केनचिद्बलिना तदन्यस्वरूपमेव तिरोधीयते तत्र मीलितं; यत्र तु स्वरूपप्रतीतावपि गुणसाम्याद्भेदतिरोधानं तत्र सामान्यमिति वैलक्षण्यात् ॥

यथा—

काकुत्स्थस्य निसर्गादरुणिमकान्ते विलोचनयुगान्ते । क्रोधोदयं नदीनां नाथो नाविददतश्चिरं स्तब्धः ॥ १८३८ ॥

यथावा—

लक्ष्म्याः कपोलफलके निसर्गगौरे हिरण्यवर्णायाः । प्रणयाद्रोषो योऽजन्यधोक्षजेनापि स किल नाज्ञायि ॥ १८३९ ॥

यथावा—

स्मितललितं तव वदनं स्वत एव विकासि-

तामरसनयनम् । कृतपदमप्यम्ब त्वयि कुत एव नतेष्वनुग्रहं विद्याम् ॥ १८४० ॥

अतएव स्तब्धः स्वात्मानमप्रदर्शयन्नवस्थित इत्यर्थः । अत्राद्ये काकुत्स्थदृगन्तेन स्वस्य नैसर्गिकेण स्वनिगूह्यक्रोधोदयसाधारणेन चारुणिमरूपेण लिङ्गेन क्रोधोदय आगन्तुको निगूह्यते । द्वितीये तु श्रीकपोलफलकेन स्वस्य स्वतस्सिद्धेन स्वगोपनीयरोषसाधारणेनारुण्येन लिङ्गेनागन्तुको रोषो निगूह्यते । तृतीये तु श्रियो वदनेन स्वस्य स्वाभाविकेन स्वनिगूहितव्यानुग्रहसाधारणेन स्मितललितत्वादिना लिङ्गेन स्वाभाविकोऽनुग्रहो निगूह्यत इति विशेषः ॥

यथावा—

धनुषि रवावुषसि हरिं वृषशिखरिण्यश्नतां सरोमाञ्चम् । भक्तिः कृतास्पदाऽपि व्यक्तिं नोपैति हृदि सकम्पानाम् ॥ १८४१ ॥

अत्रागन्तुकहेमन्तसमयजनितपुलककम्पलक्षणानिगूहितव्यसाधारणधर्मरूपेण लिङ्गेन भक्तिः स्वरूपत एव तिरोधीयते ॥

इत्यलंकारमणिहारे मीलितसरो द्व्यशीतितमः.

---

## अथ सामान्यालंकारसरः (८३)

---

**न गृह्यते विशेषश्चेत्साम्यात्सामान्यमीरितम् ॥**

अनेकस्य वस्तुनस्साम्येन यत् व्यावर्तकधर्मानुपलम्भः तत्सामान्यं नामालंकारः ॥

यथावा—

वर्षावनविहृतौ घनवलये त्वां वृषगिरीश जलधिसुता। तां च न काञ्चनवर्णां विद्युत्सु भवान्विविच्य नागृह्णात् ॥ १८४२ ॥

मीलितालंकारे सर्वात्मना भेदस्यैव सामान्यधर्मनिबन्धनस्य तत्तद्व्यक्तित्वादिविशेषनिबन्धनस्य चानुपलम्भः, सामान्ये तु व्यक्तीनां परस्परभेदावबोधेऽपि परस्परव्यावर्तकधर्मानुपलम्भमात्रं सादृश्यादुपनिबध्यत इति भिदा। मीलितालंकारोदाहरणे हि निसर्गगौराल्लक्ष्मीकपोलफलकादेर्वस्त्वन्तरत्वेनागन्तुकं हरिद्रानुलेपनगौरत्वादिकं न भासते। सामान्योदाहरणे तु भगवल्लक्ष्म्योर्घनविद्युतोश्च व्यक्त्यन्तरत्वेन भानमस्त्येव। किंतु अयं भगवान् अयं घनः इयं लक्ष्मीः इयं विद्युदिति विशेषस्तु नोपलक्ष्यते। अत एव भेदतिरोधानान्मीलितं तदतिरोधानेऽपि साम्येन व्यावर्तकानवभासे सामान्यमित्युभयोरप्यन्वर्थता ॥

यथावा—

मधुमथन श्लथमलिके तवालकं तिलकमपि जनो भिन्नम्। अतिमात्रभिदायामपि सहसा बहुवर्णसाम्यतो नावैत् ॥ १८४३ ॥

हे भगवन्! जनः तव अलिके ललाटे श्लथः अलकं तिलकं मृगमदतिलकं च अतिमात्रभिदायां सत्यामपि अतिवेलभेदे सत्यपि पक्षे अवर्णतिवर्णाभ्यां भेदे सत्यपीत्यर्थः। बहु यत् वर्णस्य नीलवर्णस्य साम्यं तस्मात् पक्षे बहूनां लकारादीनां वर्णानां साम्यात् भिन्नं विशेषवत् नावैत्। अत्रालकतिलकयोर्भिन्नयोरेव सतोर्वर्णसाम्यान्न विशेषग्रहणम्। चमत्कारान्तरं तु पूर्वस्माद्विशेषः॥

यथावा—

**नैल्यं घनेऽस्ति माधव तौल्यं तस्यास्ति विग्रहे भवतः। नैतौ विशेषभाजौ ज्ञातौ तावन्ततस्सदृशवर्णौ ॥ १८४४ ॥**

इयं घनागमे वने विहरन्तं भगवन्तं श्रीनिवासं प्रति कस्यचिदुक्तिः। हे माधव! घने मेघे नैल्यं श्यामलिमा अस्ति अत एव तस्य घनस्य तौल्यं भवतः तव विग्रहे वपुषि अस्ति अत एव सदृशवर्णौ तुल्यवर्णौ तावेतौ घनभगवद्विग्रहौ अन्ततः दूरं पर्यालोचने इति यावत्। विशेषभाजौ वैलक्षण्यभाजौ न न भवतः द्वयोरपि नीलत्वादिति भावः। पक्षे तावेतौ नैल्यं तौल्यमिति शब्दौ तावेताविति पुल्लिङ्गनिर्देशो विशेष्यकटाक्षेण। अन्ततः अन्ते सदृशः वर्णः ल्यमित्याकारकवर्णः ययोस्तौ। नैतौ इति वर्णाभ्यां विशेषभाजौ वैलक्षण्ययुजौ ज्ञातौ इत्यर्थः। नैल्यतौल्यशब्दयोस्ताभ्यामेव विशेषदर्शनादित्यर्थोऽपि चमत्कारी। अत्रापि पूर्ववदेव॥

प्राचां मते त्वेवं लक्षणम्—

**गुणतौल्यविवक्षातः परस्य प्रस्तुतेन यत्। ऐकात्म्यमुच्यते योगात्सामान्यं तदुदीरितम् ॥**

यत्र वस्तुतः प्रस्तुतात् भिन्नमस्य प्रस्तुतं गुणसाम्यविवक्षया प्रस्तुतात्पृथगप्रतीयमानतया निबध्यते तत्र योगात् समानगुणसंबन्धरूपात् सामान्यं नामालंकारः। वस्तुद्वयस्य पृथक् स्वरूपप्रतीतावपि गुणसाम्याद्भेदतिरोधानं सामान्यमिति तु निष्कर्षः। अस्य च मीलिताद्वैलक्षण्यं तत्रैव निरूपितम्। तद्गुणे

तु स्वगुणपरित्यागपूर्वकोऽन्यगुणपरिग्रहः । इह तु स्वगुणमपरित्यज्यैव तुल्यगुणादन्यस्मात् पृथगविभाव्यमानतेति ततो भिदा ॥

यथा—

केयूरयुगळखचिता मायूररुचिर्हरिन्मणीश्रेणी। हरिदिव्यविग्रहरुचा लब्धाद्वैता विविच्य नाग्राहि ॥ १८४५ ॥

यथावा—

ताटङ्कवज्ररुचिभरकबळितरूपा तवाम्ब रदनाळी । निपुणनिरूपणकुशलैरपि नैव पृथक्तया जनैर्जज्ञे ॥ १८४६ ॥

अत्राद्येउदाहरणे प्रस्तुतभगवद्दिव्यविग्रहरुच्यपेक्षया हरितगुणसाम्यादप्रस्तुतगारुत्मतमणीश्रेण्याः पृथगविभाव्यमानतोक्ता। द्वितीये तु अप्रस्तुतात्ताटङ्कवज्ररुचिभरात् धवलगुणसाम्यात्प्रस्तुतायाा लक्ष्मीरदनावळ्याः पृथगप्रतीयमानता निबद्धेति भेदः । एवंच एतन्मते 'पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम्' इत्यन्यदीये पद्ये 'वर्षावनविहृतौ' इत्यास्माकीने पद्ये च मुखपद्मादीनां भेदावभासेऽपि व्यावर्तकास्फुरणादलंकारान्तरेण भाव्यम् । स्वरूपातिरोधानेन मीलितासंभवात् भेदातिरोधानेन सामान्यस्याप्यसंभवात् । यद्वा गुणसाम्याद्विशेषाग्रह इति सामान्यालंकारसामान्यलक्षणम् । विशेषाग्रहश्च कचिद्भेदे गृह्यमाणे कचिच्चागृह्यमाणे इति कल्पयित्वा तदवान्तरभेदेन भाव्यम् । प्राथमिके 'न दृश्यते भेद एव सादृश्याद्यदि मीलितम्' इति मते—

अपाङ्गतरळे दृशौ तरळवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥

इति प्राचीनपद्ये तन्मीलितोदाहरणे 'धनुषि स्वावुषसि हरिम्' इत्यास्माकीने पद्ये च स्वरूपतिरोधानस्थले स्वरूपतो ज्ञायमाने वस्तुद्वये सादृश्याद्भेदाग्रहणे मीलितमिति लक्षणे अभ्युपगम्यमाने अलंकारान्तरेण भाव्यम् । सादृश्याद्भेदाग्रहणमित्येतावन्मात्रं मीलितमिति लक्षणाङ्गीकारे मीलितावान्तरभेदेन भाव्यमिति ध्येयम् । सर्वमिदं कुवलयानन्दे स्पष्टम् ॥

इत्यलंकारमणिहारे सामान्यसरश्चतुरशीतितमः.

---

## अथोन्मीलितसरः (८५)

---

**स्फूता समानगुणयोर्भेदस्योन्मीलितं विदुः ।**

गुणसाम्येन भेदानध्यवसाये प्राप्ते केनापि निमित्तेन भेदस्फूर्तौ मीलितप्रतिद्वंद्वि उन्मीलितम् ॥

यथा—

**तीरे विहृतिजुषस्तव पूरे गात्रद्युतेस्सरति शौरेः । तन्मिलितां द्युमणिसुतां शैशिर्येणैव जानते गोप्यः ॥ १८५७ ॥**

अत्र नीलगुणसाम्येन भगवद्दिव्यविग्रहरुचिपूरभेदानध्यवसाये प्राप्ते शैशिर्येण निमित्तेन यमुनायास्ततो भेदस्फूर्तेरुन्मीलितम् ॥

तद्गुणरीत्या भेदानध्यवसायप्राप्तावपीदं दृश्यते । यथावा—

**शीतद्युतिविद्योतैः श्वेतद्वीपति चराचरे निखिले । रासविलासे माधवमेणदृशो वेणुनादतोऽन्वबुधन् ॥ १८४८ ॥**

अत्र भगवतस्स्वनीलिमपरित्यागपूर्वकचन्द्रज्योत्स्नाविशदिमगुणग्रहणलक्षणतद्गुणालंकारप्रापितभेदानध्यवसायोपनतौ वेणुनादेन निमित्तेन भगवतस्ततो भेदस्फुरणम् । अन्वबुधन्नित्यत्र 'बुधिर् बोधने' इत्यस्माद्भौवादिकाल्लङ् । इदित्त्वात् च्लेरङ् । प्रयोगश्च—'स च काकुत्स्थ नाबुधत्' इति ॥

इत्यलंकारमणिहारे उन्मीलितसरश्चतुरशीतितमः.

---

## अथ विशेषकसरः (८५)

**द्वयोर्वैधर्म्यसंस्फूर्तौ तुल्ययोस्स्याद्विशेषकः ।**

भेदतिरोधानाभावेऽपि सादृश्याद्विशेषास्फुरणे प्राप्ते केनचिन्निमित्तेन विशेषस्फूर्तौ सामान्यप्रतिद्वंद्वी विशेषकः ॥

यथावा—

**त्वत्कृपया मुक्तानां चतुर्भुजत्वादिलक्ष्मणि समाने । वक्षस्स्थितया लक्ष्म्या त्वां किल निश्चिन्वतेऽभिनवमुक्ताः ॥ १८४९ ॥**

अत्र मुक्तानां भगवतश्च भेदातिरोधानाभावेऽपि चतुर्भुजत्वेन सादृश्याद्विशेषास्फुरणे प्राप्ते लक्ष्मीस्फुरदुरस्कत्वेन भगवतो विशेषस्फूर्तेर्विशेषकः ॥

यथावा—

**सममसितासु स्वरुचा कमलादिषु नाथ दिव्य-महिलासु । सरसिजसौरभविभवाभावे पद्मा त्व-याऽपि दुरवगमा ॥ १८५० ॥**

अत्र भगवत्याः पद्मायाः स्वगुणत्यागपूर्वकभगवच्छ्यामलि-मग्रहणरूपतद्गुणालङ्काररीत्या दिव्यमहिलान्तरसाधारणे नीलि-मनि तद्गतकमलसौरभेण विशेषस्फूर्तिरिति पूर्वस्माद्विशेषः । इमौ द्वावप्यलंकारौ दीक्षितोपक्रमे एव ॥

प्राञ्चस्तु—"भेदवैषम्ययोः स्फूर्तौ नालंकारद्वयं कल्प्यं किंतू-क्तालंकाराभावमात्रं, भेदवैजात्यस्फुरणयोः स्वतस्सिद्धतया कवि-प्रतिभागोचरतामूलकवैचिव्यविरहात् । न च मीलितसामान्य-रीतिभ्यां भेदविशेषस्फूर्तौ तदपवादवर्णनकृतवैचित्र्यसद्भावाद-लंकारान्तरकल्पनं युक्तमिति वाच्यं, तावता वैचित्र्याभावता-दवस्थ्यात्" इत्याहुः । पण्डितराजस्तु इमामनुमानेऽन्तर्भा-वयति स्म ॥

इत्यलंकारमणिहारे विशेषकसरः पञ्चाशीततमः

## अथोत्तरालंकारसरः (८६)

उन्नीतप्रश्नमथवा निबद्धप्रश्नमुत्तरम्।
साकूतमुच्यते यत्र तत्रोत्तरमुदीरितम्॥

यत्र उत्तरात्साकूतान्निबध्यमानात्प्रश्न उन्नीयते तत्रेदमुत्तरम्। न चेदमनुमानं, पक्षधर्मत्वादिनिर्देशाविरहात्। असकृत्प्रश्नप्रतिपादनपूर्वकं साकूतमुत्तरं द्वितीयम्। इदमेव गूढोत्तरमिति व्यवह्रियते। यथा लक्षितं कुवलयानन्दे—'किंचिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम्' इति। नेयं परिसंख्या, तद्वदत्र व्यवच्छेद्यव्यवच्छेदकभावस्याविवक्षितत्वात्॥

तत्राद्यं यथा—

तत इत इह संभ्रमतः कुत इव विचिनोषि नन्दसुत गां त्वम्। कालिन्दीतटकुञ्जे कामं दीव्यति हि तव सुलभैषा॥ १८५१ ॥

इदं स्वयूथाच्च्युतां गां विचिन्वन्तं भगवन्तं नन्दनन्दनं प्रति तं कामयमानाया गोपकामिन्या उत्तरं कालिन्दीतीरनिकुञ्जेऽस्तु स्वाच्छन्द्यमावयोरित्याकूतगर्भम्। गोपप्रश्नोऽत्रोन्नीतः। गामपृष्टाया गवावस्थानकथनस्यायोगात्॥

द्वितीयं यथा—

किं चिन्तयसे भद्रे किं त्वयि कथनेन शाम्यति ममैतत्। ब्रूहि तथाऽपि च शृणुयामविदन्निव कृष्ण पृच्छसि विचित्रम्॥ १८५२ ॥

किं चिन्तयसे भद्रे इति कांचिद्गोपललनां प्रति भगवतः कृष्णस्य प्रश्नः। किं त्वयीत्यादि तस्या उत्तरम्। अत्राद्यस्य प्रश्नस्य चिन्ताहेतुं चेद्वदसि तदा प्रतिकरिष्यामीति व्यङ्ग्यम्। उत्तरस्य तु उपभोगेन विना केवलप्रश्नोत्तराभ्यां कः प्रतीकारस्स्यादिति। द्वितीयस्य तु प्रश्नस्य ज्ञात एव त्वदभिप्रायः। अथापि त्वद्वदनात्तं शुश्रूषेयेत्यभिसंध्युद्घाटनम्। उत्तरस्य तु ज्ञात एव त्वया मदाभिप्रायः किं पुनःपुनः प्रश्नकालयापनेनेति। उन्नीतप्रश्ने सकृदुत्तरस्य चारुत्वं, निबद्धप्रश्ने तु प्रश्नोत्तरयोरसकृदुपन्यासे तत्। अयं चोत्तरालंकारो द्विविधोऽपि प्रश्नोत्तरयोरन्यतरस्योभयोरपि साभिप्रायत्वेन निरभिप्रायत्वेन च चतुर्विध इत्यष्टधेति प्राञ्चः। तत्र प्राथमिके 'तत इतः' इति पद्ये उन्नीतः प्रश्नः किं गौस्त्वया मदीया दृष्टेत्याकारकश्चतुरसार्वभौमेण भगवता कृष्णेन वक्त्रा वैशिष्ट्यात्संभोगरूपेणाभिप्रायेण गर्भितः। उत्तरमपि तेनैवाभिप्रायेण गर्भितम्। एवं निबद्धप्रश्ने 'किं चिन्तयसे' इति पद्येऽपि प्रश्नोत्तरयोरुभयोरपि साभिप्रायत्वम्। एवमन्यतरसाभिप्रायप्रभेदा अप्युदाहार्याः॥

प्रश्नोत्तरयोरुभयोरपि निरभिप्रायत्वे उन्नीतप्रश्नमुत्तरं यथा—

**इह वाऽमुष्मिन्वा त्वं बहुसुखमधिगम्य वस्तुमिच्छसिचेत्। वृजिनपथं विजहदिमं भुजगगिरीन्दुं भजस्व निरशङ्कम्॥ १८५३॥**

वृजिनपथं कुटिलमार्गं दुरितसरणिं वा। अत्र कस्यचिद्धितैषिणः पुरुषस्य कंचित्पुमांसं प्रत्युत्तरेण तत्कर्तृकस्वहितानुशासनप्रश्न उन्नीयते। तादृशप्रश्नमन्तरेण हितानुशासनायो-

गात्। अत्र प्रश्नोत्तरयोरुभयोरपि निरभिप्रायता, यथाऽवस्थितार्थज्ञाननिवेदनपरत्वात् ॥

यथावा—

**भगवद्भागवतार्चनहेतोस्तृणमपि न जातु वितरेयम्। इति यदि कृतः परः पण एष हि कृपणः कदर्यपर्यायः ॥ १८५४ ॥**

इति परः अतिशयितः पणः कृतो यदि येनैवं प्रतिज्ञा कृतेत्यर्थः। एष हि अयमेव कृपणः इतोऽप्यन्यः कः कृपण इति भावः। अमुमेव विशिनष्टि—कदर्येति। अर्यो वैश्यः 'अर्यस्स्वामिवैश्ययोः' इति निपातितोऽयम्। कुत्सितश्चासावर्यश्च कदर्यः 'कोः कत्तत्पुरुषेऽचि' इति कोः कदादेशः। तस्य पर्यायः स एवार्थं रूपान्तरमापन्न इति भावः। वैश्य एव निसर्गतः कृपणः तत्रापि कुत्सितत्वे तस्य कार्पण्यं किमु वक्तव्यमिति भावः। पक्षे पणः पणशब्दः कृतः कृवर्णात् आद्यादित्वात्पञ्चम्यास्तसिः। परः अनन्तरभावी यदि एष एव कृपणः कृपणशब्दः कदर्यपर्यायः कदर्यशब्दपर्यायतया पठितः। 'कदर्ये कृपणक्षुद्रकिंपचानामितंपचाः' इति। अत्र कः कृपण इति प्रश्न उन्नेयः। प्रश्नोत्तरयोर्द्वयोरप्यनाकूतत्वं च पूर्ववदेव। उपदर्शितचमत्कारस्तु विशेषः ॥

तत्रैव निबद्धप्रश्नमुत्तरं यथा—

**गन्तव्यः कोऽहिगिरिर्मन्तव्यं किं वृषाद्रिपतिचरितम्। नन्तव्यः कोऽब्जाक्षो रन्तव्यं क्वैतदभिमते देशे ॥ १८५५ ॥**

यथावा—

ध्येयं किं ब्रह्म परं ज्ञेयं किं तत्स्वरूपरूपगुणम्। गेयं किं तस्य यशः पेयं किं तदभिधाननिभममृतम्॥ १८५६ ॥

स्वरूपरूपगुणमिति समाहारद्वंद्वः। अभिधानमिति निभो व्याजो यस्य तत्। अत्र सर्वे प्रश्ना निबद्धाः। प्रश्नोत्तरयोरुभयोरपि पूर्ववन्निरभिप्रायतैव॥

का त्वं का वा किं तव गच्छस्येकाकिनीति पृच्छामि। त्वं किल बहुसाह्यकरः पृच्छसि गोविन्द वेद्मि तव वचनम्॥ १८५७ ॥

अत्र का त्वमिति कृष्णस्य प्रश्नस्स्वोपभोगार्हताभिप्रायगर्भः। का वा किं तवेति गोपकामिन्या उत्तरं किं वृथाप्रश्नमात्रेणेत्यभिप्रायगर्भम्। गच्छस्येकाकिनीति पृच्छामीति पुनः कृष्णस्य प्रश्नस्तु स्वाच्छन्द्यसौकर्याभिप्रायकः। त्वं किलेत्यादिसोपालम्भोत्तरं तु त्वं केवलवाङ्मात्रचपलः न तु स्वैरविहारसाहसिक इत्यभिप्रायगर्भम्। इदं च पद्यं चतुर्णामपि निबद्धप्रश्नभेदानामुदाहरणतामर्हति वक्तृवैदग्ध्यावैदग्ध्यव्यवस्थयेति॥

अत्र जगन्नाथः—अलंकारे ह्यस्मिन् प्रश्नोत्तरगतमसकृदुपनिबद्धत्वं जीवातुः, तथैव चमत्कारोदयात्। तेन सकृत्प्रश्नस्य सकृदुत्तरं नालङ्कारभूमिः। न चोन्नीतप्रश्नोत्तरे अव्याप्तिः। उन्नीतस्य प्रश्नस्यैकत्वादनुपनिबन्धाच्चोत्तरस्याप्येकत्वादिति वाच्यम्। प्रश्नगतमुन्नीतत्वमत्रोत्तरेणाक्षिप्तत्वं न विवक्षितम्। किंतु प्रश्नोत्तरपरंपरायां प्राचीनोत्तरश्रवणजन्यत्वमात्रमित्यभाणीत्॥

यथा—

क्व गमिष्यस्यहिशैलं किं तत्रास्त्यद्भुतं परं तत्त्वम् । तत्कीदृक् सश्रीकं का श्रीर्यस्या विभूतिरखिलमिदम् ॥ १८५८ ॥

अत्र: किं तत्रास्तीति प्रश्नः अहिशैलमित्युत्तरश्रवणादुन्नत इत्युन्नीत उच्यते । आद्यः प्रश्नस्त्वनुन्नीतोऽपि उत्तरोत्थापनार्थं निबद्ध इति । एवंचास्मिन्मते प्राग्दर्शितान्युन्नीतप्रश्नोदाहरणान्यनुदाहरणान्येव । अलंकारस्यास्य द्वैविध्यमपि न प्रश्नस्योन्नीतत्वानिबद्धत्वाभ्यां, किंतून्नीतत्वानुन्नीतत्वाभ्यां ज्ञेयम् । वस्तुतस्तु प्रश्नोत्तरयोराकूतगर्भत्वे तावतैव चमत्कारान्नासकृदुपादानापेक्षा । आकूतविरहे तु असकृदुपादानकृतश्चमत्कारोऽपेक्ष्यते निबद्धप्रश्ने । आक्षिप्तप्रश्ने तु प्रश्नाक्षेपकृतं चमत्कारं यदि मन्यन्ते सहृदयाः तदा सकृदुपादानेऽप्यलंकारत्वमस्तु ॥

तत्र निबद्धप्रश्ने प्रश्नस्य साकूतत्वे सकृदुपादानेऽपि चमत्कारो यथा—

सल्लपसि चेत्सुमुखि ते वदनात्किं मौक्तिकानि विगळन्ति । सल्लापं नागरकं वल्लव्यो वयमिमाः क्व विद्मोऽङ्ग ॥ १८५९ ॥

अत्र सल्लपसि चेदित्यादिप्रश्नः भगवता नन्दनन्दनेन कृतस्संभोगाभिमुख्यसंपादनाकूतगर्भः । सल्लापं नागरकमित्यादिकमुत्तरं तु ऋजुबुद्ध्या वल्लव्या दत्ततया निराकूतमेव । वदनात्किं मौक्तिकानि विगळन्तीति लोकोक्तिः ॥

तत्रैवोत्तरस्य साकूतत्वे सकृदुपादाने चमत्कृतिर्यथा—

**लभ्येत किमङ्ग सुमं द्युमणितनूजातटद्रुकुञ्जेषु।
सुलभतमं तत्र सुमं भवादृशां मृगदृशामपि नताङ्गि ॥ १८६० ॥**

अत्र लभ्येत किमङ्गेत्यादिप्रश्नः कयाचिद्व्रजललनया ऋजुबुद्ध्या भगवन्तं यशोदानन्दनं प्रति कृतो निराकृतः। सुलभतममित्यादि भगवत उत्तरं तु तत्र संभोगस्वाच्छन्द्याकूतगर्भम्। आकूतविरहे असकृदुपादानकृतश्चमत्कारः क गमिष्यसीत्यत्र गदित एव। प्रकारान्तरेणाप्यस्य भेदास्संभवन्ति। पद्यान्तर्वर्तित्वेन पद्यबहिर्वर्तित्वेन तावद्द्वैविध्यम्। तत्राद्यस्याभिन्नवाक्योद्गीर्णत्वभिन्नवाक्योद्गीर्णत्वाभ्यां पुनर्द्वैविध्यम्। पद्यान्तर्वर्तिपद्यबहिर्वर्तिनोर्द्वयोरप्युत्तरयोस्सकृच्छब्दश्रुतिपर्यायत्वेन शङ्कावृत्तिपर्यायत्वेनानेकेषां प्रश्नानामेकपदनिवेदितोत्तरत्वेन प्रकारान्तरैश्च बहुप्रभेदत्वमित्यालंकारिकशेखरो रसगङ्गाधरकारः। अयमेव प्रभेदश्चित्रोत्तरमिति दीक्षितैः पृथगुक्तः॥

**चित्रोत्तरमलंकारः प्रश्नाभिन्नोत्तरं भवेत्।
यच्चोत्तरान्तराभिन्नमुत्तरं तदपीष्यते ॥**

प्रश्नाभिन्नमुत्तरं उत्तरान्तराभिन्नमुत्तरं च चित्रोत्तरमित्युच्यते॥

यथा—

**कङ्कमनैषीद्भगवान् संकल्पेनैव शाश्वतैश्वर्यम्।
इति पृच्छते तदेवोत्तरमिति कस्मैचिदाह कविरकः ॥ १८६१ ॥**

भगवान् संकल्पमात्रेणैव कङ्कं चेतनं, विस्मये वीप्सा। तथाचोक्तं—

प्रतिज्ञायां प्रशंसायां प्रलापे तर्जनेऽपि च।
भये च विस्मये चैव पौनःपुन्यमलंकृतिः॥

इति। शाश्वतैश्वर्यमनैषीदिति प्रश्नः कङ्कं गृध्रविशेषं जटायुषमनैषीदित्युत्तरं प्रश्नाभिन्नं निबद्धम्। कङ्कमित्यत्र 'वा पदान्तस्य' इति वैकल्पिकः परसवर्णः॥

यथावा—

**मृद्वी का परिभूता मृद्व्या स्वाद्व्या मुकुन्दवाचेति। पृच्छामेवोत्तरतामनयत कस्यापि कोऽपि कविराजः॥ १८६२॥**

अत्र मृद्वी मृदुः का परिभूतेति प्रश्नस्य मृद्वीका द्राक्षा परिभूतेति तदभिन्नमुत्तरम्॥

यथावा—

**कमलं करोति हस्ते कमला कमलालया परिष्कारम्। इत्यनुयुक्ता काचन सख्या चित्रोत्तरं तदेवाह॥ १८६३॥**

कमलालया पद्मगेहा कमला श्रीः हस्ते अलं कं परिष्कारं अलंकारं करोतीति प्रश्नः। कमलं पद्मं करोतीति तदभिन्नमुत्तरं पद्मं परिष्कारं करोतीत्यर्थः। चित्रोत्तरमित्यलंकारस्य सूच्यस्य सूचनान्मुद्रालंकारस्त्वत्र विशेषः॥

यथावा—

पुरुषः फणधरशिखरिणि कस्तूरीकृतललाम-
को भाति । ब्रूहि सखे किं ब्रूयामुत्तरमत्रानुयोग
एव स्यात् ॥ १८६४ ॥

कः तु ऊरीकृतललामकः इति प्रश्नपक्षे छेदः । तुशब्दः प्रशंसायां भेदे वा । 'तु पादपूरणे भेदे समुच्चयेऽवधारणे । पक्षान्तरे वियोगे च प्रशंसायां विनिग्रहे' इति मेदिनी । फणधरशिखरिणि एतेषु पुरुषेषु कः पुरुषः पुनः ऊरीकृतललामकः प्रशस्ततया भातीति प्रश्नः । कस्तूर्या कृतललामकः विरचितविशेषकः पुरुषो भगवान् श्रीनिवास एव भातीत्युत्तरं तदभिन्नं निबद्धम् । 'ललामं पुच्छपुण्ड्राश्वभूषाः प्राधान्यकेतुषु' इत्यमरः ॥

यथावा—

हरिणा द्विरसनकुलपतिगिरिधाम्नाऽनायि का
निजं वक्षः । इति यः प्रश्नस्तस्य स्वयमुत्तरतां स
एव बत धत्ते ॥ १८६५ ॥

द्विरसनकुलपतिगिरिधाम्ना हरिणा निजं वक्षः का अनायीति प्रश्नः । नायिकाऽनायीत्युत्तरमभिन्नवाक्योद्गीर्णम् । नायिका दायिता श्रीः वक्षः अनायि प्राप्यतेत्यर्थः ॥

यथावा—

सत्यं ब्रूयात्पुरुषस्त्रिभुवनजननाय कः प्रगल्भे-
त । किंनु ब्रूयां पुरुषस्त्रिभुवनजननायकः प्रग-
ल्भेत ॥ १८६६ ॥

त्रिभुवनजननाय त्रिलोकीसर्जनाय कः पुरुषः पुमान् प्रगल्भेतेति प्रश्नः। किं नु ब्रूयामिति अजानत इवोत्तरम्। त्रिभुवनजनानां नायकः अधीशः पुरुषः 'अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयेय' इति श्रुतः भगवान्नारायणः प्रगल्भेतेत्युत्तरान्तरं च॥

यथावा—

**कान्ते प्रीतिं विदधात्वात्मन्ययमिति कृतां स्वदयितेन। पृच्छामेवोत्तरयद्विडम्बयन्तीव सस्मितं लक्ष्मीः॥१८६७॥**

अयं त्वद्वशवर्तीति साभिनयं स्वस्य निर्देशः। ते आत्मनि मनसि कां प्रीतिं विदधात्विति प्रश्नार्थः। कान्ते वल्लभे आत्मनि त्वयि विषये अयं त्वामिति भावः। प्रीतिं मम विदधातु इत्युत्तरार्थः। त्वद्विषयकप्रीत्या विना नान्या मम मनसि प्रीतिरपेक्षणीयेति भावः। अत्रापि प्रश्नोत्तरयोरभिन्नवाक्यनिबद्धत्वम्॥

यथावा ममैव रङ्गराजविलासे—

**मोदं वह सखि मे वद को दण्डधरो दशाननकुलस्य। इति काचिच्चतुरा निजपतिना पृष्टोत्तरं तदेवाह॥१८६८॥**

दशाननकुलस्य दण्डधरः क इति प्रश्नः कोदण्डधर इत्युत्तरं चाभिन्नवाक्यगतम्॥

यथावा—

**सौमित्रिणा दशास्यस्वसुर्मुखे ब्रूहि काऽसिना**

लूना । जानासि पठ विलोमं पृच्छायां कासिनेति वर्णास्त्वम् ॥ १८६९ ॥

अत्र कासिनेति प्रश्नो विलोमपठित उत्तरतां प्रपद्यत इति वैचित्र्यं विशेषः । ईदशान्युदाहरणानि ममैव श्रीनिवासविलासनृसिंहविलासादिषु प्रबन्धेषु भूयांसि द्रष्टव्यानि ॥

एवं प्रश्नाभिन्नोत्तररूपश्चित्रोत्तरालंकारो निरूपितः । उत्तरान्तराभिन्नमुत्तरं यथा—

स्वाराज्ये कीदृक्षः पुनरस्थापि श्रिया सहस्राक्षः । अथ पर्यभवन्दैत्यांस्तद्विमुखान्का निगद्यतां विपदः ॥ १८७० ॥

अत्र प्रश्नद्वयस्यापि विपद इत्येकमेवोत्तरम् । विगतं पदं स्वाराज्यस्थानं यस्येत्येकवचनान्तविपदशब्देन प्रथमप्रश्ने इन्द्रविशेषणतया योजितेनोत्तरम् । द्वितीये तु विपदः आपदः इति बहुवचनान्तेन विपच्छब्देनोत्तरमिति ध्येयम् ॥

अनिलात्मंभरिवरगिरिनिलयस्य चकास्ति कीदृशो विभवः । तत्तनुरुचिकालिम्ना नुत्तमदाः के निगद्यतामलयः ॥ १८७१ ॥

अत्र श्रीनिवासस्य विभवः कीदृश इति तद्विग्रहश्यामलिम्ना निरस्तमदाः के इति च प्रश्नद्वयस्यापि अलय इति उत्तराभिन्नमुत्तरम् । आद्ये अलयः लयरहितः नित्य इत्यर्थः । द्वितीये अलयः भ्रमरा इत्यर्थः ॥

यथावा—

सिंहगिरिनाथवाहनरंहसि कीदृग्विभाति पवमानः। तद्दोर्दण्डविधूता वेपन्ते केऽभ्युदीर्यतामरयः॥ १८७२ ॥

अत्रापि प्रश्नद्वयस्योत्तरं अरय इत्यभिन्नमेव। अरयः वेगहीन इति प्रथमस्योत्तरेऽर्थः। अरयः शत्रव इति द्वितीयस्येति ध्येयम्॥

यथावा—

श्रीवासस्याश्रयणाद्भवेयुरर्थार्थिनोऽत्र कीदृक्षाः। आर्तानां किं भविता ज्ञानी कीदृक्ततो भवेद्विभवः॥ १८७३ ॥

अत्र प्रश्नत्रयस्यापि विभव इत्येकमेवोत्तरमिति पूर्वेभ्यो विशेषः। अर्थार्थिनः अपूर्वैश्वर्यकामाः विभवः प्रभवः भवेयुरिति प्रथमस्य प्रश्नस्योत्तरम्। आर्तानां भ्रष्टैश्वर्यकामानां विभवः ऐश्वर्यं भवितेति द्वितीयस्य। ज्ञानी भगवन्तमेव परमप्राप्यं प्रापकं च मत्वा उपासीनः विभवः विगतसंसृतिर्भवतीति तृतीयस्येति बोध्यम्॥

यथावा—

हरियशसा का विशदाः कीदृश्यस्तत्तनुत्विषस्ताभिः। वृषशैलः कीदृक्स्यात्कुतश्च निश्श्रेयसं भवेद्धरितः॥ १८७४ ॥

अत्र प्रश्नचतुष्टयस्यापि हरित इत्येकमेवोत्तरमिति पूर्वस्माद्वैलक्षण्यम्। हरियशसा का विशदा इति प्रथमस्य प्रश्नस्य

हरितः दिश इत्युत्तरम् । कीदृश्यः तत्तनुत्विषः हरिविग्रहरुच इति द्वितीयस्य हरितः हरिद्वर्णा इत्युत्तरम् । नीलहरिद्वर्णयोरभेदः कविसमयसिद्ध इत्यवोचाम वक्ष्यामश्च । ताभिः हरितनुरुचिभिः वृषशैलः कीदृक् स्यादिति तृतीयस्य हरितः हरितवर्ण इत्युत्तरम् । 'पालाशो हरितो हरित्' इत्यमरः । कुतः कस्माच्च निश्श्रेयसं भवेदिति तुरीयस्य हरितः हरेः इति सार्वविभक्तिकतस्यन्तपदेनोत्तरम् ॥

यथावा—

किं वितरति फणिगिरिपतिरङ्गद्युतिवैभवेन किं जयति । कं ध्वनयति रिपुविजये कंधरया कं धुनोति वद शंखम् ॥ १८७५ ॥

किं वितरति फणिगिरिपतिरिति प्रश्नस्य शं सुखं इत्युत्तरम् । अङ्गद्युतिवैभवेन किं जयतीत्यस्य खं गगनं इति, कं ध्वनयति रिपुविजये इत्यस्य कंधरया कं धुनोतीत्यस्य च शङ्खमिति चोत्तरचतुष्टयं प्रश्नचतुष्टयादभिन्नम् । अत्राद्ययोः पदभेदेन अन्त्ययोस्तु तदभेदेनेति पूर्वतो भेदः ॥

पद्यबहिर्वर्तिनो यथा—

फणिशिखरिणि को निवसति को धूपो घ्राणतर्पणस्तस्य । किमहारि रहसि हरिणा विद्वन्नुत्तरमिहैकमेव वद ॥ १८७६ ॥

अत्र प्रश्नत्रयस्याप्येकमेवोत्तरं श्रीवास इति पद्यबहिर्भूतम् । आद्ये प्रश्ने श्रीवासः श्रीनिवासो भगवानित्यर्थः । द्वितीये श्रीवासः देवदार्वादिनिर्यासविनिष्पादितो धूपविशेष इत्यर्थः । 'श्रीवासो

द्दक्षधूपोऽपि श्रीवेष्टसरळद्रवौ' इत्यमरः। तृतीये श्रीवासः लक्ष्म्या अंशुकमित्यर्थः। एवंजातीयका अन्ये बहवः प्रभेदा बुद्धिमद्भिरूहनीयाः। अयं पद्यबहिर्वर्त्युत्तररूपप्रथमप्रभेद उत्तराभिन्नोत्तररूपप्रभेद एव संभवति। न तु प्रश्नाभिन्नोत्तररूपप्रथमप्रभेदे, प्रश्नेनैवोत्तरस्यापि निबद्धतया पद्याद्बहिष्ठताया असंभवात् ॥

इत्यलंकारमणिहारे उत्तरसरष्षडशीतितमः.

---

## अथ चित्रप्रश्नालंकारसरः (८७)

---

प्रश्नः प्रश्नान्तराभिन्नो यदिवाऽन्यार्थगर्भितः।
निबध्यते तं कतिचिच्चित्रप्रश्नाख्यमूचिरे ॥

प्रश्नस्य प्रश्नान्तराभिन्नत्वे वा अर्थान्तरगर्भत्वे वा चित्रप्रश्नाख्यमलंकारं कतिचिदाहुः। अयं कौस्तुभकृदुपक्रमम् ॥

यथावा—

का कारुण्यनिधिर्ननु काकोदरशैलपतिहृदयवृत्तिः। शारदरविकरविकसितनीरजरुचिरा पदोर्युगी चास्य ॥ १८७७ ॥

अत्र काकोदरशैलपतेः हृदयवृत्तिः चित्तवृत्तिरित्युत्तरस्य शारदेत्याद्युत्तरस्य च काकारुण्यनिधिरिति प्रश्नान्तराभिन्न एक एव प्रश्नः। का कारुण्यनिधिः दयानिधिरिति प्राथमिकप्रश्नस्यार्थः। का का आरुण्यनिधिः शोणिमाश्रय इति द्वितीयस्य। काकेति प्रशंसायां वीप्सेत्यवोचाम कङ्कमिति पद्ये ॥

यथावा—

तापत्रयातुराणां भवेन्नराणां भुवीह काराका ।
असतां संगतिरेका सारविदां संगतिस्सताम-
न्या ॥ १८७८ ॥

अत्र उत्तरार्धप्रतिपादितयोरुत्तरयोः काराकेति प्रश्नान्तराभिन्न एक एव प्रश्नः। कारा बन्धनालयः तद्वदतिशयितदुःखहेतुः केति प्रथमप्रश्नस्यार्थः। का राका पूर्णनिशाकरा पूर्णिमा तद्वत्तापहर्त्री केति द्वितीयप्रश्नस्यार्थः॥

यथावा --

काळीका वृषगिरिपतितनुरथ तद्विमुखवदनवी-
क्षा च । काशङ्का न्यक्चक्रे तत्कीर्तिस्तत्परत्ववि-
षया च ॥ १८७९ ॥

अत्र पूर्वार्धे वृषगिरिपतितनुः तद्विमुखवदनवीक्षा चेत्युत्तरद्वयस्य काळीकेत्येक एव प्रश्नः। काळी श्यामला का इत्येकस्य प्रश्नस्यार्थः। का अलीका अप्रियेत्यन्यस्य । उत्तरार्धे तु तत्कीर्तिः तत्परत्वविषया चेत्युत्तरद्वयस्य काशङ्का न्यक्चक्रे इत्येक एव प्रश्नः। काशं काशकुसुमं का न्यक्चक्रे इति प्रथमप्रश्नस्य। द्वितीयस्य का शङ्का संशयः न्यक्चक्रे तिरस्कृता इत्यर्थः। भगवत्कीर्तिः काशं न्यक्करोति स्म । भगवत्परत्वविषया शङ्का अवधीरिताऽस्माभिरित्युत्तरयोरभिप्रायः। चक्रे इति प्रथमे प्रश्ने कर्तरि लिट्। द्वितीये तु कर्मणि इति ध्येयम्। पूर्वत्र प्रश्नान्तराभिन्नः प्रश्न एकः। अत्र तु द्वौ प्रश्नाविति विशेषः॥

अन्यार्थगर्भितप्रश्नरूपो द्वितीयश्चित्रप्रश्नो यथा—

**भामामणि व्यपनयन् कामाकुलतां मुदं तव विदध्याम्। काभपि गोपीमेवं पृच्छन् साकूतमवतु नन्दसुतः ॥ १८८० ॥**

अत्र आकुलतां व्यपनयन् तव कां मुदं विदध्यामिति प्रश्नः तव कामाकुलतां कन्दर्पव्याकुलत्वं व्यपनयन् मुदं विदध्यामित्यर्थान्तरगर्भः ॥

यथावा—

**सुतराङ्गविभोऽगं त्वं स्वामिन् कमितः परं व्रजस्युच्चैः। मामेहीति सभावं माधवमब्रूत काऽपि गोपवधूः ॥ १८८१ ॥**

अत्र प्राथमिकार्थे—सुतराङ्ग सुतर अङ्ग इति वा विभो अगं त्वं स्वामिन् कं इतः परं व्रजसि उच्चैः मा मा इहि इति छेदः। सुतराङ्ग हे शोभनगात्र सुन्दरेत्यर्थः। अथवा सुतर कल्याणतर। अङ्गेत्यव्ययं संबोधने। विभो व्यापनशील स्वामिन्! इतःपरं अस्मात् शैलात् सुगमादिति भावः। अन्यं उच्चैः उन्नतं दुरारोहमिति भावः। कं अगं शैलं व्रजसि गच्छसि। मा मा इहीति योजना। मा मा स्म गमः मा मेतिवीप्सा सर्वात्मना निषेधार्था। अर्थान्तरे तु सुतरां गवि भोगं त्वं स्वामिन् कमितः परं व्रजसि उच्चैः मां पाहि इति छेदः। हे गवि स्वामिन् गवामधीश! गोपालेत्यर्थः। 'स्वामीश्वराधिपति' इत्यादिना स्वामिशब्दयोगात् गोशब्दस्य सप्तमी। हे कमितः हे कमन! कमेस्तृचि संबुद्धिः। आर्धधातुकत्वेन आयादेशस्य वैकल्पिकत्वादिह तदभावः। सुतरां अत्यन्तं परं श्रेष्ठं उच्चैः

निरवधिकं सुखं त्वं व्रजासि । तत्र हेतुमाह— मां एवमभिलषमाणां मां एहि ग्राम्नुहि । अत्राप्युपपादितरीत्या प्रश्नस्यार्थान्तरगर्भता द्रष्टव्या । क्वचित्प्रश्नोत्तरयोरुभयोरप्यर्थान्तरगर्भत्वे चारुतातिशय इति तैरेव कौस्तुभकारैः प्रत्यपादि । तस्येदमुदाहरणम्—

**कान्तारमयेत्का मां तत्सरणिं वद यया सुखं यायाम् । इति पृच्छति नन्दसुते सुगमेयमिहेति काऽपि गोप्याह ॥ १८८२ ॥**

कान्तारं महावनं प्रति का सरणिः अयेत् गच्छेत् मां तत्सरणिं तां पदवीं वद 'चिञ्ब्रूञ्शासुजि' इति द्विकर्मकता । यया सरण्या सुखं निर्बाधं यथा स्यात्तथा यायां गच्छेयं इति मार्गविषयकः प्रश्नः । का कान्ता मां रमयेत् तत्सरणिं तस्याः प्राप्त्युपायं वद । यया कान्तया उपायेन वा सुखं रतिसुखं यायामित्यर्थान्तरगर्भः । इयं सरणिः सुगमा सुखेन गम्येति मार्गप्रश्नस्योत्तरम् । अर्थान्तरस्य तु इयं यां त्वं मार्गं पृच्छासि सेयं अहमित्यर्थः । इह अत्रैव सुगमा सुखेन गम्या सती रमयति निश्शलाकत्वादस्य प्रदेशस्येति ॥

यथावा—

**कान्तेऽनवरतसंपदमभीप्सितां कोमलङ्गि तनवानि । घनभाविरतं भाग्यं वितरसि मेऽभीप्सितं यदि कृतार्था ॥ १८८३ ॥**

अयं श्रीकृष्णगोपिकयोः प्रश्नोत्तररूपः श्लोकः । अत्र हे कोमलाङ्गि! अभीप्सितां कां अनवरतसंपदं अविच्छिन्नां संप-

त्ति ते तव तनवानोति प्रश्नः, हे कान्ते! अभीप्सितां नवरत-संपदं ते तनवानीत्यर्थान्तरगर्भितः। हे घनभ! मेघाभ अविरतं सततं मे अभीप्सितं भाग्यं यदि वितरसि तर्हि कृतार्थैत्युत्तरम्। हे घन! मे अभीप्सितं चिरकालप्रार्थितं भावि भविष्यत् रतं सुरतरूपं भाग्यं यदि वितरसि तर्हि कृतार्था निर्वृत्ताभीप्सितप्रयोजनेत्यभिप्रायगर्भम्॥

अत्रेदमवधेयम्—प्राक्तनमतानुरोधेनास्मदुपदर्शितोत्तरालंकारप्रकारभेदेषु सत्स्वपि बहुषु चित्रोत्तरगूढोत्तररूपौ तदलंकारप्रकारप्रभेदौ द्वावेव कुवलयानन्दकारैरुपात्तौ। तन्मतानुरोधेनालंकाराश्रिवन्नाद्भिः कौस्तुभकारैर्वेङ्कटार्यैस्तत्प्रतिद्वन्द्वितया चित्रप्रश्नप्रकारद्वयमभिनवं परिकल्पितम्। तदिदमस्माभिरपि प्रदर्शितम्। यदित्वत्र अन्यार्थगर्भप्रश्नरूपो द्वितीयः प्रकारो निबद्धसाभिप्रायनिराभिप्रायान्यतरोत्तरस्स्यात् तर्हि तत् प्रागुपदर्शिते प्राचां मते उत्तरालंकारोदाहरणमेव भवेत्। एवंच 'भामामणिव्यपनयन, सुतराङ्गविभोऽगं त्वम्' इत्युपदर्शितयोः पद्ययोरुत्तरानुपनिबन्धात्प्रश्नमात्रस्य साभिप्रायत्वाच्च चित्रप्रश्नोदाहरणत्वमेव। अस्य प्राथमिकप्रभेदे प्रदर्शितेषु 'का कारुण्यनिधिः' इत्यादिपद्येषूत्तरोपनिबन्धमन्तरेण एकस्य प्रश्नस्य प्रश्नान्तराभिन्नप्रश्नतया दुर्विज्ञानतया तदुपनिबन्धावश्यंभावेऽपि प्रश्नमात्रस्यैव निराकृतत्वेऽपि श्लेषवशेन वैचित्र्यप्रकाशनात्प्राचीनोपदर्शितोत्तरालंकारव्यावृत्तश्चित्रप्रश्नालंकार एव। 'कान्तारमयेत्कामाम्' इत्यादिपद्यद्वये तु साभिप्राययोः प्रश्नोत्तरयोरुभयोरपि निबद्धत्वादुत्तरालंकारप्रभेद एव। प्रथमतरं प्राचीनरीत्या प्रदर्शितेषूदाहरणेषु साभिप्रायत्वं व्यङ्ग्यमर्यादया, अनयोस्तु श्लेषमहिम्नेति वैलक्षण्यम्। अथ मतं—उत्तरालंकारे प्रश्नोत्तरयोरा-

कूतं व्यञ्जनामूलमेवेति, तर्हि तयोः श्लेषमूलकार्थान्तरगर्भत्वे चित्रप्रश्नविशेष एव नोत्तरालंकार इत्येष्टव्यं, विच्छित्तिविशेषसद्भावात्। इहाप्युत्तरनिबन्धस्तु उत्तरालंकारे प्रश्ननिबन्धवच्चारुतातिशयहेतुरिति दिक्॥

इत्यलंकारमणिहारे चित्रप्रश्नसरस्सप्ताशीतितमः.

---

# अथ सूक्ष्मालङ्कारसरः (८८)

---

**अन्याशयज्ञसाकूतचेष्टितं सूक्ष्ममीर्यते ॥**

अन्याभिप्रायमिङ्गितादिना ज्ञातवतोऽन्यस्य साकूतस्तद्विषयको व्यापारस्सूक्ष्मं नामालंकारः॥

यथा—

**पुरतो नन्दकिशोरे करकलितमनोज्ञकन्दुके मिषति। सुन्दरमौक्तिकरदना मन्दं हसति स्म गोपशशिवदना ॥ १८८४ ॥**

अत्र गृहीतकन्दुकनन्दनन्दनसन्दर्शनलक्षणेनेङ्गितेन तदीयपयोधरग्रहाभिसंकेतसमयानुयोगाभिप्रायं विदितवत्या गोपसुदत्या तदानुकूल्येन प्रसरन्त्यां चन्द्रिकायां सङ्केतसमय इति तदुत्तर स्वहृदयगतं व्यञ्जयितुं मन्दहासव्यापारो व्यरचीति लक्षणानुगतिः॥

यथावा—

स्वकरधृतं लिखिति नखैर्लिकुचफलं नन्दनन्दने पुरतः । वल्लवललना मौक्तिकवल्लीमामल्लते स्म धम्मिल्ले ॥ १८८५ ॥

इदमपि भगवतश्श्रीकृष्णस्य स्वैरविहारसङ्केतसमयानुयोगभावं जानानायाः व्रजललनायाश्चेष्टितं तमालि तारकोल्लासे सङ्केतसमय इत्याकूतगर्भम् ॥

यथावा—

व्यालाचलशैलेन्दौ नीलाकुचकलशयुगळलोलदृशि । सा रमणी स्मेरमुखी श्रीरमणोरःप्रसारिनयनाऽऽसीत् ॥ १८८६ ॥

अत्र स्वकुचयुगलनिरीक्षणभगवच्चेष्टितेन स्वोपभोगौत्सुक्यरूपं तदाकूतं जानानाया नीलायाः श्रीनिवासवक्षस्स्थलवीक्षणरूपं चेष्टितं तत्र श्रीसांनिध्यरूपप्रतिबन्धकसद्भावप्रदर्शनाकूतगर्भम् ॥

इत्यलङ्कारमणिहारे सूक्ष्मसरोऽष्टाशीतितमः.

---

## अथ पिहितालंकारसरः (८९)

---

परवृत्तज्ञसाकूतचेष्टितं पिहितं मतम् ॥

परकीयव्यापारवेत्तुस्साकूतचेष्टितं पिहितं नामालंकारः ॥

यथा—

स्विन्नाननमायातं प्रातर्निजसद्म वीक्ष्य नन्द-
सुतम्। लघुलयललितं व्यजनं करकिसलयतोऽ-
ग्रहीद्दुतं राधा ॥ १८८७ ॥

लघुलयं लामज्जकम्। सर्वरात्रं नायिकान्तरसंभोगेन श्रा-न्तोऽसीति वीजयामीति लामज्जकतालवृन्तग्रहणाकूतम् ॥

यथावा—

परतरुणीहारिद्रच्छुरितकपोलं निरीक्ष्य यदु-
बालम्। पिहिताकारा भैष्मी पाणौ मणिदर्पणं
ददौ तस्य ॥ १८८८ ॥

अत्र हरिकपोले हरिद्राचूर्णलेपनेनानुमितं रजन्यां तव सपत्नीसदने स्वैरविहारं जानाम्यहमित्याकूतगर्भं तत्करकमले रुक्मिण्या दर्पणदानरूपं चेष्टितं निबद्धम्। पिहिताकारेत्यनेन सूचनीयालंकारनामसुचनरूपमुद्रालंकारोपस्कृतत्वं पूर्वस्माद्विशेषः ॥

इदं कुवलयानन्दानुरोधेन। सर्वस्वकारादयस्तु—'संलक्षितसूक्ष्मार्थप्रकाशनं सूक्ष्मम्' इति स्थूलमतिभिरसंलक्षणीयः कुशाग्रमतिभिस्संलक्ष्यते यस्सूक्ष्मार्थः तस्य विदग्धं प्रकाशनमिति सूक्ष्मार्थत्वेन पराशयवृत्तान्तयोः क्रोडीकारेण लक्षयित्वा—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
आसीन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥
वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं काऽपि कण्ठे।
पुंस्त्वं तन्व्या व्यञ्जयन्तीव तस्यास्स्मित्वा पाणौ खड्गले-
खां लिलेख ॥

इत्युदाहरणयोर्लक्षणसत्तामुपपादयन्तः पिहितनामानमलंकारान्तरं नानुमेनिरे। युक्तं चैतत्—अलंकारान्तरकल्पनावैचित्र्यहेतोस्साकूतचेष्टिताविन्यसनस्य भेदाभावे आशयवृत्तान्तरूपप्रकाश्यभेदमात्रेण भेदानुपपत्तेरिति वदन्ति। अत्र 'यत्सूक्ष्मस्यार्थस्य संलक्षणमात्रं प्रकाशनमात्रं वाऽप्ययमेवालंकारः' इत्यलंकारभाष्यकाराशयं व्यवृणुत विमर्शिनीकारः। तदेदमुदाहरणम्—

लीलासदनकवाटे लोलेऽपाङ्गे पयोधिबालायाः। वल्लभमात्रसहाया यथा रमा स्यात्तथाऽभवन् सख्यः॥ १८८९॥

अत्र सखीभिः श्रियो वल्लभोपभोगौत्सुक्यं संलक्षितं केळीगृहकवाटे कटाक्षविसारणेन प्रकाशितं चेत्युभयार्थसहितत्वम्। तदेवमादौ सूक्ष्मालंकार एव वाच्यः, सूक्ष्मस्यैवार्थस्य संलक्ष्यमाणत्वादिनाऽवस्थानात्। यद्यपि संलक्षितमात्रमपि लक्ष्म्या औत्सुक्यं सखीभिर्विविक्ततया बहिर्निर्गमनेन चेष्टितेन प्रकाशितम्। तथाऽपि सखीनां तदौत्सुक्यसंलक्षणमात्रमेवात्र चमत्कारि। न तु सखीबहिर्निर्गमनचेष्टितमित्यस्यालंकारतोल्लासः॥

इत्यलंकारमणिहारे पिहितसर एकोननवतितमः.

---

## अथ व्याजोक्त्यलङ्कारसरः (९०)

---

### हेत्वन्तरोक्त्या व्याजोक्तिर्यदाकारस्य गूहनम्॥

निगूढस्य वस्तुनः केनचित्प्रकटतां गतस्य हेत्वन्तरोक्त्या यद्गोपनं तत् व्याजोक्तिर्नामालंकारः॥

यथा—

**प्रतिवातविलुलितं मम धम्मिल्लमिमं समीकुरुष्व सखि। इति यमुनातटकुञ्जादेत्य सखीं काऽपि गोपिकाऽलापीत् ॥ १८९० ॥**

अत्र नन्दनन्दनकृतस्वैरोपभोगविलुलितस्य धम्मिल्लस्य प्रतिवातविलुलितत्वव्याजोक्त्या गोपनम्। "छेकापह्नुतेरस्याश्चायं विशेषः—तस्यां वचनस्यान्यथानयनेनापह्नवः, अस्यामाकारस्य हेत्वन्तरवर्णनेन गोपनमिति। लक्षणे लक्ष्यनाम्नि चोक्तिग्रहणमाकारस्य गोपनार्थं हेत्वन्तरप्रत्यायकव्यापारमात्रोपलक्षणम्। ततश्च—

आयान्तमालोक्य हरिं प्रतोल्यामाल्याः पुरस्तादनुरागमेका।
रोमाञ्चकम्पादिभिरुच्यमानं भामा जुगूहे प्रणमन्त्यथैनम् ॥

इत्यत्रापि व्याजोक्तिरेव। अत्र ह्यनुरागकृतस्य रोमाञ्चाद्याकारस्य भक्तिरूपहेत्वन्तरप्रत्यायकेन प्रणामेन गोपनं कृतम्" इति कुवलयानन्दे दीक्षिताः। ततश्च—

**यमुनातटकुञ्जाद्व्रजमुपयान्ती केतकीस्तबकहस्ता। न्यवपुषि शौरिनखक्षतमगूहत स्वैरकेळिजं गोपी ॥ १८९१ ॥**

इत्यत्रापि तन्मते व्याजोक्तिरेव। अत्र हि स्वैरकेळिप्राप्तस्य भगवन्नखविलेखनरूपाकारस्य कण्टकप्रचुरकेतकीनिकुञ्जप्रवेशरूपहेत्वन्तरप्रत्यायकेन तत्कुसुमस्तबकग्रहणेन गूहनं कृतम्। वस्तुतस्तु अत्र युक्त्यलंकार एवेति युक्त्यलंकारनिरूपणावसरे वक्ष्यते। सूक्ष्मपिहितालंकरयोरपि चेष्टितग्रहणमुक्तसाधारणव्यापारमात्रोपलक्षणम्। ततश्च—

"नलिनीदले बलाका मरकतपात्र इव दृश्यते शुक्तिः। इति मम संकेतभुवि ज्ञात्वा भावं तदाऽब्रवीदाळीम्" ॥

इति प्राचीनपद्य इव—

**पश्यात्र निश्चलतमा मराळमालाऽमलाब्जमालेव । इत्याळीं काऽप्यवदच्छौरेस्संकेतभावमधिगम्य ॥ १८९२ ॥**

इत्यादिष्वस्मदीयपद्येष्वपि सूक्ष्मालंकारः प्रसरति । अत्र पद्ये तावत् आवयोः किं संकेतस्थानं भविष्यतीति प्रश्नाशयं सूचयति भगवति नन्दनन्दने तदभिज्ञया विदग्धया व्रजसुन्दर्या सखीं प्रति साकूतमुक्तमिति भवति सूक्ष्मालंकारः । यतोऽत्र हंसमालाया निश्चलतमपुण्डरीकमालिकोपमया तस्यास्तत्र निस्पन्दतया साश्वासत्वं तेन तस्य प्रदेशस्यातिमात्रविविक्तत्वं तेन तदेवावयोस्संकेतस्थानमिति तं प्रति सूचनं लक्ष्यते । न चात्र ध्वनिराशङ्कनीयः व्यङ्ग्यपरंपरया व्यज्यमानस्यापि संकेतस्थानप्रश्नोत्तरस्य स्वोक्त्यैवाविष्कृतत्वात् । एवं हि पिहितालंकारेऽप्युदाहार्यम् ॥

इदं चान्यदत्रावधेयम्—"तत इत इह संभ्रमतः । किं चिन्तयसे भद्रे । का त्वं का वा किं तव । पुरतो नन्दकिशोरे । स्वकरधृतं लिखिति नखैः" इत्यादिप्रागुपदर्शितगूढोत्तरसूक्ष्माद्यलंकारोदाहरणेषु भावो न स्वोक्त्याऽऽविष्कृतः । किंतु वस्तुसौन्दर्यबलाद्वक्तृबोद्धव्यविशेषाविशेषिताद्गम्यः । तत्रैव वस्तुतो नालंकारत्वं, ध्वनिभावास्पदत्वात् । प्राक्तनैस्स्वोक्त्याऽऽविष्करणे सत्यलंकारास्पदताऽस्तीत्युदाहृतानि "यत्रासौ वेतसी पान्थ" इत्यादीनीति तदनुसारिभिरस्माभिरपि तथाविधान्युदाहृतानि पद्यानि । शक्यं ह्येषामुदाहरणानामुत्तरश्लोककल्पनया भावाविष्करणम् ॥

यथा—

तत इत इह संभ्रमतः कुत इव विचिनोषि नन्दसुत गां त्वम् । कालिन्दीतटकुञ्जे कामं दीव्यति हि तत्र सुलभैषा ॥ १८९३ ॥

इति काचिद्व्रजललना गां निजयूथच्युतां विचिन्वानम् । पृच्छन्तं नन्दसुतं कामयमाना जगाद साकूतम् ॥ १८९४ ॥

इति । तस्मादस्माभिः प्रागुदाहृतेषु 'परतरुणीहारिद्रच्छुरितकपोलम्' इत्यादिषु येषु भावाविष्करणमस्ति तेष्वेव तत्तदलंकार इति ॥

इत्यलंकारमणिहारे व्याजोक्तिसरो नवतितमः

---

## अथ गूढोक्तिसरः (९१)

---

गूढोक्तिरितरोद्देश्यमन्यं प्रत्युच्यते यदि ॥

यं प्रति किंचिद्वदितव्यं तन्माज्ञासिषुस्तटस्था इति तदितरं यंकंचित्प्रति यत् श्लेषणोच्यते तत् गूढोक्तिर्नामालंकारो दीक्षितोपक्रमम् ॥

यथावा—

त्वं वत्सजातलालस आयातस्तज्जिघृक्षुरसि बाढम्। अविदूरे चरति प्रिय एष ततो गोपबाल किं त्वरसे ॥ १८९५ ॥

इदं वक्षोजग्रहणोत्सुकं भगवन्तं नन्दनन्दनं प्रति वक्तव्यं गोवत्सग्रहणौत्सुक्यशालिनं सविधभुवि सञ्चरन्तं वल्लवमाणवकं कञ्चिन्निर्दिश्य कयाचिद्गोपकामिन्या कथ्यते। हे गोपबाल वल्लवकुमार! पक्षे हे कृष्णेति संबुद्धिः। त्वं वत्से तर्णके जाता लालसा औत्सुक्यं 'लालसे प्रार्थनौत्सुक्ये' इत्यमरः। आयातः। अन्यत्र त्वं वत्सजातयोः वक्षोजयोः 'वत्सः पुत्रादिवर्षयोः। तर्णके नोरसि क्लीबम्' इति मेदिनी। लालसः उत्सुकस्सन्नित्यर्थः 'लोलुपो लोलुभो लोलो लम्पटो लालसश्च सः' इति त्रिकाण्डशेषः। आयातः तज्जिघृक्षुः तर्णकग्रहेच्छुः वक्षोजग्रहेच्छुश्च। असि। तं जिघृक्षुः तौ जिघृक्षुरिति च विग्रहः 'न लोक' इति षष्ठीनिषेधेन कर्मणि द्वितीयायां 'गम्यादीनामुपसंख्यानम्' इति समासः। बाढं साध्वेतदित्यङ्गीकारे। एष प्रियः प्रीत्यास्पदभूतो वत्सः। पक्षे एष प्रियः मद्भर्ता अविदूरे उपकण्ठ एव चरति तृणं भक्षयतीत्यर्थः। 'चरतिर्भक्षणेऽपि' इत्यनुशासनात्। पक्षे सञ्चरति। कुतस्संत्वरसे मोत्सुको भूरिति भावः। न तु नन्दनन्दनं प्रति वक्तव्ये प्रस्तुते अप्रस्तुतान्यगोपमाणवकवृत्तान्तवर्णनादप्रस्तुतप्रशंसैवेयमिति चेन्न, कार्यकारणसामान्यविशेषसारूप्यैरनभिव्यज्यमानत्वात्। नापि प्रकृताप्रकृतश्लेषमात्रं, तत्र ह्यप्रस्तुतार्थस्य प्रस्तुतार्थोपमानभावेन विवक्षाऽस्ति। नेह तथा अप्रस्तुतार्थस्य विवक्षा। अत्राप्रस्तुतस्य केवलमन्याति त-

न्धानाय निर्दिष्टतया विच्छित्तिविशेषसद्भावेन पारिशेष्याद्गूढोक्तिरित्यलङ्कारान्तरमेव युक्तमाश्रयितुम् । न चात्र तटस्थातिसंधानरूपव्यङ्ग्यस्य स्वोक्त्याऽविष्करणविरहाद्ध्वनिरेवायं नालङ्कार इति वाच्यम्, श्लेषतस्तस्यार्थस्याविष्करणेन ध्वनेरसम्भवादित्याहुः ॥

यथावा—

**करुणार्द्रचित्तभवतापाल्या परिदीनमानसा सेयम् । नान्यत्काङ्क्षति नाथ त्वदपाङ्गविलासलाभवैभवतः ॥ १८९६ ॥**

हे करुणार्द्रचित्त हे नाथ जगदीश्वर! परिदीनमानसा सेयं तन्वी । त्वदपाङ्गविलासलाभवैभवतः त्वत्कटाक्षप्रसरणावाप्तिविभवात् अन्यत् न काङ्क्षति । अतः भवता त्वया पाल्या रक्षणीयेति भगवन्तं प्रति प्रार्थना । गूढार्थस्तु—हे करुणार्द्रे हे नाथ वल्लभ! चित्तभवतापाल्येति समस्तं पदम् । चित्तभवतापानां मनसिजतापानां आल्या पङ्क्त्या कन्दर्पज्वरपरंपरयेत्यर्थः । परिदीनमानसा सेयं तन्वी । त्वदपाङ्गेत्यत्र त्वदिति भिन्नं पदं पञ्चम्येकवचनान्तम् । त्वत् त्वत्तः अपाङ्गः अनङ्गः तस्य विलासः रतिरित्यर्थः । तस्य लाभः प्राप्तिरेव वैभवं तस्मात् तत्तः । अन्यत् न काङ्क्षति । अत्र नाथेति नन्दनन्दनं सम्बोध्य तस्माद्रतिमेव प्रार्थयमानायाः कस्याश्चिद्व्रजललनायास्तटस्थवञ्चनाय भगवन्तं प्रत्यात्मनस्संसारतापदीनत्वेन कटाक्षमात्राशंसनस्य प्रत्यायनम् ॥

इत्यलङ्कारमणिहारे गूढोक्तिसर एकनवतितमः ॥

---

## अथ विवृतोक्तिसरः (९२).

विवृतोक्तिश्श्लेषगूढं विवृतं कविना यदि ॥

श्लेषेण गुप्तोऽर्थो यथाकथंचित्कविना स्वोक्त्या आविष्क्रियते चेत्सा विवृतोक्तिरित्यर्थः । इयमपि दीक्षितोपज्ञम् ॥

यथा—

एषा चरति सुखेन हि सुरभी रविजाप्रतीरजानुगता । पाल्या त्वयेत्यवादीदभिकृष्णं काऽपि गोपिका गोपम् ॥ १८९७ ॥

एषा सुरभिः गौः 'सुरभिर्गवि च स्त्रियाम् । वसन्तचैत्रयोः पुंसि त्रिषु सौम्यमनोज्ञयोः' इति रत्नमाला । रविजायाः यमुनायाः प्रतीरजाः तरव इति यावत् । तेषु अनुगता सती सुखेन चरति तृणमिति शेषः । कबळयतीत्यर्थः । संचरतीति वा । त्वया पाल्या यथा अन्यत्र न यायात्तथा प्रतिपालनीयेत्यर्थः । हार्दोऽर्थस्तु—सुरभिः सुगन्धिः । अनेनास्याः पद्मिनीजातित्वं सूचितम् । सौम्या मनोज्ञा वा । कोशस्तूक्तः । एषा च अहमपीति भावः । कामपारवश्येनात्मन एव पारोक्ष्येण निर्देशः । न केवलमितरा एव महिलाः । किंत्वमहपीति चशब्दाभिप्रायः । रविजाप्रतीरे यमुनातटे जानुगता त्वदूरूपनिविष्टा सती । रतिसुखेन त्वया पाल्या प्रीणनीयेति यावत् । इति काऽपि गोपिका अभिकृष्णं कृष्णाभिमुखं अवादीत् । इदं परवञ्चनाय गुप्तस्याविष्करणम् । प्रतीयमानार्थान्तरेण कंचिद्गोपं

प्रत्यनुशासनरूपेण गुप्तस्य विवक्षितस्य श्रीकृष्णेन सहात्मनो यथेष्टविहारस्यार्थान्तरस्याभिकृष्णमित्यनेनाविष्करणात् ॥

यथावा—

**गोपालसमुद्योगं त्वमेहि समया विलासयेमा गाः। पतिमिति वनमेष्यन्तं गोपी कृष्णाय तिष्ठमानाऽऽह ॥ १८१८ ॥**

इयं श्रीकृष्णेन सह रन्तुमुत्कण्ठितायाः कस्याश्चिद्गोपकामिन्यास्स्वभर्तारं प्रति वञ्चनोक्तिः। तथाहि—हे गोपेति स्वभर्तुस्संबुद्धिः। त्वं अलसं मन्दं उद्योगं प्रयत्नं एहि। दूरजिगमिषायां हि महानुद्योगः कार्यः न तु सविधजिगमिषायामिति भावः। तदेतदाविष्कुर्वाणाऽऽह—इमाः गाः धेनूः समया समीप एव विलासय विहारय इति स्वभर्तारं प्रत्युक्तिः। गूढाभिप्रायपक्षे तु—गोपाल समुत् योगं त्वं एहि सः मया विलासये मा गाः इति छेदः। हे गोपाल! सः त्वं इयन्तमवधिं मया प्रतीक्षितस्त्वमिति भावः। समुत् विविक्तविहरणस्य प्रत्यासन्नत्वात्सानन्दस्सन् मया सह योगं संगतिं एहि इत्यर्थं मदुपान्तं प्राप्नुहीति भावः। सहसा त्वदुपान्तोपसर्पणे त्वं मां विलासयेर्वा न वेत्याशङ्कां परिहर्तुमाह—विलासये इति। रतिसुखवितरणेनानन्दये इति भावः। विलासवन्तं करोमीति वा। मा गाः अतस्त्वमिदानीमन्यतो मा व्राजीः। गच्छत्वेष पतिः पशुपालनाय। आवां स्वैरं रंस्यावहे इति भावः। इदमपि परवञ्चनाय गुप्तस्याविष्करणम्। कृष्णाय तिष्ठमाना स्वाभिप्रायं प्रकाशयन्तीत्यर्थः। तिष्ठतेः 'प्रकाशनस्थेयाख्ययोश्च' इति

तङ् । 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इति सम्प्रदानसंज्ञायां कृष्णशब्दाच्चतुर्थी ॥

यथावा—

**शिथिलयति करेणाग्रिमभागेऽन्दुकबन्धमेष पुन्नागः । हृष्येच्च तद्वशाऽसाविति शौरिगिरा नतानना गोपी ॥ १८११ ॥**

इयं गोपतरुणीपयोधरपरिष्वङ्गेच्छोर्भगवतश्शौरेः करेणुमुद्दिश्योक्तिः । एषः पुन्नागः मतङ्गजपुङ्गवः अग्रिमभागे पुरःप्रदेशे करेण शुण्डादण्डेन अन्दुकबन्धनं निगळबन्धं स्वस्य करिण्याश्चेति भावः । 'अन्दुको निगळोऽस्त्री स्यात्' इत्यमरः । शिथिलयति । तत् तस्मात् बन्धविस्रंसनाद्धेतोः असौ वशा करिणी च 'करिणी धेनुका वशा' इत्यमरः । हृष्येत् स्वैरविहारलिप्सया प्रमोदेत । गूढार्थस्तु—अग्रिमभाः गेन्दुकबन्धं इति छेदः । अग्रिमा श्रेष्ठा भाः दीप्तिः यस्य स तथोक्तः । एषः पुन्नागः पुरुषश्रेष्ठ इति स्वस्यैव साहसिकत्वप्रत्यायनायान्यत्वेन निर्देशः । करेण हस्तेन गेन्दुकयोः कन्दुकत्वेनाध्यवसितयोः पयोधरयोः बन्धं कञ्चुळीबन्धनं शिथिलयति श्लथयतीति वर्तमानसामीप्ये भविष्यति वर्तमानवन्निर्देशः । असौ त्वमिति वक्तव्ये परवञ्चनायादश्शब्देन गोपिकाया निर्देशः । एवमनुपदवक्ष्यमाणतच्छब्दप्रथमपुरुषयोरप्यूह्यम् । तद्वशा तस्य कञ्चुळीविस्रंसयितुर्ममेति भावः । वशा आयत्ता सती हृष्येत् । रतिसुखेनानन्देदित्यर्थः । इति शौरिगिरा भगवद्वचनाकर्णनेनेति यावत् । गोपी नतानना अभूत् । इदमपि परवञ्चनाय गुप्ताविष्करणमेव ॥

ममैव रङ्गराजविलासे यथावा—

**माधवमभिवीक्ष्यामुं भुजङ्गशयमद्य हृदि कुरुष्वेति। नैजसखीं प्रत्युक्तं कयाचन निशम्य जोषमास युवा॥ ११०० ॥**

इदं भगवतो रङ्गराजस्योत्सवसमये महाजनसम्मर्दे स्वपयोधरदत्तहस्तमसमयज्ञं कञ्चित्कामिनं प्रति वक्तव्यस्यार्थस्य स्वसखीं प्रति कस्याश्चिद्विदग्धायाः कामिन्या वचनम्। भुजङ्गशयं शेषशायिनं अमुं माधवं श्रीवल्लभं श्रीरङ्गराजं अभिवीक्ष्य अभितो दृष्ट्वा प्रत्यवयवं विविच्य विलोक्येत्यभिप्रायः। हृदि कुरुष्व ध्याये। गूढार्थस्तु—मा धवं इति, भुजङ्ग शयं इति च पदद्वयम्। हे भुजङ्ग हे पल्लविक! अमुं विप्रकृष्टस्थितं 'अदसस्तु विप्रकृष्टे' इत्यनुशासनात्। धवं मद्भर्तारं वीक्ष्य हृदि मम वक्षसि शयं पाणिं मा कुरुष्व। मद्भर्ताऽयमदूरावस्थित एव मा मत्पयोधरौ स्प्राक्षीरिति भावः। इदमपि परातिसन्धानार्थगुप्ताविष्करणम्॥

ममैव नृसिंहविलासे यथावा—

**घनरत्नश्रीवत्साङ्कमनालोक्यापि वल्लभं कस्मात्। मां पश्यसीति गदिते सखीं प्रति कयाऽपि निववृते विटराट्॥ ११०१ ॥**

इयं भगवतो नृसिंहस्योत्सवसंमर्दे प्रत्यासन्नमपि भर्तारं रागान्धतयाऽनालोक्यात्मानं पश्यन्तं कञ्चित्कामुकं प्रति निगदितव्यस्यार्थस्य स्वसखीं प्रति कस्याश्चित्प्रौढाया उक्तिः। वल्लभं

दयितं सर्वलोकेश्वरं वा 'त्रिष्वभ्यक्षेऽपि वल्लभः' इत्यमरः। घनं रत्नं कौस्तुभो यस्य स तथोक्तः। स चासौ श्रीवत्साङ्कः भगवान् तं अनालोक्यापि कस्माद्धेतोः मां श्रियमेव पश्यसि। भगवन्तमपि पश्येति भावः। गूढार्थस्तु—हे कमन कामुक! वल्लभं मद्भर्तारं आलोक्यापि घना च सा रत्नश्रीश्च सा वत्से वक्षसि यस्यास्तां घनरत्नश्रीयुक्तं वत्सं यस्या इति वा। मा कस्मात्पश्यसि। मद्भर्तुस्समक्षं मा द्राक्षीरिति भावः। इदमपि परवञ्चनार्थगुप्ताविष्करणमेव॥

त्रपागुप्ताविष्करणं यथा—

**स्मरदीनामेनां त्वं सुभगोविन्दावतप्तहृदयां माम्। नाथ विमृशन्विविक्तामिति गोप्या शौरिरिङ्गितमबोधि॥ ११०२॥**

स्मर दीनां एनां त्वं सुभगः विन्द अवतप्तहृदयां मां इति प्राथमिकार्थकक्ष्यायां पदच्छेदः। शोभनः भगः ऐश्वर्यादिषाड्गुण्यं यस्य सः सुभगः तस्य संबुद्धिः हे नाथ सर्वेश्वर! त्वं एनां मामिति भावः। दीनां स्मर। एषा कृपणेति जानीहीति भावः। अत एव अवतप्तहृदयां तापत्रयक्षुभितमानसां मां विन्द प्राप्नुहि। रक्ष्यत्वेन स्वीकुरुष्वेति यावत्। स्वपरिग्रहे हेत्वन्तरं चाभिप्रयन्ती प्राह विविक्तां पवित्रशीलां शरण्यान्तरचिन्तनासंवलिततया स्वच्छामिति भावः। 'विविक्तौ पूतविजनौ' इत्यमरः। विमृशन् सम्यग्विचारयन् विन्देत्यन्वयः गूढाभिप्रायपक्षे तु—स्मरदीनां एनां त्वं सुभ गोविन्द अव तप्तहृदयां मां इति छेदः। हे नाथ प्रिय! सर्वानपि पुरुषार्थान् त्वमेव याचनीय इति भावः। हे गोविन्द! त्वं स्मरेण दीनां अत एव

तत्तहृदयां विरहतापशिथिलितमानसां एनां मां विविक्तां निश्शलाकस्थानावस्थितां विभुराननु इयमिदानीं रहस्यवस्थितेति सम्यग्विजानन् अव प्रीणय। अवतेः प्रीणनार्थकाल्लोण्मध्यमैकवचनम्। अत्र स्फुटप्रतीयमानेन भगवदभ्यर्थनरूपेण त्रपया गुप्तस्य विवक्षितश्रीकृष्णसंभोगाभ्यर्थनरूपस्यार्थान्तरस्य इङ्गितमबोधीत्यनेन स्फुटीकरणम्। इदं शब्दशक्तिक्रोडीकृतगुप्ताविष्करणम्॥

अर्थशक्तिमूलगुप्ताविष्करणं यथा—

**त्वं किल कृपानिधिर्मां प्रतीक्षमाणां दृशाऽपि नागृह्णाः। इति साकूतं ब्रुवती परिरब्धा शौरिणा व्रजेन्दुमुखी॥ ११०३॥**

त्वं किल कृपानिधिरिति विपरीतलक्षणा। कुत इत्यत्राह—प्रतीति। प्रतीक्षमाणां चिरात्राय हृदयविपरिवर्तमानत्वदुपभोगाशासनेन त्वां प्रतिपालयमानामिति भावः। दृशाऽपि नागृह्णाः। उपभोगप्रत्याशा तावदास्तां दूरे कटाक्षलेशप्रसारेण वा न मामाद्रियथा इति भावः। कृपानिधिरेव न चेदेवं कुतस्तनुया इत्युपालम्भः। अत्र एवंविधया वचनभङ्ग्या चिरोत्कण्ठितस्त्वदुपभोगौपयिकसमयलाभेन त्वामहं प्रत्यैक्षिषि। स च न प्राप्त इत्यर्थशक्तिलभ्यं वस्तु साकूतमित्यनेन विवृतम्। सर्वमिदं कविनिबद्धवक्तृगुप्ताविष्करणोदाहरणम्॥

कविगुप्ताविष्करणं यथा—

**प्रकृते प्रतीपदर्शिनि निजैर्गुणैर्मां विमोहयसि नित्यम्। किंचिदियस्व वामे त्वयाऽवियुक्तो लभेय नित्यसुखम्॥ ११०४॥**

दयस्व वामे त्वया अवियुक्तः इति छेदः। प्रकृते प्रस्तुते समये हे प्रतीपदर्शिनि! हे वामे सुन्दरि! निजैः गुणैः वाक्चिममानादिभिः मा विमोहयासि। किंचिद्दयस्व। मा स्मैवं मोमुह इति भावः। त्वया अवियुक्तः अविश्लिष्टस्सन्। नित्यं अनारतं सुखं लभेय प्राप्नुयाम्। पक्षे दयस्व वा मे त्वया वियुक्त इति छेदः। हे प्रकृते! इति मूलप्रकृतेस्संबोधनम्। 'प्रधानं प्रकृतिः स्त्रियाम' इत्यमरः। हे प्रतीपदर्शिनि! 'मदीयानादि कर्मप्रवाहप्रवृत्तां भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेर्जननीं' इति गदितप्रकारेण सर्वं प्रतीपं प्रतिकूलं दर्शयतीति तथोक्ता। णिजन्ताद्दृशेर्णिनिः। तस्यास्संबुद्धिः निजैः गुणैः सत्वादिभिः मां नित्यं विमोहयासि विपरीतदर्शिनं करोषि। मे मम 'दैवीं गुणमयीं मायां दासभूतश्शरणागतोऽस्मि तवास्मि दास इति वक्तारं मां तारय' इत्युक्तरीत्या त्वां शरणं गतस्येति भावः। वाशब्दो भिन्नक्रमः। किंचिद्वा दयस्व। परिपूर्णदयाकरणाभिप्रायाभावे किंचिदपि वा दयां कुर्वीथा इत्यर्थः। तावता को लाभ इत्यत आह—त्वयेति। त्वया वियुक्तः वियोगं प्राप्तस्सन्। इदमेव तव दयाकार्यं यथाऽहं मुच्येयेति भावः। ततश्च किं तवेत्यत्त आह—नित्येति। नित्यसुखं मुक्तानन्दं लभेयेति। अत्र तावत् ईर्ष्याकलुषितनायिकाप्रसादनव्यापारविधिः प्रतीयते। प्रकृतिगुणकलुषितस्य प्रकृतिं प्रत्याक्रोशो विवक्षितार्थः। स च सप्तम्यन्तस्य प्रकृते इति पदस्य प्रतीपदर्शिनीति संबुद्ध्यन्तपदान्तरसमभिव्याहारपूर्वकमुच्चारणेन संबुद्ध्यन्ततामवगमय्याविष्कृतः। कविनिबद्धवक्तृगुप्तं परवञ्चनार्थं, कविगुप्तं तु स्वप्रौढिदर्शनार्थमिति भिदा॥

इत्यलङ्कारमणिहारे वित्रुनोक्तिसरो द्विनवतितम·

# अथ युक्तिसरः (९३)

## युक्तिस्स्यान्मर्मणो गुप्त्यै क्रियया परवञ्चनम् ॥

केनचिद्व्यापारेण स्वाभिप्रायनिगूहनाय यत्परस्य वञ्चनं स युक्तिर्नामालंकारः । अयमपि दीक्षितोपज्ञम् । यद्यप्ययमलंकारो जयदेवेन चन्द्रालोके अलंकारप्रकरणे न लक्षितः, तथाऽपि काव्यलक्षणनिरूपणपरे तृतीयमयूखे काव्यलक्षणेष्वेकतमत्वेन युक्तिर्निरूपिता—

युक्तिर्विशेषसिद्धिश्चेद्विचित्रार्थान्तरान्वयात् ।
नवस्त्वं नीरदः कोऽपि स्वर्णं वर्षासि यन्मुहुः ॥

इति । दीक्षितैस्तु युक्तिरन्यथैव लक्षिता—

"युक्तिः परातिसंधानं क्रियया मर्मगुप्तये" ।

इति ॥

यथा—

**गोष्ठे कृतसंकेता गोविन्दाश्लेषकुतुकिनी सायम् । गोपी काऽपि स्वजनादुत्तस्थौ दामनीमुपादाय ॥ ११०५ ॥**

उत्तस्थावित्यत्र उत्पूर्वकत्वेऽपि तिष्ठतेरूर्ध्वकर्मत्वेन न तङ् । दामनीं पशुरज्जुम् । अत्र दामन्यादानपूर्वकोत्थानक्रियया सायं गोवत्ससंदानार्थोत्थानभ्रमजननेन गोविन्दाश्लेषौत्सुक्यरूपमर्मगोपनेन स्वजनवञ्चनं विवक्षितम् । इदं वर्तिष्यमाणगोपनम् ॥

वृत्तगोपनं यथा—

**काऽपि क्षतरदवसना गोपकुमारेण गोपबिम्बो**

ष्ठी । स्वैरमुपलालयन्ती कीरमुपागात्कलिन्दजा-तीरात् ॥ ११०६ ॥

अत्र स्वैरकीरोपलालनक्रियया अधरबिम्बस्य तद्दंशनभ्रम-जननेन नन्दनन्दनरदनक्षतिरूपमर्मगोपनेन परवञ्चनम् । बिम्बोष्ठीति विशेष्यं बिम्बीफलभ्रान्त्या शुकेन दष्टस्स्यादयमधर इति भ्रमोत्पादनोपष्टम्भकम् ॥

अत्र व्याजोक्तावाकारगोपनम्, युक्तौ त्वाशयगोपनमिति भेदः । यद्वा व्याजोक्तावुक्त्या गोपनं, इह तु क्रियया गोपन-मिति भेदः । एवंच 'आयान्तमालोक्य हरिं प्रतोळ्याम्' इति पद्येऽपि युक्तिरेवेति कुवलयानन्दे स्थितम् ॥

अत्रेदं चिन्त्यं—उक्तिक्रियाकृतगोपनभेदादनयोर्भेद इति न युक्तं, व्याजोक्तिप्रकरणे दीक्षितैरेव उक्तिशब्दस्य गोपनसाध-नान्तरप्रत्यायकव्यापारमात्रोपलक्षणतायाः स्फुटतया प्रतिपादित-त्वात् । तथैव तत्रैव "आयान्तमालोक्य" इत्युदाहरणे स्पष्टतया लक्षणस्याप्यनुगमितत्वाच्च । अतो विवक्षितस्य वस्तुनः केन चिद्व्यापारेण परवञ्चनार्थं यद्गोपनं तद्व्याजोक्तिरित्येव व्याजोक्ति लक्षणं प्राचां युक्त्यलङ्कारं पृथगलक्षयतामभिमतं, स च व्यापारः कचिदुक्तिरूपः, कचित्तदन्यरूपः, गोपनीयश्च कचिदाकारः कचित्तदन्यदाशयादिकमिति विभागो युक्त इति न व्याजो-क्तितोऽतिरिच्यते युक्तिरिति । अतः 'आयान्तमालोक्य' इत्यत्र युक्तिरेवेति पूर्वोत्तरविरोधेन लेखनं चिन्त्यमेव । लाघवेन व्याजोक्तेरेवाङ्कीकर्तुं संभवादित्याहुः ॥

अस्माभिस्तु—व्याजोक्तावुक्तिग्रहणस्याकारगोपनार्थहेत्वन्त-रप्रत्यायकव्यापारमात्रोपलणताया अस्वीकारेण उक्तिरूपव्यापारे-

णाकारगोपने व्याजोक्तिः। तदन्यव्यापारेणाशयगोपने युक्तिरित्येव व्यवस्थामाश्रित्य पृथगिमावलङ्कारौ लक्षितौ। दीक्षितानामपि व्याजोक्तिप्रकरणे 'आयान्तमालोक्य' इति पद्ये व्याजोक्तिरेवेति लेखनं मतान्तरानुरोधेन। युक्त्यलङ्कारप्रस्तावे तस्मिन्नेव पद्ये युक्तिरेवेति लेखनं तु तत्रैव स्वनैर्भर्यं प्रकाशयितुमिति न पूर्वोत्तरग्रन्थविरोध इति समाधेयम्। एवंच व्याजोक्त्यलङ्कारप्रकरणे उदाहृते 'यमुनातटीनिकुञ्जाद्व्रजम्' इति पद्येऽपि युक्त्यलंकार एव न तु व्याजोक्तिरिति दिक्॥

इत्यलंकारमणिहारे युक्तिसरस्त्रिनवतितमः.

---

## अथ लोकोक्तिसरः (९४)

---

**लोकोक्तिस्स्यादसौ लोकप्रवादानुकृतिर्यदि॥**

लोकानां जनानां यः प्रकृष्टो वादः उक्तिः प्रकर्षश्च तत्तद्देशानुसारेण तत्तद्देशीयजनपरंपरागतत्वम्, तादृशवादस्यानुकृतिः उल्लेखः यः स लोकोक्तिरित्यर्थः। अयमप्यलंकारो दीक्षितोपज्ञमेव॥

यथा--

**तव वेषवहनतोऽभवदवहसनपदं स पौण्ड्रको भगवन्। क्रोष्टेव चित्रकायं दृष्ट्वा तन्नायसा लिखन्कायम्॥ ११०७॥**

चित्रकायं व्याघ्रं 'पुण्डरीकः पञ्चनखश्चित्रकायमृगाद्विषौ' इत्यमरः। चित्रकायशब्दोपादानं वक्ष्यमाणजम्बुककर्तृकस्वाङ्ग-

चित्रीकरणाभिलाषपूर्वकतप्तायश्शलाकाकरणकस्वाङ्गलेखनकर्मो - त्तम्भनाभिप्रायेण । दृष्ट्वा तप्तायसा तप्तायश्शलाकयेति यावत् । कायं स्वाङ्गं लिखन् क्रोष्टा जम्बुक इव । स्पष्टमन्यत् । अत्रो- त्तरार्धे कर्णाटान्ध्रदेशीयभाषाप्रसिद्धलोकप्रवादानुकृतिः ॥

यथावा—

शिक्षितमपि कौटिल्यं त्यक्ष्यति नैवासुरप्रकृति हृदयम् । अपि वेणुदळाबद्धं श्वापुच्छं किमु ऋजू- भवेद्भगवन् ॥ ११०८ ॥

शुनः पुच्छं श्वापुच्छं 'शुनो दन्तदंष्ट्रा' इत्यादिना दीर्घः । अत्रान्ध्रदेशप्रसिद्धलोकप्रवादानुकरणम् ॥

यथावा—

शौरे त्वदन्यदैवं प्रत्येत्य भवाब्धितरणमाशं- सन् । विश्वस्य महाबुद्बुदमभिपतति प्रावृषेण्यस- रिति जनः ॥ ११०९ ॥

अत्राप्यान्ध्रदेशीयलोकप्रवादानुकृतिः ॥

यथावा—

महता योगेन त्वामिह तावदुपास्य यो महो- दारम् । आलम्बेताल्पफलं शैलं खात्वाऽऽखुमेष गृह्णाति ॥ १११० ॥

यथावा—

सत्स्वपि सुदर्शनादिषु नखरैः प्रतिचस्करे त्व- या दैत्यः । ननु नरहरे किमर्था नखापनेये परश्व- थापेक्षा ॥ ११११ ॥

यथावा—

समितौ सतां निविशतां न तावता त्वत्कथां खलो गायेत् । लोकेश किंनु काकः पञ्जरनिहितोऽपि पञ्चमं ब्रूयात् ॥ ११९२ ॥

यथावा—

त्वयि सर्वेऽप्युपचारा वन्ध्यास्स्युर्दैवतान्तरासङ्गे । एकस्मिन् स्वैरत्वे नाथ सहस्रं व्रतानि नश्यन्ति ॥ ११९३ ॥

यथावा—

प्राक्त्वदनुग्रहहानादधुनाऽपि तवात्यनुग्रहविधानात् । अभजामाकिंचनतामेवंच पृथाभुवां न किल राज्यम् ॥ ११९४ ॥

प्राक् आकिंचनतां दरिद्रतां अधुना अकिंचनतां उपायान्तरविधुरतां अभजाम। एवंच ऐहिकश्रीरस्माकं दवीयसीति बिम्बमनादृत्य एवंचेत्यादिप्रतिबिम्बवर्णनात् ललितोज्जीवितयम्। पूर्वोदाहरणेषूपमानिदर्शनाद्युज्जीवितत्वं द्रष्टव्यं बुद्धिमद्भिः । एषु सर्वेष्वापि पद्येषु तत्तद्देशीयलोकप्रवादानुकृतिः ॥

इत्यलंकारमणिहारे लोकोक्तिसरश्चतुर्नवतितमः.

---

## अथ छेकोक्तिसरः (९५)

---

स्याच्चेल्लोकोक्तिरन्यार्थगर्भा छेकोक्तिरिष्यते ।

यथावा—

त्वद्विमुखोऽम्बुजलोचन मद्वंशे मा जनिष्ट कश्चिदपि । विकलस्स्वयं प्लवङ्गस्सकलं वनमपि कदर्थयेन्नूनम् ॥ ११९५ ॥

अत्र 'मा जनिष्ट स नो वंशे' इत्युपक्रम्य 'आजन्मनिधनं यस्य वासुदेवो न दैवतम्' इति वचनैकदेशार्थसंग्राहके प्रपन्नवचने विकलस्स्वयं प्लवङ्ग इत्यान्ध्रदेशप्रसिद्धलोकप्रवादोऽनुकृतः । तत्र सर्वेश्वरेश्वरे त्वयि वैमुख्यमइनुवानः अतिचपलतया कपिप्राय एव । स हि अचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यभक्तिपरिपूर्णतया महावनमिवातिगभीरतमं स्वकुलमपि स्वदौरात्म्येनाकुलयेदित्यर्थान्तरमपि गर्भितम् ॥

यथावा—

ननु कस्मिन् वल्मीके वृजिनगतिः कीदृगस्तिवेति वदन् । सङ्गात्स्जनस्यापि त्रस्यति भगवंस्त्वदेकशरणो यः ॥ ११९६ ॥

वृजिनगतिः जिह्मगः । अत्रान्ध्रभाषाप्रसिद्धलोकप्रवादानुकृतिः । प्राकृतो जनस्तमोमयतया दुर्जन्तुसंवलिततया चातिभयङ्करो वल्मीकप्राय एव तस्मिन् वृजिनगतिः दुरितानुबन्धः कीदृग्वेत्यर्थान्तरगर्भिता । अत्र—

अप्येकपङ्क्तौ नाश्नीयाद्ब्राह्मणैस्स्वजनैरपि ।
को विजानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥

इति स्मृत्यर्थच्छायाऽनुसृता ॥

इत्यलङ्कारमणिहारे छेकोक्तिसरः पञ्चनवतितमः.

———

# अथ वक्रोक्तिसरः (९६)

अन्याभिप्रायकान्योक्तमन्यथाऽन्येन योज्यते ।
श्लेषेण यदि काका वा सा वक्रोक्तिरितीर्यते ॥

यत्र अन्याभिप्रायकपुरुषान्तरोक्तस्यान्येनान्यथा यद्योजनं तदनुकूलोक्तिर्वक्रोक्तिरित्यर्थः । सा च द्विधा, श्लेषेण काका वा अन्यथा योजनात् ॥

तत्र श्लेषेण यथा—

न क्रोधः कार्योऽम्बुधिसुते त्वया नाहमम्बुधिः कस्मात् । नक्रमधः कुर्यामिति गिरा हरिं जयति मोहयन्ती श्रीः ॥ ११२२ ॥

अत्र क्रोधो न कार्य इत्यभिप्रायेणोक्तस्य भगवद्वाक्यस्य नक्रः अधःकार्य इति भगवत्या श्रिया श्लेषेणार्थान्तरं कल्पितम् ॥

यथावा—

नयनाब्जं न्यस्येर्मयि न नयाम्यब्जं स एष तव हस्ते । इति वचसा निजदयितं विमोहयन्ती रमा तनोतु शुभम् ॥ ११२३ ॥

अत्र नयनाब्जं मयि न्यस्येः कटाक्षं निक्षिपेरिति भगवतोऽभ्यर्थनवचनस्य नय न अब्जमिति पदच्छेदेन न नयाम्यब्जं किन्तु स एषः अब्जः शङ्खः तव हस्त एवास्त इत्यर्थान्तरपरिकल्पनम् ॥

यथावा--(युग्मं)

किं चिरयसि संलपितुं किंचिदुदञ्चय कुतूहलं ललने । तैलिकहालिकनिकटे कुतूहलं चापि लभ्यते नात्र ॥ ११२४ ॥

कुप्यसि कस्माद्वनिते प्रसीद रूप्याकृते मयि प्रणते । कुप्येत्किं रूप्याकृतिरिति परिहसति स्म दयितमब्धिसुता ॥ ११२५ ॥

अत्राद्यश्लोके किञ्चित्कुतूहलमाश्लेषादावुदञ्चयेति भगवतोक्तस्य कुतूः कृत्तिस्नेहपात्रं हलं लाङ्गलं चेत्यनयोस्समाहारः कुतूहलमित्यर्थान्तरं परिकल्पय यथाक्रमं तैलिकनिकटे कुतूः हालिकनिकटे हलं च लभ्यते नात्रेत्युत्तरम् । द्वितीये तु हे रूप्याकृते प्रशस्तरूपाकारे हे वनिते जनितात्यनुरागे 'वनिता जनितात्यर्थानुरागायां च योषिति' इत्यमरः । प्रणते मयि कस्मात् कुप्यसि कोपं विधत्से इति भगवतोदितस्य आहतं रूपमस्य रूप्यं तस्येवाकृतिर्यस्या इत्याहतरूपहेमरूप्यान्यतरतुल्याकृतित्वरूपार्थान्तरम् । कुप्यसीत्यस्य कुप्यं कृताकृतहेमरूप्यभिन्नं ताम्रकांस्यादि तदिवाचरसीत्यर्थं च कल्पयित्वा रूप्याकृतिः कथं कुप्येदित्युत्तरं भगवत्या जगज्जनन्या वितीर्णम् । रूप्यशब्दः 'रूपादाहतप्रशंसयोर्यप्' इति रूपशब्दादाहतप्रशंसयोरर्थयोर्यप्प्रत्ययेन निष्पन्नः । 'स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते । ताभ्यां यदन्यत्तत्कुप्यं रूप्यं तद्द्वयमाहतम्' इत्यमरः ॥

यथावा—

उत्सृज्य मानकाटवमुदधिभवे मधुरमस्तु तव हृदयम् । न दधिभवाऽहं किंतूदधिजाता मस्तु मम कथं हृदयम् ॥ ११२६ ॥

अत्र रोषकाटवमुत्सृज्य तव हृदयं प्रियं भवत्वित्यर्थकस्य उत्सृज्य मानकाटवं मधुरमस्त्विति वाक्यस्य उत्सृज्यमानं काटवं येन तत्तथाविधं मधुरं मस्तु दधिमण्डमित्यर्थान्तरं परिकल्प्य न दधिभवाऽहमित्यादिना उत्तरम् ॥

यथावा—

अत्र पुमांसं परमं विद्धि स्थितमब्जदलविशालाक्षि । मांसं या त्रपु विद्यात्तां प्रत्युपदेश एष सफलस्स्यात् ॥ ११२७ ॥

अत्र त्वदग्रे स्थितं मां परमपुरुषं विद्धीत्यर्थकस्य अत्र पुमांसमित्यादिभगवद्वाक्यस्य या मुग्धा मांसं त्रपु विद्यात् तां प्रति मांसं अत्रपु इत्युपदेशस्य साफल्यमित्यर्थान्तरकल्पनेन श्रिया उत्तरम् ॥

यथावा—

तव नायकेन तन्वि प्रतिहारे स्थीयतां कियत्कालम् । ननु नायकेन हारे हारे स्थातव्यमेव सततमपि ॥ ११२८ ॥

द्वारे तव प्रियेण कियदवधि स्थातव्यमित्यर्थकस्य तव नायकेनेत्यादिभगवद्वाक्यस्य नायकमणिना प्रतिमुक्ताहारमपि

स्थेयमेवेत्यर्थान्तरविधानेन लक्ष्म्या उत्तरम् । हारेहारे प्रति-हारे इत्यव्ययीभावः । 'तृतीयासप्तम्योर्बहुलम्' इत्यम्भावाभावः ॥

यथावा—

**सहजमरुदधिप एष त्वय्यतितृष्णस्सुधापयो-धिसुते । सहजं मरौ दधि पिबन्नतितृष्ण इती-दमतितरां चित्रम् ॥ ११२९ ॥**

अत्र सहोदरो मघवा यस्य स उपेन्द्रः त्वय्यतिमात्रस्पृह इत्यर्थकस्य सहजमरुदधिप इति भगवद्वाक्यस्य सहजं यथा स्यात्तथा मरुदेशे दधि पिबन् अतिवेलपिपास इत्यर्थान्तरक-रणेन श्रिय उत्तरम् । इमानि 'न कोधः कार्योऽम्बुधि' इत्यादीनि पद्यानि प्रणयकलहे श्रीश्रीवल्लभयोरुक्तिप्रत्युक्तिरूपाणि ॥

यथावा—

**व्रजसुमुखि न तिष्ठामि व्रजामि भो नन्दगोप-वंशमणे । व्रजसि यदि त्वं नन्देत्कथमयमिति शौरिरग्रहीद्गोपीम् ॥ ११३० ॥**

अत्र व्रजसुमुखीति गोपललनां प्रत्यभिमुखीकरणाय सम्बु-द्ध्यन्ततया भगवता प्रयुक्तस्य समस्तपदस्य समुखितया व्र-जसुमुख्या हे सुमुखि व्रज गच्छेति श्लेषेणार्थान्तरं परिकल्प्य न तिष्ठामि व्रजामि भो नन्दगोपवंशमणे इति भगवन्तं प्रति वक्रोत्तरं व्यतारि । तेनापि तया संबुद्ध्यन्ततया प्रयुक्तस्य नन्दगोपवंशमणे इत्यस्य समस्तस्य पदस्य हे गोपवंशमणे नन्द मोदस्व इति छेदेनार्थान्तरं प्रकल्प्य त्वं व्रजासि यदि एवं वदन्तं मामुपेक्ष्य गच्छसिचेत् अयं त्वत्परिष्वङ्गमभिलष-

माणः कथं नन्देदिति वक्रोक्त्यैव स्वाभीप्सितं भगवता प्रकाशितमिति वक्रोक्त्युज्जीविता वक्रोक्तिरियम् ॥

यथावा—

मन्ये त्वं च्युतधीर्येन्न संलपन्त्या मयाऽऽळि संलपसि । अच्युतधियं वृथा मां च्युतधियमात्थाळि सत्यमच्युतधीः ॥ १९३१ ॥

इदं कयोश्चिद्व्रजसुभ्रुवोरुक्तिप्रत्युक्तिरूपं पद्यम् । अत्र मन्ये इत्यादि पूर्वार्धं किमपि ध्यायन्तीं कांचित्सखीं प्रति कस्याश्चित्सख्या उक्तिरूपम् । च्युतधीः गळितमतिः निश्चेतनेत्यर्थः । उत्तरार्धं अच्युतधियमित्यादि आत्थेत्यन्तं अन्यस्यास्तां प्रत्युक्तिः । आळीत्याद्यवशिष्टवाक्यं पुनस्तां प्रति वदन्तीं प्रत्याद्याया उक्तिः । अत्र ऋजुबुद्ध्या कमपि वृत्तान्तं प्रस्तुवत्या कयाचित्प्रतिवाचमददानां सखीं वीक्ष्य नूनं त्वं निश्चेतनाऽसीत्युक्तम् । तया च नाहं निश्चेतनेत्यभिप्रायेण अच्युतधियं मां वृथैव च्युताधियं ब्रवीषीति प्रत्युक्तम् । पुनस्तया सखि सत्यं त्वं अच्युतधीः कृष्णानुषक्तहृदयैवासि अन्यथा संलपन्तीं मां कथं न संलपसीत्यर्थान्तरं कल्पितम् ॥

यथावा—

सारसनाभाश्लेषं सखि घटय ममेति मुग्धया गदिते । घटयितुमेवोद्योगो ममेति सस्मितमुवाच सैरन्ध्री ॥ १९३२ ॥

अत्र मुग्धया कयाचिद्गोपबालिकया प्रसाधयित्रीं शिल्पकारिकां प्रति ऋजुबुद्ध्या सारसनस्य मेखलायाः आभायाः

प्रभायाः आश्लेषं संबन्धं मम घटयेत्यभिप्रायेण प्रयुक्तस्य सारसनाभाश्लेषमित्यादिवाक्यस्य सारसनाभस्य पद्मनाभस्य श्रीकृष्णस्य आश्लेषं उपगूहनं घटयेति श्लेषेणार्थान्तरं प्रकल्प्य घटयितुमेवायं परिष्कारोद्योग इत्युत्तरं प्रौढया सैरन्ध्रया दत्तम् ॥

यथावा—

**गोपालिके विलोकय किंचिदितः किं विलोकयाम्यलिके । गोपेत्यामन्त्रयसे गोपीं मां मुग्ध गोप एव त्वम् ॥ ११३३ ॥**

अत्रात्मानं प्रति कटाक्षप्रसारं प्रार्थयमानेन हे गोपालिके गोपि इतः किंचिद्विलोकयेति भगवता श्रीनन्दनन्दनेनोक्तस्य गोपालिके विलोकयेति वाक्यस्य हे गोप अलिके ललाटे किंचिद्विलोकयेति श्लेषेण प्रकल्प्यान्यमर्थं किं विलोकयाम्यलिके इत्याद्युत्तरं वितीर्णं विदग्धया व्रजवरारोहया । हे मुग्ध मूढ सुन्दरेत्याकूतं त्वमेव गोप इत्यन्वयः । नाहं गोपः किंतु गोपी । एवं स्त्रीपुंसभेदस्याप्यनवगमेन स्त्रियं पुंवाचकशब्देनामन्त्रयमाणस्त्वमेव पशुपाल इति भावः । यद्वा यथाश्रुतमेवान्वयः । एवं वदन् त्वं गोप एव । यदि नागरक एव भवेः कथमेवं ब्रूया इति भावः । गोपालकस्य स्त्री गोपालिका । पुंयोगलक्षणङीषः 'पालकान्ताच्च' इति निषेधः । टापि 'प्रत्ययस्थात्' इतीत्वम् ॥

यथावा—

**कबळयितुं खलु शक्यो मया शुनासीर एव किमुतान्यः । नेष्टे ग्रसितुं सीरं श्वेति मुरं प्रति वदन् हरिर्जयति ॥ ११३४ ॥**

अत्र इन्द्रोऽपि मया ग्रसितुं शक्य इत्यभिप्रायेण सुरेणोक्तस्य कबळयितुमित्यादेः शुना शुनकसदृशेन त्वया सीरः अर्कः शुना शुनकेन हलं वा ग्रसितुं न शक्यमिति भगवता अर्थान्तरस्य कल्पनया प्रत्युत्तरं प्रतिपादितम् । 'सीरोऽर्कहलयोः पुंसि' इति मेदिनी । सर्वमिदमविकृतश्लेषवक्रोक्तेरुदाहरणम् ॥

विकृतश्लेषवक्रोक्तिर्यथा –

श्लेषस्याविकृतत्वं च समभिव्याहृताक्षरापरित्यागेनार्थवर्णनम् । विकृतत्वं च कस्यचिद्वर्णस्यावापोद्वापाभ्यां भवति ॥

**असमस्सुशोभमानो जगदीशो वामदेव एवायम् । असमस्सुशोभितश्चेत्स एव जगदीश्वरो न संदेहः ॥ ११३५ ॥**

इदं शैववैष्णवयोस्संवादरूपं पद्यम् । तत्र असमः असदृशः सुशोभमानः देदीप्यमानः अयं अस्मदुपास्यः वामदेवः विरूपाक्ष एव जगदीश इति शैवेनोक्तम् । वैष्णवेन तु—वासुदेव एव जगदीश इत्यभिप्रायेण समः मकारसहितः स न भवतीत्यसमः सुशोभितः च्यावितमकारस्थानकेन सुकारेण शोभितश्चेत् स एव वामदेवो जगदीशो न संदेह इति । वामदेवशब्दे मकारोद्वापं तत्रैव सुकारावापं च विधायार्थान्तरं श्लेषेण परिकल्पितम् ॥

यथावा—

**बाणासुरवरदायी काशीपुरवहनपटुरयं परमः । वेदं पठात्र परमः क इति तदा वेत्सि किंनु बहुजल्पैः ॥ ११३६ ॥**

अयमपि शैववैष्णवयोरेवोक्तिप्रत्युक्तिरूपः श्लोकः। काशीपुरस्य वहनं उद्धरणं रक्षणमिति यावत् । तस्मिन् पटुः बाणासुरवरदायी काशीपुरवहनपटुः अयं शिव एव परमः उत्कृष्ट इति शैवेनोक्तम् । वेदं पठ अत्र परमः क इति तदा वेत्सि 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् । अग्निरवमो देवतानां विष्णुः परमः' इति श्रुतिपठने परमः को वा स्यादिति त्वमेव जानासीति प्रतिवदता वैष्णवेन अत्र त्वदुक्तयोः बाणासुरवरदायी काशीपुरवहनपटुरिति पदयोः वे वकारस्थाने दं दकारं पठेति वकारोद्वापनेन तत्रैव दकारावापनेन च बाणासुरदरदायी काशीपुरदहनपटुरयं श्रीवासुदेव एव परम इत्यर्थस्य परिकल्पनादिदमपि विकृतश्लेषवक्रोक्त्युदाहरणमेव ॥

यथावा—

**मीनेक्षणे त्यज रुषं कमनं पुरतस्स्थितं निरीक्षस्व । मन्दं जल्प शठात्रेत्यवनी श्रीशं तिरश्चकार रुषा ॥ ११३७ ॥**

इयं मानकलुषिताया भूदेव्याः प्रसादनाय भगवदुक्तौ तद्वक्रोक्तिः। मीनेक्षणे इत्यनेन निसर्गप्रसन्नलोचना त्वं नैवं जात्वपि रोषाविललोचनेति द्योतितम् । पुरतः स्थितं प्रार्थनार्थमिति भावः। कमनं त्वां कामयितारं वल्लभं मां न तूदासीनतयाऽवस्थितमिति भावः । निरीक्षस्वेति भगवत्कर्तृकप्रसादनोक्तिः । मन्दं जल्प शठात्रेति भूदेव्याः प्रत्युक्तिः। हे शठ गूढविप्रियकारिन् अत्र मम संनिकर्षे मन्दं जल्प न तूच्चैः, विधाय विप्रियमतिमात्रं निर्भरानुरागमेदुर इव स्वैरं मा वादीः जाने त्वामिति भावः।

अत्र त्वज्जल्पितयोः मीनेक्षणे कमनमिति पदयोः स्थितं मं मकारं दं दकारं जल्प मकारं दकारतयोच्चारयेत्यर्थः । तदा दीनेक्षणे कदनमिति निष्पद्यते । त्वया वञ्चितां मां दीनेक्षणे इति संबोधय । कदनं मनोव्यथेति यावत् । पुरत एव स्थितं एवं वञ्चयति त्वयि स्पष्टमेवाग्रे स्थितं न तु मीमांसनीयमिति भावः । अत्र मकारव्यावनेन तत्रैव दकारविन्यसनेन च विकृतेन श्लेषेणार्थान्तरपरिकल्पनम् ॥

यथावा—

यश्शुक्लभासितरुचिर्येन वलक्षश्रियोदधारि ग्लौः । स वृषाकपिस्त्रिजगतां नाथोऽलं वद पुनस्स एव भवेत् ॥ ११३८ ॥

अयमपि शैववैष्णवोक्तिप्रत्युक्तिरूप एव । यः शुक्ला शुभ्रा भासीती भसितसंबन्धिनी रुचिः यस्य स तथोक्तः धवळभस्मोद्धूळित इति यावत् । वलक्षश्रिया स्वतः पाण्डुरमूर्तिना येन ग्लौः शशाङ्कः उदधारि उच्छ्रतत्वेन धृतः शिरसा धृत इति यावत् । सः वृषाकपिः हरः त्रिजगतां नाथ इत्यभिप्रायवती शैवोक्तिः । वैष्णवेन पुनः—अलं पुनर्वद पर्याप्तं पुनर्ब्रूहि पर्यालोच्य ब्रूया इत्यर्थः । स एव त्वदुक्त एव त्रिजगतां नाथो भवेदित्यन्वारुह्य वद अलं लकाररहितं वदेत्यर्थान्तरगर्भीकारात्त्वदुक्तवाक्ये लकारलोपेन यः शुकभासितरुचिः येन वक्षश्श्रिया उदधारि गौरिति निष्पाद्य यः शुक इव भासिता रुचिर्यस्य स तथोक्तः मरकतश्यामल इति भावः । वक्षसि श्रीः यस्य वक्षश्श्रीः तथोक्तेन येन गौः भूः उदधारि उद्धृता 'उद्धृ-

ताऽसि वराहेण कृष्णेन शतबाहुना' इति श्रुतेः । सः वृषाकपिः भगवान् विष्णुरेव 'हरविष्णू वृषाकपी' इत्यमरः । त्रिजगतां नाथ इत्यभिप्रायपरतया योजिता । अत्र लकारस्योद्वापमात्रमिति विशेषः ॥

यथावा—

**शिव एव हि लोकस्याधीश इति त्वं ब्रवीषि ननु विद्वन् । वाचालोऽच्युत एव स इति वद तत्त्वं त्वमेव जानासि ॥ ११३९ ॥**

वाचालः वाचाटः त्वं शिव एव हि लोकस्याधीश इति ब्रवीषि ननु अच्युत एव सः लोकस्याधीश इति वद । सः शिवः अच्युत एव अच्युतात्मक एव । अच्युत एव स इति वा योजना । अच्युत एव शिवो मङ्गळमूर्तिः 'शाश्वतं शिवमच्युतम्' इति श्रुतेः । अतएव लोकस्याधीश इति वद । पक्षे वाचेति भिन्नं पदम् । सः शिवः लोच्युत एव लोकारच्यवनं प्राप्त एव लोकस्याधीशः कस्याधीशः न कस्याप्यधीश इति वाचा वद । तत एव तत्त्वं जानासि सर्वेश्वरेश्वरे भगवति नारायणे जाग्रति कस्यायमाधिपतिस्स्यादिति भावः । अत्रापि वक्रोक्तौ वर्णोद्वापमात्रम् ॥

सर्वमिदं शब्दश्लेषमूलाया वक्रोक्तेरुदाहरणम् । अर्थश्लेषमूलाया यथा—

**गोपालः क्व पशूनां पतिः क्व वा क्वाद्य तन्वि गौश्चरति । तद्वद वृषभवाहन इति नर्मवचोऽवतादुमारमयोः ॥ ११४० ॥**

अत्र गोपाल इत्यादि गौरीपरिहासवाक्यं कृष्णाभिप्राय-गर्भं पशूनांपतिः क वेत्यादिना महेश्वरवृत्तान्ताविष्करणाभिप्राय-परतया श्रिया योजितम् ॥

काक्वा यथा—

**वेगादागाः किं वा चिकीर्षसे कृष्ण ननु न जाने ऽहम्। न विजानासि नतभ्रूरित्याश्लिष्यन् हरिर्जयति गोपीम् ॥ ११४१ ॥**

अत्र कस्य कार्यस्य चिकीर्षया तव वेगादागमनमिति न वेद्मीति ऋजुमतितयाऽनुयुञ्जानां व्रजललनां प्रति न विजाना-नासीति काक्वा अर्थान्तरकल्पनम् ॥

काकुविकृतश्लेषाभ्यां मिलिताभ्यामपीयं भवति। यथा—

**प्रचुराजिपटीयांसं दाशरथे विप्रवर्णमुख्यं माम्। विद्धि प्रसन्नशस्त्रं बहुमन्ये भृगुज साधु विप्रं त्वाम् ॥ ११४२ ॥**

अयं भार्गवराघवयोस्संवादरूपश्श्लोकः। तत्र प्रचुरसमर-पटुतरं ब्रह्मवर्णप्रमुखं निर्मलास्त्रं मां विद्धीति स्वस्य दुर्जयत्व-महीयस्त्वाद्यभिप्रायेण भार्गवोक्तस्य चरणत्रयस्य हे भृगुज! साधु विप्रं त्वां बहुमन्ये इति काक्वा अहो तव ब्राह्मण्यमित्या-कूतगर्भयाऽन्यथा योजनं भगवता राघवेण कृतम्। अत्रैव हे भृ-गुज! त्वां साधु सम्यक् बहु बहुलं च विप्रं विगतप्रवर्णं मन्ये इति प्रवर्णोद्धारेणार्थान्तरकल्पनं च। तथा सति चुराजिपटी-यांसं विवर्णमुख्यं सन्नशस्त्रमिति च निष्पद्यते। चुरा चौर्यं

तत्प्रचुरा आजिः युद्धं तत्र पटीयांसं 'तस्कराचरितो मार्गो नैष वीरनिषेवितः' इत्युक्तरीत्या चौर्यसमरपटुतरं पामरमुख्यं 'विवर्णः पामर' इत्यमरः। सन्नशस्त्रं विशीर्णास्त्रमिति तदर्थः॥

श्लेषकाकुभ्यां विना योजनाभेदेनार्थान्तरकल्पनेऽपीयं संभवति। यथा—

**न त्वय्यनुरक्तोऽहं नीलामनुरञ्जयेय ननु राधे।**
**वेद्मि न मय्यनुरक्तं त्वां नीलां रञ्जयन्तमेव हरे॥ ११४३॥**

अत्र त्वय्यनुरक्तोऽहं नीलां नानुरञ्जयेयेति भगवता विवक्षिताया योजनायाः यथाश्रुतमेव योजनेन राधयाऽर्थान्तरं कल्पितमिति भवति वक्रोक्तिः। यद्यप्येवंविधा वक्रोक्तिः प्राक्तनैरर्वाक्तनैर्वा न विवेचिता। तथाऽपि तादृशचमत्कृतिसद्भावाद्वक्रोक्तिरेवेयमित्यस्माभिर्व्यवेचि॥

इत्यलङ्कारमणिहारे वक्रोक्तिसरष्षणवतितमः.

## अथ स्वभावोक्तिसरः (९७)

**जात्यादिस्थस्वभावोक्तिस्स्वभावोक्तिरितीर्यते॥**

जात्यादिनिष्ठस्वभाववर्णनं स्वभावोक्तिरित्यन्वर्थसंज्ञोऽलङ्कारः। आदिपदेन गुणक्रियाद्रव्याणि गृह्यन्ते॥

यथा—

**वत्सस्मरणप्रस्नुतसुपीवरोध्नीं विलोलतरसा-**

स्नाम् । हुंभारवगम्भीरां गव्यां सायं निवर्तयति शौरिः ॥ ११४४ ॥

गव्यां गवां समूहं 'तस्य समूहः' इत्यधिकारे 'खलगोरथात्' इति यत् । सुपीवराणि ऊधांसि आपीनानि यस्यास्तां तथोक्तां 'ऊधस्तु क्लीबमापीनम्' इत्यमरः । 'ऊधसोऽनङ्' इत्यनङि 'बहुव्रीहेरूधसो ङीष्' । स्फुटार्थकमन्यत् । अत्र गोजातिस्वभावस्य वर्णनम् ॥

खञ्जितहरिनीलमदं मञ्जुलतापिञ्छपिञ्छसच्छायम् । अञ्जनयति मामकदृशमञ्जनगिरिकुञ्जधामहरिधाम ॥ ११४५ ॥

अञ्जनगिरिकुञ्जधामा यो हरिः तस्य धाम रोचिः इदं कर्तृ । मामकदृशं अञ्जनयति अञ्जनवतीं करोति अञ्जनशब्दान्मतुबन्तात् णाविष्ठवद्भावेन 'विन्मतोः' इति मतुपो लुक् । अत्र गुणस्वभाववर्णनम् ॥

इतरेतरांसघट्टनहृषिततनुरुहं विवाहवेदिगतम् । अन्योन्यप्रहिताहृतदृगन्तमाभातु दिव्यमिथुनं तत् ॥ ११४६ ॥

अत्र क्रियास्वभाववर्णनम् ॥

उरसि रमां निदधानं करयोश्चक्रं दरं च विदधानम् । कनकाम्बरं दधानं कनतान्मम मनसि फणिगिरिनिधानम् ॥ ११४७ ॥

मितसितहसितविकस्वरकपोलफलकं कुरङ्गमदतिलकम्। वृषशिखरिनित्यभोग्यं वृणीमहे मनसि किमपि सौभाग्यम् ॥ ११४८ ॥

अनयोः पद्ययोर्द्रव्यस्वभाववर्णनम् ॥

इत्यलङ्कारमणिहारे स्वभावोक्तिसरस्सप्तनवतितमः.

## अथ भाविकसरः (९८)

वर्णनादद्भुतार्थस्य वस्तुनी भूतभाविनी।
प्रत्यक्षे इव दृश्येते यत्र तद्भाविकं मतम् ॥

यत्रात्यद्भुतचरितोपवर्णनादतीतानागतयोर्वस्तुनोः प्रत्यक्षायमाणत्वं भवति स भाविकालङ्कारः। न चातीतानागतयोः प्रत्यक्षवदवभासो विरुद्धः, अत्यद्भुतवस्तुवर्णनेन भाविकानां हृदि भावनोदयात्। तथाच भावनायाः प्रकर्षेण घटत एव प्रत्यक्षायमाणत्वं भूतभाविनोरप्यर्थयोः। यथा—

वृक्षेवृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्।
असीनस्संविशंस्तिष्ठन् भुञ्जानः पर्यटन् पिबन्।
चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगत् ॥

इत्यादौ। न चेयं स्वभावोक्तिः, तत्र हि वस्तुस्वभावस्य यथावद्वर्णनेन प्रत्यक्षायमाणता। इह तु अद्भुतत्वेन। नापि रसवदाद्यलङ्कारः, यत्तत्र विभावानुभावाद्यनुसंधानेनैव रसादेर्भा-

व्यर्थं न त्वद्भुतत्वेन। न चोत्प्रेक्षा, अतीतानागतयोः प्रत्यक्षत्वेन संभावनाभावात्। नापि भ्रान्तिमान्, भावानाया अभ्रान्तिकृतत्वात्। तस्मात्सर्वोत्तीर्णो विलक्षण एवायमलंकार इति वदन्ति॥

यथा—

विकटोद्भटाट्टहासं विदलयतो दितिसुतेन्द्रहृदयतटीम्। अद्यापि सिंहशिखरिणि नरसिंहस्याभेटी स्फुटीभवति॥ ११४९॥

सिंहशिखरिणि शेषाद्रौ तदेकदेशभूते अहोबिले इति यावत्। अत्र हिरण्यकशिपुवक्षोऽन्तरविक्षोभणदक्षोल्बणसंरम्भस्य श्रीनृसिंहस्य भगवतः अत्यद्भुतातीतमहार्भटीवर्णनेन तथाविधभावनया तादृशप्रत्यक्षायमाणता। भीषणत्वोद्भावनमिदम्॥

यथावा—

जनयन्ति मोदमक्ष्णोस्सनकसनन्दनसनत्कुमाराद्याः। अद्याप्यधिभुजगाचलमाद्या मुनयो हरिं भजन्तो नः॥ ११५०॥

स्थानमाहात्म्योद्भावनमिदम्॥

यथावा—

पत्रीश्वरमधिरूढे यात्रोत्सवकौतुकादहिगिरीन्दौ। ग्राहगृहीतगजावनसंभ्रममद्याप्यमुष्य पश्यामः॥ ११५१॥

यथावा—

**सम्मर्दकुपितबलपतिवेत्रहतित्रुटितकोटिकोटी-
रान् । अद्यापि पद्मजाद्यांस्त्वद्द्वारिक्षामहे वृषाद्रि-
मणे ॥ ११५२ ॥**

यथावा—

**भवता वालिदशास्यौ भग्नौ रघुवीर दृष्टवन्तं
पूर्वम् । अहहा इत्यधुनाऽपि च सहस्रनयनं सहा-
स्रनयनं वीक्षे ॥ ११५३ ॥**

अहह आ इति छेदः । एतौ द्वावपि निपातौ यथाक्रमं वालिस्मरणजनितखेदे रावणस्मरणाद्भुते च वर्तेते । आ इतीत्यत्र 'निपात एकाजनाङ्' इति प्रकृतिभावः । अङ्गिदेवायं निपातः, स्मरणार्थकत्वात् । अनुशिष्यते हि 'वाक्यस्मरणयोराङित्' इति । अहह आ इति अयं दुःखाश्चर्यद्योतको वागारम्भसंभवोऽनुभावः । अहह आ इति अद्यापि अस्रेण शोकानन्दजन्येनास्रेण सह वर्तन्ते इति सहास्राणि 'वोपसर्जनस्य' इत्यस्य वैकल्पिकत्वान्न सहशब्दस्य सभावः । तादृशानि नयनानि यस्य तं तथाविधं अद्यापि वालिवधजनितशोकाश्रुनयनं रावणवधजनितप्रमोदाश्रुनयनं च वीक्षे इति भावः । पक्षे सहस्रनयनशब्दं अहहाः अविद्यमानः हः हकारो येन सः अहः अहः हाः हा इति वर्णः यस्य तथोक्तः हकारच्यावनेन तत्रैव हाकारेण घटित इत्यर्थः । इति हेतोः सहास्रनयनं वीक्षे उक्तरीत्या सहस्रनयनशब्दस्य तथाभूतत्वादिति भावः । इदमपि भूतविषयसाक्षात्कारवर्णनमेव । चमत्कारान्तरं तु पूर्वेभ्यो विशेषः ॥

सर्वमिदं भूतविषयसाक्षात्कारवर्णनम्। भाविष्यद्विषयसाक्षात्कारवर्णनं यथा—

**अनुदिनमनुसंधानादर्चिर्मुखसरणिभाविसंमानाः। अद्यैव वसन्ति दृशोः पद्यायां श्रीनिवास तव कृपया ॥ ११५४ ॥**

अत्र बन्धावस्थायामशक्यदर्शनत्वेनाद्भुतानामर्चिरादिमार्गसंमानानां भाविनां साक्षात्कारवर्णनम् ॥

इत्यलङ्कारमणिहारे भाविकसरोऽष्टनवतितमः.

---

## अथोदात्तसरः (९९)

---

**तदुदात्तं वस्तु यत्र वर्ण्यते सुसमृद्धिमत्।**
**अन्योपलक्षकं श्लाघ्यचरित्रं वा निबध्यते ॥**

यत्र संपत्समृद्धिमद्वस्तु वर्ण्यते, यत्र च महापुरुषसंबन्धिश्लाघ्यचरितं 'यत्रायं सारसस्स देवदत्तकेदारः' इतिवदुपलक्षकतया वा निबध्यते तत्रोदात्तालङ्कारः। उपलक्षकं ज्ञापकम्। स्वभावोक्तौ भाविके च यथावद्वस्तुवर्णनम्। तद्विपक्षत्वेनारोपितवस्त्वात्मनः प्रथमोदात्तस्यावसरः। तत्रासंभाव्यमानाविभूतियुक्तस्य वस्तुनो वर्णनं कविप्रतिभोत्थापितमैश्वर्यलक्षणमुदात्तं प्रथमम्। द्वितीयं तु महापुरुषाणामुदात्तचरितानामङ्गिभूतवस्त्वन्तराङ्गभावेनोपनिबध्यमानं चरितम्, महापुरुषचरितस्योदात्तत्वात् ॥

यथा—

वज्रशिलावालाञ्चितमरकतकलतारुणाश्मपल्ल-
विते । सह महिला विहरन्ते गृहनिवहे त्वत्कटा-
क्षिताश्शौरे ॥ १९५५ ॥

इदं समृद्ध्युदाहरणम् । अत्रासंभाव्यमानविभूतियुक्तानां भगवत्कटाक्षितानां वर्णनाल्लक्षणसंगतिः । संभाव्यमानविभूतियुक्तस्य वर्णने तु नायमलंकारः ॥

यथा—

परिखचितवज्ररेखास्फुरितमहानीलजालचा-
रुतमाः । सतटिज्जलदभ्रमदा वृषशिखरिणि भा-
न्ति ते विहारगृहाः ॥ १९५६ ॥

अत्र हि महाविभूतेर्भगवतो विहारगृहाणां वस्तुत एव संभवतीदृशविशेषः । अत एवास्य कविप्रतिभोत्थापितत्वमुक्तम् । एवंचास्य नामापि सार्थकमिति विमर्शिनीकारः ॥

श्लाघ्यचरितस्योपलक्षकत्वे यथा—

जयतु स शैलो यत्र त्यक्तास्त्रं केनचिन्निमित्ते-
न । श्रीवासमब्जचक्रे यतिराजो ग्राहयामास ॥

यतिराज भगवद्रामानुजाचार्यैः । केनचिन्निमित्तेन तोण्डमान्नृपार्थे रिपुविजयकृते वितीर्णयोश्शङ्खचक्रयोः पुनस्तद्भरदानावसरे अर्चारूपेऽस्मिन्पुनश्शङ्खचक्रधारणरूपतत्प्रार्थनलक्षणेन निमित्तेन त्यक्तास्त्रं त्यक्तशङ्खचक्रं भगवन्तं श्रीनिवासं शङ्खचक्रे ग्राहयामास । 'अजग्रहत्तं जनको धनुस्तत्' इतिवाद्विकर्मकता । अत्र—

मा भैर्षीः पुत्र भद्रं ते शङ्खचक्रौ ददामि ते ।
ताभ्यां गच्छ पुरीं दिव्यां तौ ते शत्रून् हनिष्यतः ॥
इत्युक्त्वा प्रददौ तस्मै ताभ्यां सह जगाम सः ।
तौ च शत्रून्निहत्याशु कृत्वा राज्यमकण्टकम् ॥
आजग्मतुः क्षितिभृता सार्कं देवस्य संनिधिम् ।
राजा देवं ववन्देऽथ स्तुत्वा स्तोत्रैरनेकशः ॥
वरं वरय भद्रेति देवो राजानमब्रवीत् ।
राजा—ममायुधप्रदानस्य ख्यात्यै देवोत्तम प्रभो ॥
अर्चाबिम्बे शिलाबिम्बे चक्रशङ्खे न धारय ।
इति संप्रार्थितो देवो न दधार पुनश्च तौ ॥
अदृश्यौ तिष्ठतश्चोभौ पार्श्वतश्शार्ङ्गधन्वनः ॥

इत्यादिवेंकटाद्रिमाहात्म्यान्तर्गतब्राह्मपुराणकथाभगवद्भाष्यकारकारितश्रीनिवासशङ्खचक्रपरिग्रहकथा चेहानुसंधेया । अत्र श्लाघ्यस्य भगवद्रामानुजाचार्यकारितश्रीनिवासशङ्खचक्रधारणरूपमहापुरुषचरित्रस्य वर्णनीयं वेंकटाद्रिं प्रत्युपलक्षकत्वम् ॥

यथावा—

**स शिलोच्चयो विजयतां यत्रामृतदोऽप्यशेषविबुधानाम् । कंचन विबुधं तातेत्यामन्त्र्यायाचतामृतं जगज्जनकः ॥ ११५८ ॥**

अनेकेषां विबुधानां देवानां विदुषां वा अमृतदः सुधाप्रदः निश्श्रेयसप्रदो वा जगज्जनकः श्रीनिवासः कंचन विबुधं श्रीशैलपूर्णनामानं महात्मानं विपश्चितं तातेति आमन्त्र्य संबोध्य अमृतं सुधां निश्श्रेयसं वा । वारीति तु तत्त्वम् । अयाचत दवीयस्तरात्तुम्बुरुतीर्थाद्नुदिनं स्वाराधनकृते तीर्थानयनकैंकर्य-

मारचयत्यमुष्मिन् कृपया तादृशसार्वकालिकश्रमं तस्य परिजिहीर्षुश्शबरवेषधरो भगवान् श्रीनिवासस्तादृशभूमिकया श्रिया सह मध्येमार्गमभ्येत्य तं तत्तीर्थं ययाचे । स च तं शबरमेव मत्वा न व्यतारीद्भगवदर्हणायानीयमानं तीर्थम् । अददाने च तस्मिंस्तत्तीर्थं भगवांस्तदुत्तमाङ्गधृतं तदुदकुम्भं निर्भिद्य तत्प्रस्रुतां वारिधारामास्येनागृह्णात्सह जायया । भगवदर्हणार्थमानीयमानं तीर्थं शबरेण दूषितमिति तदवशिष्टमखिलमपि तीर्थं तत्रैव परिहृत्य पुनस्तरां तदानयनाय तुम्बुरुतीर्थं प्रति प्रस्थिते च तस्मिन् भगवान् कृपया स्वमैश्वरं रूपं प्रदर्श्य नेतःपरमनुदिनं तुम्बुरुतीर्थाद्दवीयसो मदर्हणायाहरणीयं पानीयं, अलमेतावतैव कैंकर्येण तुष्टोऽस्मीत्यभिधाय—

यस्तातेति मयाऽऽहूतस्स तात इति गीयते ।

इति वरं वितीर्यान्तरधात् । इत्यैतिह्यम् । अत्र 'तातेत्यामन्त्र्य कंचिद्वनभुवि तृषितस्तोयबिन्दुं ययाचे' इति श्लोकपादार्थोऽनुकूलः । अत्राप्युक्तप्रकारेण महापुरुषचरितं शेषाचलाङ्गतया वर्णितम् ॥

अङ्गिभूतस्य वस्तुन उत्कर्षप्रतिपिपादयिषया अङ्गित्वेनोपनिबध्यमानं महापुरुषचरितमेव तदलंकाराङ्गम् । न तूपलक्षणमात्रपरतयोपात्तमित्याहुः । तेन—

**नयनायनगोचरतामयते द्विसहस्रनयनगिरिराजः । वित्रासिनीं रिपूणां यत्राऽदत्ताद्भुतां गुहश्शक्तिम् ॥ ११५९ ॥**

इत्यादौ नायमलंकारः । अत्र हि षाण्मातुरचरितमुपलक्षणमात्रं विवक्षितं न तु तेन गिरेः कोऽप्युत्कर्षो विवक्षितः ॥

यथावा—

कोऽपि स पुमान्विजयतां यद्घण्टा श्रुतिशिरोगुरुर्भूत्वा। उदजीवयदुक्तथमृतैर्दुर्मतकथकविषमूर्छितं भुवनम् ॥ ११६० ॥

यस्य श्रीनिवासस्य घण्टा कर्त्री श्रुतिशिरोगुरुर्भूत्वा—

विन्नासिनी विबुधवैरिवरूथिनीनां
पद्मासनेन परिचारविधौ प्रयुक्ता।
उत्प्रेक्ष्यते भुवि जनैरुपपत्तिभूम्ना
घण्टा हरेस्समजनिष्ट यदात्मनेति ॥

इत्युक्तरीत्या निगमान्तमहादेशिकत्वेनावतीर्येत्यर्थः। शिष्टं स्पष्टम्। अत्राङ्गिभूतस्य श्रीनिवासस्य महोत्कर्षप्रतिपिपादयिषया तद्घण्टावतारस्य भगवतो निगमान्तदेशिकस्य चरितमङ्गतया निबद्धम् ॥

इत्यलङ्कारमणिहारे उदात्तालङ्कारसर एकोननवतितमः.

---

## अथात्युक्तिसरः (१००)

अद्भुतातथ्यशौर्यादिवर्णनाऽत्युक्तिरिष्यते।

अद्भुतस्यासत्यस्य असंभावितस्य शौर्यादेर्वर्णनमत्युक्तिर्नामालङ्कारः। आदिशब्देनौदार्यकीर्त्यादेर्ग्रहणम् ॥

यथा—

बहिरन्तर्ज्वलता श्रीनाथ त्वत्तेजसाऽद्भुततमेन। ब्रह्माण्डमूषिकायां रविरुचिरावर्त्य कनकगिरिरचि ॥ ११६१ ॥

हे श्रीनाथ! बहिः अन्तश्च ज्वलता अद्भुततमेन मूषानिहितकनकरजःकणादिविलापनमात्रकारिणः प्रसिद्धादग्नेरपि वक्ष्यमाणरविकिरणद्रवीकरणघनीभावोभयकल्पकतया विलक्षणेनेति भावः । तव तेजसा प्रतापेनैव अग्निना । मूषैव मूषिका तैजसद्रव्यविलापनी 'तैजसावर्तनी मूषा' इत्यमरः । तस्यां रवेः रुचिः जात्यभिप्रायकमेकवचनं, किरण इत्यर्थः । आवर्त्य विलाप्य कनकगिरिः अरचि । आवर्तिताः प्रभाकरकरा एव घनीभावनया सुमेरुत्वेन निष्पादिता इति भावः ॥

यथावा—

ब्रह्माण्डान्तरसृष्ट्यै परितो ज्वलता तव प्रतापेन । जगदण्डमूषिकायामस्यामावर्त्यते सुवर्णगिरिः ॥ ११६२ ॥

ब्रह्माण्डान्तरस्य 'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्' इत्युक्तप्रकारस्यान्यस्य ब्रह्माण्डस्य सृष्ट्यै सृष्टिं कर्तुं 'क्रियार्थ' इत्यादिना चतुर्थी । परितः समन्ततः ज्वलता तव प्रतापेन अस्यां विद्यमानायां जगदण्डमेव मूषिका तस्यां सुवर्णगिरिः हेमाद्रिः आवर्त्यते विलाप्यते । ब्रह्माण्डमूषिकायां सुवर्णगिरिद्रवीकरणोक्त्या प्रतापे अग्नित्वं गम्यते ॥

यथावा—

परतस्त्रिपाद्विभूतेः परितस्स्फुरता ककुत्स्थकुलभानो । अत्यर्कानलदीप्तिर्नित्यं त्वद्योधतेजसाऽरचि सा ॥ ११६३ ॥

त्रिपाद्विभूतेः 'त्रिपादस्यामृतं दिवि' इति श्रुतायाः नित्यविभूतेः परतः परितः स्फुरता ज्वलता त्वद्योधानां सुग्रीवहनुमदादीनां तेजसा प्रतापेन । सा त्रिपाद्विभूतिः अत्यर्कानलदीप्तिः अतिक्रान्तभानुवह्निज्योतिः व्यरचि । अत्र—

ब्रह्मणस्सदनात्तस्य परं स्थानं प्रकाशते ।
देवा हि यत्र पश्यन्ति दिव्यं तेजोमयं परम् ॥
अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मनः ।

इति प्रमाणमिहानुसंधेयम् । इयं शौर्यात्युक्तिः ॥

औदार्यात्युक्तिर्यथा—

स्वकटाक्षलब्धनिरवधिविभवानां दानमनवधि नराणाम् । वीक्ष्य स्वयमर्थितया तद्गृहमभ्येत्य चलति न ततश्श्रीः ॥ ११६४ ॥

अत्र श्रीरपि स्वकटाक्षाधिगतविभवानां जनानां गृहमर्थित्वेनाभ्येत्य ततो न चलतीत्यनेन तद्भक्तानामौदार्यात्युक्तिः । ततो न चलतीत्यनेन तद्भक्तसंपदोऽक्षयत्वं व्यज्यते ॥

यथावा—

अर्थितया प्रतिहारं त्वदुदञ्चितसंपदां नृणामम्ब । गच्छतिचेद्भिक्षाको गच्छतु धनदोऽपि याति भिक्षायै ॥ ११६५ ॥

कुबेरोऽपि त्वत्कटाक्षसमधिगतसंपदां जनानां गृहद्वारं भिक्षार्थं गच्छतीत्यौदार्यात्युक्तिः । भिक्षाको महेश्वर इत्यर्थान्तरमपि प्रतीयते ॥

कीर्त्यत्युक्तिर्यथा—

त्वदुपाश्रितजनसमुदययशःपयोराशिवीचिविक्षुभिताः। ब्रह्माण्डालाबुगणा निमज्जनोन्मज्जनैः प्रविलुठन्ति ॥ ११६६ ॥

इयं कीर्त्यत्युक्तिः। नन्वतिशयोक्तितोऽस्याः को भेद इति चेत् अतिशयोक्तावसदुक्तिमात्रं, अत्युक्तौ तु अतथ्यस्याद्भुतेति विशेषणादत्यन्तासदुक्तिरिति जानीहि। अतएव दण्डिना—

अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे॥
इति संभाव्यमेवैतद्विशेषाख्यानसंस्कृतम्।
कान्तं भवति सर्वस्य लोकयात्रानुवर्तिनः॥

इति। स्तनयोरतिपीवरत्ववर्णनं लोकसिद्धमित्येतादृशविशेषाख्यानेन उत्कर्षकथनेन अलंकृततया कान्तं रमणीयमेव भवतीत्युक्त्वा—

लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः।
योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जनाः॥

इत्यभिधाय—

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा।
इदमेवंविधं भावि भवत्यास्स्तनमण्डलम्॥
इदमत्युक्तिरित्युक्तमेतद्गौडोपलालितम्।

इत्यत्युक्तेरतिशयोक्तितो वैलक्षण्यं दर्शितम्॥

ननु च उदात्तालंकारादत्युक्तेः को भेदः 'वज्रशिलावाल' इत्यादिप्रागुपदर्शिततदुदाहरणे कविप्रतिभामात्रगोचरतया असंभावितायास्समृद्धेर्वर्णनेन वैलक्षण्याभावादितिचेत् अत्राहुः—'संप-

दुत्कर्षात्युक्तावुदात्तं, शौर्यात्युक्तावत्युक्तिः' इति। अन्ये तु "अत्यद्भुतकविप्रतिभामात्रगोचरासंभावितार्थवर्णनमुदात्तमित्युदात्तालंकारं लक्षयित्वा तस्यार्थस्य संपच्छौर्यौदार्यादिनानाप्रकारतया तथाविधसंपच्छौर्यौदार्याद्यत्युक्तीनां भेदे प्रमाणाभावान्नात्युक्तिः पृथक् लक्षणीया" इत्याहुः। दीक्षितानां तु तथ्यत्वातथ्यत्वाभ्यामनयोर्भेद इत्यभिप्रायमवर्णयद्वैद्यनाथः॥

इत्यलङ्कारमणिहारे अत्युक्तिसरश्शततमः.

---

## अथ निरुक्तिसरः (१०१)

---

### सा निरुक्तिर्योगतो यन्नाम्नोऽर्थान्तरकल्पनम् ॥

योगवशान्नाम्नोऽर्थविशेषाभिधायिनोऽर्थान्तरोपवर्णनं निरुक्तिर्नामालङ्कारः। यद्यप्ययं प्राचीनैर्नालंकारतया लक्षितः, तथाऽपि जयदेवीये चन्द्रालोके तृतीयमयूखे—

निरुक्तं स्यान्निर्वचनं नाम्नस्सत्यं तथाऽनृतम्।
ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्॥

इति काव्यलक्षणतया प्रतिपादितं निरुक्तमेव किंचिद्वैलक्षण्येन दीक्षितैरर्थालंकारतया पर्यगण्यतेति तदनुरोधेनास्माभिरप्ययमलंकारो लक्षितः। नाम्नः प्रसिद्ध्यनुरोधेन कृतं निर्वचनं सत्यं, अनृतं निर्वचनं त्वन्यथा कल्पितम्॥

यथा—

**अर्दयसि जनानेतान्निर्दय इव भवदुरन्तकान्तारे। जगदीश तदिह सत्यं जनार्दनोऽसीति कोऽत्रं सन्देहः॥ ११६७॥**

अत्र जनैस्सर्वान् पुमर्थान् अर्द्यते याच्यत इति व्युत्पादितस्य जनार्दननाम्नः उक्तरीत्या योगतोऽर्थान्तरकल्पनम् ॥

यथावा—

**अतिविशदमधुरतावकवचोरसस्ते यतस्सुधाब्धिसुते । तेनैव गुणेन सिता बभूव तच्छर्करा सितेति जगे ॥ ११६८ ॥**

हे सुधाब्धिसुते! इदं तद्वाग्रसेऽपि विवक्षिततद्गुणानुवर्तनाभिप्रायेण म्। शर्करा तेनैव उक्तविशेषणतावकवचोरसेनैव कर्त्रा गुणेन करणभूतया रज्ज्वा सिता अपराधानुगुणशिक्षणाय सन्दानिता। परमार्थतस्तु—तेनैव गुणेन विशदिम्ना मधुरिम्णा च गुणेनैव सिता विशदा बद्धा च 'षिञ् बन्धने' कर्मणि क्तः संबद्धेत्यर्थः। उक्तविशेषणविशिष्टश्रीवाग्रसचौर्यादेवास्या वैशद्यमाधुर्यलाभश्शर्करायाः इति भावः। अतः एवं बद्धत्वादेव सितेति जगे अगीयत 'शर्करा सिता' इति नैघण्टुकैरिति भावः। अत्र सितेति शर्करानाम्नो योगतोऽर्थान्तरकल्पनम् ॥

यथावा—

**पदवीवशात्प्रविशतो यदभूच्चन्द्रस्य विश्रमस्थानम् । त्वदुदवसितशीर्षगृहं तदुच्यते नाथ चन्द्रशालेति ॥ ११६९ ॥**

अत्र चन्द्रशालेति नाम्नोऽर्थान्तरकल्पनं योगेन ॥

यथावा—

**यद्विश्वनामरूपव्याकरणपटीयसी तव प्रेक्षा । तत्त्वां शेषगिरीश्वरमवैमि सच्छाब्दिकं हरे सत्यम् ॥ ११७० ॥**

हे हरे यत् यस्मात् तव प्रेक्षा प्रज्ञा 'प्रेक्षोपलब्धिश्चित्संवित्' इत्यमरः। पक्षे प्रकृष्टा ईक्षा 'तदैक्षत बहु स्याम्' इत्याद्युक्तसंकल्पः नामानि प्रातिपदिकानि, उपलक्षणमेतदाख्यातानाम्। तेषां रूपाणि स्वरूपाणि चिश्वानि नामरूपाणि यस्मिंस्तत्तथोक्तं यद्व्याकरणं शब्दनयः तस्मिन् पटीयसी। अन्यत्र विश्वस्य चिदचिदात्मकप्रपञ्चस्य नामरूपव्याकरणे देवादिविचित्रसृष्टितन्नामधेयकरणे पटीयसी। तत् तस्मात् एवंविधव्याकरणनयपटुतरप्रज्ञत्वात्, पक्षे तव एवंविधसंकल्पवत्त्वात्। सच्छब्दितं सन् विद्वान् इति शब्दितं उक्तं 'सन्सुधीः' इत्यमरः। पक्षे 'सदेव सोम्य' इति सच्छब्दाभिलपनीयं अत्र सच्छब्दो मानसंबन्धयोग्यत्वलक्षणं सत्त्वं प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तते। त्वां शेषस्य पतञ्जलितयाऽवतीर्णस्य भगवतोऽनन्तस्य गिरि वाचि महाभाष्ये इत्यर्थः। ईश्वरं समर्थं तदधीतिबोधप्रचारपटीयांसमित्यर्थः। 'स्वामीश्वराधिपति' इत्यादिना सप्तमी। सत्यं निश्चितं यथा स्यात्तथा। इतरत्र शेषगिरीश्वरं वेङ्कटाद्रिनाथं त्वां सत्यं 'सत्यं ज्ञानम्' इत्युक्तं परं ब्रह्म अवैमीति योजना। अत्र उक्तरीत्या शेषगिरीश्वरशब्दस्य योगेनार्थान्तरकल्पनम्॥

यथावा—

**नलिनेक्षणललनामणि नयनरुचा तव निराकृतो मीनः। विगळितसारो मन्ये विसारमेनं वदन्ति तद्विबुधाः॥ ११७१॥**

**धवलोज्ज्वलासितरुचा तव लोचनसरसिजेन मीन इह। प्रविलोपितसारोऽभूद्भुवि लोकैस्तद्विसार इत्यूचे॥ ११७२॥**

इदमेकार्थकं पद्यद्वयमानुपूर्वीवैचित्र्यप्रदर्शनमात्रसारम् 'वि-सारश्शकुली' चेति मीनपर्यायेष्वमरः। अत्र उक्तप्रकारेण विसार इति मीननाम्नो योगेनार्थान्तरकल्पनम् ॥

यथावा—

हरिणा स्वरुचिजिहीर्षुर्घनः कपोलेऽभ्यहन्यत प्रायः। अस्य भ्रश्यन्ति रदाः करकमिषान्नीरदं तदाहुरमुम् ॥ ११७३ ॥

निर्गळिताः रदाः दन्ताः यस्य स इति नीरदशब्दस्य योग-प्रदर्शनेनार्थान्तरकल्पनम् ॥

यथावा—

तव यशसैवाच्युत भुवि पवित्रितायां स्वजन्म-वैफल्यम्। जानाना विबुधधुनी जाता मन्दाकि-नीति सार्थाख्या ॥ ११७४ ॥

मन्दा अभाग्या अलसा वा अकिनी दुःखिनी 'अकं दुःखे च पापे च' इति विश्वः। अत्र मन्दाकिनीति नाम्नो योगेनार्थान्तरकल्पनम् ॥

यथावा—

स्वस्तरुरुदारमणिना त्वया परास्तस्ततस्स्वरु-र्भूत्वा। त्वां विजिगीषुस्त्वन्नखभिन्नोऽन्वर्थाभिधोऽ-भवन्नृहरे ॥ ११७५ ॥

स्वस्तरुः कल्पशाखी उदारमणिना त्वया परास्तः औदा-र्येण निरस्तः ततः वैरशुद्धिविधानाय स्वरुः दम्भोळिः भूत्वा

'शतकोटिस्स्वरुश्शम्ब' इत्यमरः। त्वां विजिगीषुस्सन् त्वन्नखैः भिन्नः विदारितः अतएव अन्वर्थाभिधः सुष्ठु अरुः यस्य सः स्वरुः बलवद्व्रण इति अन्वर्थसंज्ञकः अभवत्। 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः। नृहरे इति दम्भोलिविभेदनक्षमनखशिखातैक्ष्ण्यातिशयाभिप्रायगर्भम्। अत्र स्वस्तरुः स्वस्तरुशब्दः परास्तः पराकृतः स्तः स्त इति वर्णौ यस्य स तथोक्तः। अतएव स्वरुर्भूत्वा उक्तरीत्या स्वरुशब्दो भूत्वेत्यर्थोऽपि चमत्कारातिशयाधायकः। अत्र स्वरुरिति नाम्नो योगेनार्थान्तरपरिकल्पनं विषमालंकारसंकीर्णम्॥

यथावा—

**श्रीरुचिभारकचाकचिदूरधुतं कनकमीषदार्तमरौत्। तदिदं कार्तस्वरमिति गदितं कविभिरिति विदितमस्माभिः॥ ११७६॥**

अरौत् अक्रन्दत्। ईषदार्तः कार्तः स्वरो यस्य तत्तथोक्तं 'ईषदर्थे' इत्यनेन कोः का इत्यादेशः। अत्र कार्तस्वरमिति नाम्नः योगेनार्थान्तरकल्पनम्॥

यथावा—

**भ्रात्रा सह हरिहृदयं यान्त्या रत्नाकरो जनिनिकाय्यः। मुद्रित आसीद्रमया नूनं तदिमं जगुस्समुद्र इति॥ ११७७॥**

भ्रात्रा कौस्तुभेन सह निर्गमनं जन्मगृहस्य रत्नाकरत्वं च मुद्रणावश्यकतां द्योतयतः। अत्र समुद्र इति नामधेयस्य योगेनार्थान्तरकल्पनम्। समुद्रशब्दः संपूर्वकात् 'उन्दी क्लेदने'

इत्यस्माद्धातोः 'स्फायितञ्चि' इत्यादिना रकि सिद्धः। समीचीनाः उद्राः जलजन्तुविशेषा अस्मिन्निति कैश्चिन्निष्पादितः। तस्य योगेनान्यदर्थकल्पनम् ॥

यथावा—

निजवदनरुचिजिहीर्षोस्सितद्युतेर्हरिरवद्यति स्म करान्। शुचिकरतयैष विदितोऽवदातकरतां कुतोऽन्यथा बिभृयात् ॥ ११७८ ॥

करान् हस्तान् किरणानिति तु तत्त्वम्। अवद्यति स्म कृणत्ति स्म 'दो अवखण्डने' अस्माद्दैवादिकात्कर्तरि लट्। अन्यथा एवं करच्छेदाभावे शुचिकरतया परस्वापहरणदोषविरहेण शुद्धहस्ततया विशदकिरणतयेति वस्तुस्थितिः। विदितः एषः अवदातकरतां अवकृत्तपाणितां शुक्लांशुतामिति परमार्थस्थितिः। 'कृत्तं दातं दितं छितम्' इत्यमरः। द्यतेः कर्मणि क्तः। 'आदेचः' इत्यात्त्वम्। शिष्टं स्पष्टम्। अत्रावदातकर इति सितकिरणतारूपप्रवृत्तिनिमित्तशालिनो नाम्न उक्तरीत्या योगेनार्थान्तरवर्णनम् ॥

यथावा—

निजमन्दहसितलक्ष्मीमुमुषिषयेन्दौ करान्प्रसारयति। तानसिनोत्सपदि हरिस्तेन स सितकर इति प्रथामयते ॥ ११७९ ॥

असिनोत् अबध्नात् 'षिञ् बन्धने' लङ्। सितकरः संदानितपाणिः। अत्र सितकर इति नाम्न उक्तरीत्या योगेनार्थान्तरप्रक्लृप्तिः ॥

यथावा—

प्रद्योतनशतसदृशा विद्योतितदशदिशाऽम्ब तव महसा। विध्वंसितद्युतितया विद्युदपद्यत यथार्थमभिधानम् ॥ ११८० ॥

विध्वंसिता द्युत् संपदादित्वात्क्विप्। द्युतिः यस्यास्सा विद्युत् निष्प्रभेत्यर्थः। पक्षे विशेषेण द्योतत इति विद्युत् 'द्युत दीप्तौ' 'भ्राजभास' इत्यादिना कर्तरि क्विप्। 'विद्युत्ताटिति संध्यायां स्त्रियां त्रिषु तु निष्प्रभे' इति मेदिनी। स्पष्ट मन्यत्। अत्र विद्युदिति नाम्नो योगेनार्थान्तरकल्पनम् ॥

यथावा—

आहूतोऽपि नियोद्धुं बाहुभ्यां तव निरस्तराहुभ्याम्। नागाद्भुजगोऽच्युत तन्नागं तं प्राहुरर्थतत्त्वज्ञाः ॥ ११८१ ॥

अत्र नाग इति नाम्नः नागच्छतीति नाग इति योगादर्थान्तरं कल्पितम् ॥

यथावा—

त्वत्पदरुचिहरणात्तत्प्रहृतश्शीर्षेऽम्ब लोहितं मुञ्चन्। लोकान्तर्हित आसीद्यल्लोहितकस्तदेष शोणमणिः ॥ ११८२ ॥

हे अम्ब! यत् यस्मात् त्वत्पदरुचिहरणाद्धेतोः शीर्षे तत्प्रहृतः तेन त्वत्पदेन अभिहतः अतएव लोहितं रुधिरं मुञ्चन् शीर्षे उद्वमन् सन् लोकान्तर्हितः लोके अन्तर्धानं गतः आसीत्

त्वत्पदाभिघातहेतुकरुधिरस्राविमस्तकत्वप्रयुक्तावमानेन कस्यापि मुखं दर्शयितुमपत्रपिष्णुतया क्वापि निलीन इति भावः । तत् तस्मात् एव शोणमणिः पद्मरागः लोहितकः आसीदित्यनुषज्यते । लोहितकः लोहितं रुधिरं के शिरसि यस्य स तथोक्तः तन्नामा आसीत् । परमार्थतस्तु लोकयोः लोवर्णकवर्णयोः अन्तः मध्ये हितौ हिकारतकारौ यस्य स तथोक्तः । शब्दार्थयोस्तादात्म्यम् । लोहित एव लोहितकः तन्नामा 'लोहितान्मणौ' इति स्वार्थिकः कन् । 'शोणरत्नं लोहितकः' इत्यमरः । अत्र स्वार्थकना निष्पन्नस्य लोहितक इति नाम्नो योगान्तरेणार्थान्तरकल्पनं चमत्कारान्तरं स्फुटमेव ॥

इत्यलंकारमणिहारे निरुक्तिसरः एकशततमः.

---

## अथ प्रतिषेधसरः (१०२)

---

**प्रतिषेधः प्रतीतस्य प्रतिषेधस्य वर्णनम् ।**

यः प्रसिद्धो निषेधानुवादो ज्ञातत्वात् स्वतोऽनुपयुक्तोऽर्थान्तरगर्भीकारेण चारुतामाधत्ते स प्रतिषेधालंकारः ॥

यथा—

**न सुधांशुना न सुधया न मलयमरुता न चापि तुहिनभृता । निरुपमकरुणाशिशिरास्त्वेनैव कृता रमेश तव भक्ताः ॥ ११८३ ॥**

अत्र भगवद्भक्तानां सुधांशुप्रभृतिनिर्मितत्वाभावः प्रसिद्ध एव कीर्त्यमानस्तेषां सुधांशुप्रभृतिभ्योऽप्यातिशयिततया शैशिर्य-

मित्यमुमर्थं व्यक्तीकरोति । स च निरुपमकरुणाशिशिरा इत्यनेन परिमितशैशिर्यवद्धचस्सुधांशुप्रभृतिभ्यस्तेषां विशेषमुपदर्शयता विशेषणेनाविष्कृतः ॥

यथावा—

**नैतान्यर्जुनरथ्या दुर्दान्तानीन्द्रियाणि मम शौरे । पश्याम नियच्छैतानीशो यदि विपथ एव धावन्ति ॥ ११८४ ॥**

अर्जुनस्य रथ्याः रथवोढारोऽश्वाः । ईशो यदि समर्थो यदि विपथ एव धावन्ति एतानि इन्द्रियाणि नियच्छ नियमय पश्याम इति योजना । अत्र वक्तुरिन्द्रियाणामर्जुनरथ्याश्वत्वाभावः प्रसिद्ध एव कीर्त्यमानस्तेषां दुर्दान्ततया दुर्नियमनत्वं व्यनक्ति । तच्च दुर्दान्तानीत्यादिविशेषणमहिम्ना कविनैवाविष्कृतम् ॥

यथावा—

**न दशाननो न वाली सुदुराधर्षो ममैष दोषगणः । तमनाविध्य त्वमिमं मम नाथ भवेः कथं महाधन्वा ॥ ११८५ ॥**

अत्रापि वक्तुर्दोषगणस्य दशाननत्वाद्यभावः प्रतीत एव परिकीर्त्यमानस्तस्य दुराधर्षतां व्यञ्जयति । सा च सुधुराधर्ष इति विशेषणेन स्वोक्त्यैव प्रकाशितः ॥

**नन्दसुतेदं न पयो न दधि न मण्डं नचापि**

नवनीतम् । हन्त हरेः किंन्विदमिति मनःकषायं ममातिकटु हेयम् ॥ ११८६ ॥

इदं किंन्विति किंवस्त्विति हरेरिति योजना। मनसः कषायं रागादिवासनां प्रसिद्धनिम्बादिक्वाथनिष्पादितं कषायं च 'निर्यासेऽपि कषायोऽस्त्री' इत्यमरः। अत्र वक्तुर्मनःकषायस्य पयस्त्वाद्यभावः प्रसिद्ध एव कथ्यमानस्तस्या स्वादुतमक्षीरादिहरण एव तवादरः न त्वस्मदीयजुगुप्सिततरमनःकषायहरणे इति परिहासमभिप्रैति। स च अतिकटु हेयमिति विशेषणाभ्यां कषायमिति विशेष्येण च प्रादुष्कृतः॥

इत्यलङ्कारमणिहारे प्रतिषेधसरो द्व्यधिकशततमः.

## अथ विधिसरः (१०३)

### सा विध्यलंकृतिर्यत्र सिद्धमेव विधीयते ।

यन्निर्ज्ञातविधानमनुपयुक्तिबाधितं सदर्थान्तरगर्भिकारेण सुन्दरतरं स विधिनामाऽलंकारः। यथाऽऽहुः—

ज्ञातार्थस्य विधानं यदुपयोगपरिच्युतम्।
अभिप्रायान्तरं गर्भीकुर्वद्विच्छित्तिशालि चेत्॥
विध्यलङ्कारमाहुस्तं साहित्यपरिशोलिनः। इति॥

यथावा—

तत्वं ब्रवीमि भगवंस्त्वं त्वं जीवस्तु जीव एव हरे। जगदीश्वरतद्दासौ जगदाते केन मतिमताऽन्यौ ॥ ११८७ ॥

अत्र परमात्मनः परमात्मत्वस्य प्रत्यगात्मनः प्रत्यगात्मत्वस्य च विधानमनुपयोगबाधितं सत्तयोः सर्वशेषित्वतच्छेषत्वसर्वज्ञत्वाज्ञत्वादिभिस्स्वभावतोऽत्यन्तवैलक्षण्यं गर्भीकरोति। तज्जगदीश्वरेत्यादिना उत्तरार्धेनाविष्कृतम् ॥

यथावा—

**अद्यप्रभृति हि लोका यूयं यूयं वयं तु वयमेव । इन्द्रियवशगा यूयं वयं तु भगवद्वशंवदा एव ॥ १९८ ॥**

अत्र यूयं वयमित्यनयोः यूयं वयमिति विधानमनुपयुक्तं सत् इन्द्रियकिंकरत्वभगवदेककिंकरत्वादिपरस्परसांगत्यानर्हतालक्षणमर्थान्तरं गर्भीकरोति। तच्चोत्तरार्धेन प्रकटितम्। अत्र—

अद्यप्रभृति हे लोका यूयं यूयं वयं वयम्।
नास्ति संगतिरस्माकं युष्माकं च परस्परम् ॥
अर्थकामपरा यूयं नारायणपरा वयम्।
वयं तु किंकरा विष्णोर्यूयमिन्द्रियकिंकराः ॥

इत्येतदनुसंधेयम्। यथावा—

**पुण्यापुण्याभ्यां यन्नहनं जन्तोस्त्वया कृतं भगवन्। अनुकूलं तद्भवतु प्रतिकूलं वाऽपि नहनमेव खलु ॥ १९९ ॥**

हे भगवन्! जन्तोः प्राणिनः पुण्यापुण्याभ्यां सुकृतदुष्कृताभ्यां कर्मभ्यां यत् नहनं बन्धनं त्वया कृतं तत् नहनं अनुकूलं पुण्यफलभूतैहिकामुष्मिकसुखकरं प्रतिकूलं पापफल-

भूततापत्रयनरकादिदुःखकरं वा भवतु नह्नमेव खलु यथा तथा वा बन्धनमेव भवति खलु न हि सुवर्णमयमपि निगळं न बन्धनायावकल्पते अयोमयमेव बन्धकमिति दृष्टं श्रुतं वेति भावः। पक्षे नह्नं नह्नमित्याकारकं पदं अनुकूलं अनुलोमतया पठितं प्रतिकूलं प्रतिलोमतया पठितं वा नह्नमेव उभयथाऽपि नह्नमित्येव निष्पद्यत इत्यर्थः। अत्र नह्नस्य नह्नत्वविधानमनुपपद्यमानं निश्श्रेयसगतिप्रतिरोधितां गर्भीकरोति। सा च पुण्यापुण्यकरणकत्वविशेषणात्प्रकाशिता। 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्यादिश्रुतिभिः पुण्यापुण्यविधूननानन्तरमेव हि निश्श्रेयसगतिः प्रतिपाद्यते। यद्वा तन्नह्नत्वविधानं भगवदितरबुमोंचत्वं गर्भीकरोति।

> पशवः पाशिताः पूर्वं परमेण समाधिना।
> तेनैव मोचनीयास्ते नान्यो मोचयितुं क्षमः॥

इति प्रमाणात् 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादिकमप्यत्रानुकूलम्। एषु विधिप्रतिषेधोदाहरणेषु अर्थान्तरसंक्रमितवाच्यलक्षणव्यङ्ग्यार्थसद्भावेऽपि न ध्वनित्वव्यपदेशः, तेषां व्यङ्ग्यानां 'निरुपमकरुणाशिशिरा। जगदीश्वरतद्दासौ' इति स्वोक्त्यैवाविष्करणात्। ननु चाक्षेपालङ्कारावान्तरभेदत्वेन विधिप्रतिषेधयोः पूर्वमुक्तेर्न पृथगलंकारतया परिगणनमुचितमिति चेत् बाधितयोस्तयोराक्षेपभेदत्वमभ्यधायि प्राक्। इह तु सिद्धयोरलंकारतेति गृह्यताम्॥

इत्यलंकारमणिहारे विधिसरञ्चधिकशततमः.



# अथ हेतुसरः (१०४)

---

**साकं हेतुमता हेतुरुक्तश्चेद्धेतुरीरितः ।**

कार्यस्य कारणेन सह वर्णनं हेत्वलंकार इत्यर्थः । अयं जयदेवेन चन्द्रालोके तृतीयमयूखे कार्यनाम्ना काव्यलक्षणतया व्यवहृतः । यथा –

> कार्यं फलोपलम्भश्चेद्व्यापाराद्वस्तुतोऽथवा ।
> असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥

इति । दीक्षितैस्तु अयमपि चमत्कारितयाऽलंकारेषु परिगणितः ॥

यथा—

**परिपालनाय जगतामवतारस्तव न चात्र संदेहः । मत्पालनाय चिरयसि कस्मादिति मे रमेश संदेहः ॥ १११० ॥**

अत्र जगत्परिपालनावतारयोः कार्यकारणयोस्सहवर्णनम् ॥

यथावा—

**मरकतकं फणिशिखरिणि किमपि तदमराद्यतां प्रपद्य तराम् । भुवनमधःकृतपङ्कं विरचयितुं कतकतामहो धत्ते ॥ ११११ ॥**

फणिशिखरिणि किमपि तत् लोकोत्तरमिति यावत् । मरकतकं गारुत्मतं अमराद्यतां देवोत्तमत्वं श्रीनिवासत्वमित्यर्थः । भुवनं विष्टपं सलिलं च अधःकृतः अधोभागं नीतः तिरस्कृ-

तश्च पङ्कः कर्दमः कलुषं च यस्य तत्तथोक्तं विरचयितुं कत-कतां पङ्किलाम्बुप्रसादकवृक्षविशेषफलतां धत्ते । अहो आश्चर्य-मेतत् । यद्वारुत्मतं श्रीनिवासतां प्राप्य कतकतां धत्त इति । मरकतकमिति पदं अमराद्यतां मश्च रश्च मरौ आद्यौ वर्णौ यस्य तत् मराद्यं तन्न भवतीत्यमराद्यं तस्य भावः तत्ता तां प्रपद्य कतकतां धत्ते मरकतकशब्दः प्राथमिकमकाररेफयोरुह्रासने कत-कमिति निष्पद्यत इत्यर्थान्तरं च चमत्कारि । अत्र कतकता-धारणस्य हेतोः भुवनपङ्काधःकरणेन हेतुमता सह वर्णनं श्लेष-मूलकाविरोधोत्तम्भितम् ॥

यथावा—

**प्राप्तश्शुभवर्तित्वं सुश्रीराज्याभिषेकतो भग-वन् । सुमहानाकुलदीपस्तमोविधूत्यै विभाति भवदीयः ॥ ११९२ ॥**

हे भगवन् शुभे वर्तत इति शुभं वर्तयतीति वा शुभ-वर्ती तस्य भावः शुभवर्तित्वम् । पक्षे शुभा वर्तिः दशा यस्य तत्त्वं 'वर्तिर्दीपदशागात्रलेपयोर्मणिरञ्जने' इति रत्नमाला । प्राप्तः राज्याभिषेकतः सुश्रीः । सुश्रीराज्येत्यत्र 'रो रि' इति रेफ-लोपे 'ढ्रलोपे' इति दीर्घः । पक्षे आज्याभिषेकतः सुश्रीः सुमहाः ना कुलदीपः इति छेदः । शोभनं महः उत्सवः यस्य स तथोक्तः 'नित्योत्सवो भवेत्तेषाम्' इत्युक्तरीत्या निर-न्तरोत्सवशाली महातेजस्वीति वा । 'महस्तूत्सवतेजसोः' इति सान्तनानार्थेष्वमरः । कुलदीपः स्वान्वयप्रकाशकः भवदीयः ना पुमान् । पक्षे भवदीयः सुमहांश्चासौ अनाकुलदीपश्च अनश्वरः

प्रदीप इत्यर्थः । तमसः तमोगुणस्य तिमिरस्य च विधूत्यै तिरस्काराय विभाति । अत्र प्रकृताप्रकृतगोचरश्लेषे भगवद्भक्तप्रकाशस्य तदीयमहादीपप्रकाशस्य च हेतोः तमोविधूतेः फलस्य च सहवर्णनम् ॥

यथावा—

ख्यातो दिव्याञ्जनधरवर्तितया येन दृशि विनिहितस्त्वम् । स खलु सुदृगब्जलोचन वेत्तुं शक्नोति गूढमप्यर्थम् ॥ ११३ ॥

दिव्यः यः अञ्जनधरः अञ्जनाद्रिः तस्मिन् वर्तत इति तथोक्तः । तस्य भावः तत्ता तया । पक्षे दिव्यं श्लाघ्यं यत् अञ्जनं तस्य धरा धारयित्री वर्तिः नयनाञ्जनलेखा तस्याः भावः तत्ता तया 'वर्तिर्भेषजनिर्माणनयनाञ्जनलेखयोः' इति विश्वमेदिन्यौ । ख्यातः त्वं येन सुदृशा दृशि लोचने विनिहितः दृष्ट इति यावत् स सुदृक् ज्ञानी । पक्षे परोक्षवस्तुसाक्षात्कारक्षमदृष्टिरित्यर्थः । गूढमपि अर्थं शास्त्रतत्त्वार्थं पक्षे निधिरूपं धनं वेत्तुं ज्ञातुं शक्नोति खलु । अत्र श्रीनिवासदर्शनतत्त्वार्थवेदनयोः अञ्जनवर्तिनयनन्यासनिधिदर्शनयोश्च श्लिष्टयोर्हेतुहेतुमतोस्सहवर्णनम् ॥

यथावा—

शुभजनकभूहरोऽवधि येन दशास्यस्स एव कोसलराट् । अवधीच्च हिरण्याक्षं तादृक्षमसदृशुभाय किल जगताम् ॥ ११४ ॥

शुभा या जनकभूः सीता तस्याः हरः दशास्यः येन कोसलराजा अवधि अहन्यत स एव कोसलराट् दाशरथिः असः स न भवतीत्यसः अकोसलराजरूप इति यावत् । 'एतत्तदोः' इति सूत्रे 'अनञ्समासे' इति पर्युदासान्न तच्छब्दस्य सुलोपः । पक्षे असः सवर्णरहितः कोसलराट् कोलराट् । पुरा वराहश्रेष्ठस्सन्नित्यर्थः । तादृक्षं शुभजनकभूहरं शुभजनिका जगत्क्षेमप्रदा या भूः पृथ्वी तस्याः हरमित्यर्थः । हिरण्याक्षं जगतां शुभाय कल्याणाय अवधीत् । अत्र रावणहिरण्याक्षवधलक्षणहेतुना सह जगच्छुभलक्षणहेतुमतः प्रतिपादनम् ॥

यथावा—

**यस्त्वयि सम्राट् प्रत्ययमातनुते भावकर्मणो- रेकम् । सोऽर्हति साम्राज्यपदं लब्धुं वृद्धं समस्त- वर्णगुरु ॥ ११९५ ॥**

हे सम्राट् राजाधिराज हे भगवन्! 'मो राजि समः क्वौ' इति समो मकारस्य मकार एव । नानुस्वारः 'सम्राजोऽग्नीन्द्रविष्णर्का यश्च स्यान्मण्डलेश्वरः' इति रत्नमाला । 'एष ब्रह्मलोकस्सम्राडिति होवाच । राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महान्' इत्यादिप्रमाणान्यत्रानुसंहितानि । यः पुमान् त्वयि विषये भावकर्मणोः मनःकर्मणोः । इदं वचसोऽप्युपलक्षणम् । एकं एकरूपं—

'वचस्येकं मनस्येकं कर्मण्येकं महात्मनाम्'

इत्युक्तरीत्या अविसंवादीत्यर्थः । प्रत्ययं विश्वासं ध्यानं वा आतनुते । स पुमान् वृद्धं अभिवृद्धिमत् समस्तैः वर्णैः ब्रह्मक्षत्रादिभिः गुरु श्रेष्ठं साम्राज्यपदं आधिराज्यस्थानं लब्धुं अर्हति ।

त्वयि सम्राजि करणत्रयसारूप्येण भक्तिं विदधानः तत्क्रतुनयात्साम्राज्यवैभवमश्नुत इति भावः । अन्यत्र हे सम्राडिति सम्राट्छब्दस्यैव संबोधनम् । यः पुमान् त्वयि सम्राट्छब्दे इत्यर्थः। भावकर्मणोः भावे कर्मणि च एकं प्रत्ययं 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति विहितं ष्यञ्प्रत्ययं आतनुते विधत्ते स पुमान् वृद्धं 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति विहितवृद्धसंज्ञकं सर्वे वर्णाः अक्षराणि गुरवो यस्य तत्तथोक्तं साम्राज्यपदं साम्राज्यशब्दं लब्धुमर्हति । यस्सम्राट्छब्दात् ष्यञं विधत्ते स पुमान् वृद्धं सर्ववर्णगुरु च साम्राज्यमिति पदं प्राप्नोतीत्यर्थः । साम्राज्यमिति पदस्य उक्तरीत्या निष्पन्नस्य वृद्धत्वात्सर्ववर्णगुरुत्वाच्च तथोक्तिः । अत्र पक्षद्वयेऽपि सम्राजि प्रत्ययविधानस्य हेतोस्साम्राज्यपदलाभरूपहेतुमता सह वर्णनम् ॥

यथावा—

**सामोदसौम्यसुमनास्सत्तरुरिव सुफलदश्शुभच्छायः । स्वपदोपनतं सुखयति भगवान् संसृतिगतागतश्रान्तम् ॥ ११६ ॥**

सामोदं च सौम्यं अनुग्रं च सुमनः शोभनं मनः यस्य सः। सामोदाः सौम्याः सुमनसो देवाः नित्यसूरयो वा यस्मात्स इति वा । पक्षे ससौरभसुकुमारकुसुम इत्यर्थः। सुफलदः निश्श्रेयसपर्यन्तसकलफलप्रदः। अन्यत्र फलानि स्वपरिणतानि ददातीति तथोक्तः । अनघा सर्वदुःखनिवर्तिनी छाया दीप्तिः अनातपश्च यस्य सः भगवान् सत्तरुरिव माकन्दादिशुभवृक्ष इव संसृतिगतागतेन संसारयातायातेन, अन्यत्र सम्यक् सृतौ मार्गे गतागतेन श्रान्तं स्वपदोपनतं स्वचरणशरणागतं स्वमूले विश्र-

मार्थमागतं च जनं सुखयति । अत्रापि हेतुफलयोर्भगवत्सुख-प्रापणयोस्साहित्येन वर्णनम् । पूर्वोदाहरणेषु फलं चतुर्थीतु-मुन्भ्यां साक्षान्निर्दिष्टम् । अत्र तु गम्यमानं तदिति विशेषः । ननु काव्यलिङ्गतोऽस्य को भेद इति चेत् उच्यते—काव्यलिङ्गे हेतुहेतुमतोरुपपादकोपपाद्यभावः, इह तु प्रयोजकप्रयोज्यभावो विच्छित्त्याधायकः । हेतोर्गम्यतायामेव चारुतातिशयादलंकारत्वं न तु साक्षात्तद्वाचकपदोपादाने इति तूभयोस्तुल्यमेव । अत्रो-दाहरणे उपमासंकीर्णत्वं च विशेषः ॥

यथावा—

श्रीनिधिमुपेक्षमाणस्त्वां भवमेवोपधावति पु-मान्यः । फलमस्येदं भूतिं विन्दन् भ्राम्यति समं पिशाचैर्यत् ॥ ११९७ ॥

श्रीनिधिं सपन्निधानं श्रीनिवासं च त्वां उपेक्षमाणः पुमान् भवं संसारमेव पशुपतिमेव उपधावति सेवते तस्य इदमेव फलं—यदयं पुमान् भूतिं संपदं विन्दन् 'लक्षणहेत्वोः' इति हेत्वर्थे शता । हेतुरिह फलम् । संपदं प्राप्तुमित्यर्थः । पक्षे भूतिं भस्म विन्दन् प्राप्नुवन् भस्मोद्धूळितस्सन्नित्यर्थः । पिशा-चैस्समं तुल्यं यथास्यात्तथा, अन्यत्र रुद्रपरिवारैः पिशाचैर्दे-वयोनिविशेषैः समं साकं भ्राम्यतीति यत् एतदेव तस्य फल-मित्यर्थः । अत्रापि हेतुहेतुमतोर्भवाश्रयपरिभ्रमणयोर्वर्णनं श्लेष-संकीर्णम् ॥

केचिद्धेतुमतो हेतोश्चैक्यं हेतुं बुधा जगुः ।

कार्यकारणयोरभेदवर्णनं हेत्वलंकार इति केचित्प्राचीना ब्रुवन्ति इत्यर्थः ॥

यथा—

त्रिदशाहितकुलशिक्षा त्रिदिववधूकर्णपत्रयुगरक्षा। वेंकटशैलाध्यक्षा व्यक्तिः काऽप्यैक्षि जगदवनदक्षा ॥ १९९८ ॥

अत्र त्रिदशाहितकुलशिक्षादिहेतोर्भगवतस्तच्छिक्षादिहेतुमतश्चैक्यं वर्णितम् ॥

यथावा—

ग्राहगृहीतमतङ्गजजीवितमतिवेलभावितं कृतिभिः। कमलानयनानन्दं कलयेमहि किमपि तेजसां बृन्दम् ॥ १९९९ ॥

अत्रापि ग्राहगृहीतमतङ्गजजीवितहेतोर्भगवतः तज्जीवितेन फलेन सहैक्यं वर्णितम् ॥

यथावा—

स्मितगर्भगण्डफलकं सितरुचिरुचिराभमुल्लसत्तिलकम्। आनन्दमेव भगवन्नदस्फुरितमाननं तवावैमि ॥ २००० ॥

स्फुरितं अदः इदं तव आननं आनन्दमेव अवैमीति योजना। पक्षे अदस्फुरितं दकारस्फुरणरहितं आनन्दं आननं अवैमि। उत्सारितदकारमानन्दशब्दं आननामिति निष्पन्नं जानामीत्यर्थः। अत्रापि आनन्दहेतोर्भगवदाननस्यानन्देन हेतुमता सहैक्यम्। चमत्कारान्तरं पूर्वोदाहरणतो विशेषः ॥

नन्वभेदव्यपदेशस्याचमत्कारितया कथंकारमलंकारतेति चेन्न कार्यावश्यंभावतच्छैघ्र्याभ्यां सहकार्यन्तरनैरपेक्ष्येण कार्योत्पादनप्रत्यायने तस्य चमत्कारिताया दुर्निवारतयाऽलंकारत्वस्य निष्प्रत्यूहत्वात्। रूपके सादृश्यादभेदव्यपदेशः, इह तु कार्यकारणभावादिति भिदा। रूपकातिशयोक्तेरस्य च वैलक्षण्यं तत्रैवावादिष्म ॥

इत्यलङ्कारमणिहारे हेतुसरश्चतुरधिकशततमः.



